University of Mysore.

Oriental Library Publications

SANSKRIT SERIES No. 72

# अलङ्कारमणिहारः

श्रीमद्भिः श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रैः प्रणीतः

चतुर्थो

THE

# ALANKĀRA-MAṆIHĀRA

BY

SRI KRISHNA BRAHMATANTRA PARAKALASWAMIN

## Part IV

EDITED BY

D. SRINIVASACHAR, M.A.,

*Professor of Sanskrit, Maharaja's College*

*and*

*Curator, Government Oriental Library, Mysore*



MYSORE

PRINTED AT THE GOVERNMENT BRANCH PRESS

1929

Price Rs. 2—4—0.

॥ श्रीकृष्णब्रह्मतन्त्रपरकालमहादेशिकाः ॥



विद्वत्कविसार्वभौमाः कविगण्डभेरुण्डाः

**University of Mysore.**

Oriental Library Publications.

SANSKRIT SERIES No. 72

# अलङ्कारमणिहारः

श्रीमद्भिः श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्रैः प्रणीतः

चतुर्थो भागः



# THE ALANKĀRA-MAṆIHARA

BY

**SRI KRISHNA-BRAHMATANTRA PARAKALASWAMIN**

**Part IV.**

EDITED BY

D. SRINIVASACHAR, M.A.,

*Professor of Sanskrit, Maharaja's College*

*and*

*Curator, Government Oriental Library, Mysore.*



MYSORE

PRINTED AT THE GOVERNMENT BRANCH PRESS

1929

# विषयानुक्रमणिका.




---

# अशुद्धशोधनम्.

| पुट. | पङ्क्ति. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 17 | 1 | सदा | स्सदा |
| ,, | 10 | ाविमुखः | विमुखः |
| 23 | 1 | वर्णीनि | वर्णिनि |
| ,, | 3 | वर्णिर्ना | वर्णिनी |
| 25 | 16 | म्भोध | म्भोधे |
| 48 | 6 | शब्दा | शब्द |
| 102 | 24 | स्सदेह | स्संदेह |
| 148 | 20 | अधर्शार्ष | अधश्शीर्ष |
| 153 | 11 | घ्रज | व्रज |
| 156 | 23 | उदत्त | उदात्त |
| ,, | ,, | संवन्धे | संबन्धे |
| 162 | 4 | गंत स्स | गतेस्स |
| 171 | 2 | इत्यर्था | इत्थमर्था |
| 200 | 17 | दयाते | दयते |
| 215 | 11 | न्न्यास | न्यास |
| 221 | 17 | वैश्योः | वैश्ययोः |
| 224 | 24 | जाननां | जनानां |
| 242 | 12 | मया | माया |
| 256 | 20 | अभिमा | अभीमा |

श्रीः

# अलंकारमणिहारे चतुर्थभागः



## रसवदलङ्कारादिनिरूपणम्

इत्थं यथामति प्राचामर्वाचां च मतान्यलम् ।
प्रविचार्य शतं साग्रमलंकारा निरूपिताः ॥
रसभावतदाभासभावशान्तिनिबन्धनाः ।
रसवत्प्रेयऊर्जस्विसमाहितमिति श्रुताः ॥
अपराङ्गव्यङ्ग्यभेदा ये प्रोक्ताः प्राक्तनैर्बुधैः ।
अलंकारत्वमापन्नाश्चत्वारस्तेऽतिसुन्दराः ॥
भावस्य चोदयस्संधिश्शबलत्वमिति त्रयः ।
एवं सप्ताप्यलंकारा निरूप्यन्तेऽपरेऽधुना ॥

अत्रेयं रससिद्धान्तपद्धतिर्बालबोधकृते दिङ्मात्रं प्रदर्श्यते । रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयनिर्वेदाख्याः नव चेतोवृत्तिविशेषा वासनात्मतया सदाऽवस्थायिनः आनन्दाङ्कुरपूर्वावस्थारूपाः—

विरुद्धा अविरुद्धा वा यां तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावस्स्थायिपदास्पदम् ॥

इति भरतमुनिना विरुद्धाविरुद्धसजातीयविजातीयभावान्तरातिरस्कृतानन्दसूक्ष्मावस्थात्वेन लक्षिताः स्थायिनो नाम भावाः। तेषां चेतोवृत्तिविशेषाणां कारणकार्यसहकारिणः विभावानुभावव्यभिचारिभावशब्दैः काव्ये नाट्ये च प्रतिपाद्यन्ते। तद्यथा-रतिर्नाम स्थायी भावः तस्याः रतेः कारणानि लोकसिद्धानि तरुणनायकरहोदेशावस्थानकोकिलालापमाकन्दमन्दमारुतचन्द्रो-द्गमधुकरलतागृहवापीजलदस्तनितादीनि। तत्कार्याणि दर्शन-स्पर्शनोपगूहनचुम्बनभुजवेल्लनादीनि। सहकारिणो निर्वेदादिभेदेन त्रयस्त्रिंशत्। यथा—

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः।
आलस्यं चैव दैन्यं च चिन्ता मोहस्स्मृतिर्धृतिः॥
व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च॥
सुप्तिर्विबोधो हर्षश्चाप्यवहित्थमथोग्रता।]
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।
त्रयस्त्रिंशदमी भावास्समाख्यातास्तु नामतः॥

इति मुनिना लक्षिताः। एते च यथासंभवं नवानामपि स्थायिनां सहकारिणः। प्रकृते रतिरूपशृङ्गारस्थायिनः औत्सुक्यविस्मयावेगहर्षचपलतादयस्सहकारिणः। हासरूपस्थायिनो विकृतवस्तुदर्शनादयो विभावाः। वदनविकासनरदनप्रकाशनप्रभृतयोऽनुभावाः चापलत्रासादयो व्यभिचारिण इति। अनयैव दिशा रसान्तराणामपि विभावादयो रसार्णवसुधाकरादिप्रबन्धदर्शिभिरुन्नेयाः। एवममीभिर्विभावानुभावव्यभिचारिभिः काव्ये

श्लोकानुसंधानप्रतीतैः नाट्ये अभ्यासपाटवनिर्वर्तितवाचिकाङ्गि-काद्यभिनयैश्चाभिव्यञ्जितो रत्यादिस्सामाजिकनिष्ठः स्थायीभावो रसः। तदुक्तं मुनिना—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। इति संक्षेपः॥

## अथ रसवदलंकारसरः (१०५)

### रसे रसाङ्गे भावाङ्गेऽप्येष्वाहू रसवद्बुधाः।

रसो यत्र रसस्य भावस्य वा अङ्गं भवति तत्र रसवन्नामाऽलंकारः। रसस्य भावस्य वा प्राधान्ये तु ध्वनित्वमेव। अतएव ध्वनिकारः—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः॥

इति। भावो नाम विभावानुभावाभिव्यञ्जितो निर्वेदादिस्त्रयस्त्रिंशद्भेदः देवतागुरुशिष्यद्विजपुत्रनृपादावभिव्यज्यमाना रतिश्च। तदुक्तं दर्पणे—

रतिर्देवादिविषया व्यञ्जिता भाव उच्यते।
एवं भावतया वेद्या व्यञ्जिता व्यभिचारिणः॥ इति।

यथा—

सज्यधनुर्गुणनिर्गतशरधारापातधूतयातुदवम्।
रघुतनयमुपजुगूहे पुलकिततनुरवनिजा जनस्थाने॥ २००१॥

अत्र सीतायाः श्रीरघुनन्दनविषयकसंभोगशृङ्गारस्य तद्गतवीररसोऽङ्गम् ॥

यथावा—

इतरदुरानमपुरहरकोदण्डोद्दलनशौण्डदोर्दण्डम्। ऐक्षत सीता रघुसुतमवनतवदना विलोलतरनयना ॥ २००२ ॥

अत्रेतरसुरासुरधनुर्धरदुरासदपुरारिहितशरासनोद्दलनेन विस्मयस्य स्थायिनः परिपोषादद्भुतरसः। स च श्रीरघुनन्दनविषयकजानकीगतशृङ्गाररसस्याङ्गम् ॥

यथावा—

युद्धोद्धतेन हरिणा निर्धूतं वेपमानमुत्तकचम् । अवलोक्य भीष्मकसुतं भवति स्मेराननस्स्म बलभद्रः ॥ २००३ ॥

अत्र युद्धौद्धत्याभिव्यज्यमानभगवद्गतवीररसस्य वेपमानमित्याद्यभिव्यङ्ग्यरुक्मिगतभयानकरसाङ्गता। तस्य च बलभद्रगतहास्यरसाङ्गतेति विच्छित्तिविशेषः पूर्वस्मात् ॥

रसस्य भावाङ्गत्वे यथा —

अन्योन्याश्लिष्टाङ्गकमन्योन्यविलासविवशितान्योन्यम्। वृषगिरिकुटुम्बि मिथुनं विहरतु नस्स्वान्तनाम्नि शुद्धान्ते ॥ २००४ ॥

अत्र कविगतदिव्यदम्पतिविषयकरतिभावस्य तद्गतशृङ्गाररसोऽङ्गम्। यद्यपि रसभावमापन्नस्याखण्डब्रह्मानन्दसब्रह्मचारिणो

विभावादिपरामर्शजीवितावधेरङ्गता न संभवति । तथाऽपि रस-स्थायिभावस्याङ्गतया रसाङ्गत्वोपचार इत्याहुः ॥

यथावा—

परसुमहाज्याकर्षणरभसोन्नद्धानि रघुकुलविव-स्वन् । लोष्टानीव महान्ति क्षपाचरशिरांसि को-टिशोऽभैत्सीः ॥ २००५ ॥

हे रघुकुलविवस्वन्! परेषां द्विषतां सुमहती या आजिः युद्धं तस्याः आकर्षणे समीपानयने विषये रभसेन वेगेन हर्षेण वा उन्नद्धानि गर्वितानि उत्क्षिप्तानि वा, पक्षे सुमहत्याः अति-विपुलायाः ज्यायाः क्षितेः कर्षणरभसेन हलमुखविलेखनवेगेन उन्नद्धानि उद्स्तानि महान्ति बृहन्ति कोटिशः असङ्ख्याकानीति यावत् । 'बह्वल्पार्थात्' इति शस् । क्षपाचराणां दशाननादिनि-शाचराणां शिरांसि कोटिशः लोष्टभेदनलगुडविशेषः 'कोटिशो लोष्टभेदनः' इत्यमरः । कोटिरस्यास्तीति कोटिशः । लोमादित्वा-न्मत्वर्थीयश्शप्रत्ययः । लोष्टानीव मृत्खण्डानीव अभैत्सीः व्यदी-दरः । अत्र भगवद्गतवीररसः कविगततद्विषयकरतिभावस्याङ्गम् ॥

यथावा —

भवता शमिते समितौ दशवदने देव कृत-जगत्कदने । दुन्दुभिरतिवेलाद्भुतकोलाहलशबलि-तोऽनदन्मरुताम् ॥२००६॥

देवेति संबुद्धिः । अत्र श्रीरघुनन्दनविषयकत्रिदशगतरति-भावस्य तद्गतवीररसोऽङ्गम् ॥

इत्यलंकारमणिहारे रसवदलंकारः पञ्चाधिकशततमः.

## अथ प्रेयोलंकारसरः (१०६)

यदि भावरसाङ्गत्वं भावस्य प्रेय इष्यते ।

भावस्य भावाङ्गत्वे च प्रेयोऽलंकारो द्विप्रकारः। अयमेव भावालंकार इति कैश्चिद्व्यवह्रियते ॥

तत्र भावस्य भावाङ्गत्वे यथा —

सा मनसि संनिधत्तां तामरसनिकेतना रुचां विततिः । प्रत्यष्ठापि ययैव हि नित्यं श्रीवेंकटेश्वरैश्वर्यम् ॥ २००७ ॥

अत्र श्रीविषयकरतिभावस्य श्रीनिवासविषयकरतिभावोऽङ्गम् ॥

भावस्य रसाङ्गत्वे यथा—

वाणीपतिसनकादिमवाङ्मनसाविषयभूम्नि शुभधाम्नि । व्योम्नि परमे रमेश्वर वतंसयिष्ये कदा तव पदाब्जम् ॥ २००८ ॥

अत्र कविगतशान्तरसस्य कदेति सूचितश्चिन्ताख्यो व्यभिचारिभावोऽङ्गम् ॥

इत्यलंकारमणिहारे प्रेयस्सरष्षडुत्तरशततमः.

## अथोर्जस्विसरः (१०७)

भावाङ्गतां रसाभासो भावाभासोऽथवाऽश्नुते ।

यदा तदेयमूर्जस्विनामालंकृतिरुच्यते ॥

यत्र रसाभासो भावाभासो वा भावाङ्गतां प्रतिपद्यते तत्रो-भयत्राप्यूर्जस्विनामालंकारः । रसाभासो नाम रत्यादेरनौचित्येन प्रवृत्तिः 'रसाभासस्तु रत्यादेरनौचित्यप्रवर्तनम्' इत्युक्तलक्षणात् ॥

यथावा—

नारायणधरणीधरनाथ त्वय्येव लीयतां मम धीः।
न पृथग्जनमतिरिव बहुवल्लभता दूषिता भवतात् ॥

अत्र समासोक्तिबलेन पृथग्जनमतौ स्वैरिणीत्वप्रतीत्या तद्ग-तश्रृङ्गाररसाभासस्य कविगतभगवद्विषयकभावाङ्गत्वम् । अत्र श्रृङ्गाररसस्य बहुषु वल्लभेष्वनौचित्येन प्रवृत्तत्वादाभासत्वम् । यथाऽऽहुः—

एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितो बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥ इति ॥

यथावा--

त्वच्चक्रविलूनान्युधि वीरान्दिवि नाथ लब्धदि-व्यतनून् । एकैकैव बहून् सुरललनाऽवृणुतैवमप्य-शिष्यत तैः ॥ २०१० ॥

अत्रापि पूर्ववत् योषितो बहुसक्तिरूपरसाभासस्य कवि-गतभगवद्विषयकभावाङ्गत्वम् ॥

यथावा—

विन्दतु चिराय विजयं सौन्दर्यं कोसलेश्वरकु-

लेन्दोः। यदवेक्ष्य मदनकलुषास्त्रिय इव मुनयोऽपि दण्डकारण्ये ॥ २०११ ॥

अत्र मुनीनां श्रीरघुनन्दनविषयकश्रृङ्गाररसस्यानौचित्येन प्रवृत्तेराभासत्वं, तस्य च कविगतभगवत्सौन्दर्यविषयकभावाङ्गत्वम् ॥

यथावा—

क्क वशी त्वं सुकुमारः क्क नु शूर्पणखाऽतिकामुकी रौद्री। रूप्यं त्वां दाशरथे प्राप्यानिच्छन्तमाप वैरूप्यम् ॥ २०१२ ॥

प्रशस्तं रूपमस्य रूप्यः 'रूपादाहतप्रशंसयोर्यप्' इति यप्प्रत्ययः। 'रूप्यं प्रशस्तरूपेऽपि' इत्यमरः। अत्र शूर्पणखायामेकत्रैवानुरागाद्वा अनौचित्येन प्रवृत्तेर्वा श्रृङ्गाररसस्याभासत्वम्। स च कविगततद्विषयकरतिभावाङ्गम्। विषमालङ्कारसंकीर्णत्वरूपविच्छित्तिविशेषोऽत्र द्रष्टव्यः ॥

सर्वमिदं रसाभासस्य भावाङ्गत्वे उदाहरणम्। भावाभासस्य भावाङ्गत्वे यथा—

सर्वो ममावनभरो दर्वीकरगिरिपते त्वयि न्यस्तः। रक्षसि चेद्रक्षामुं त्यक्षसि चेत्त्यज न जातु निर्विद्ये ॥ २०१३ ॥

न निर्विद्ये निर्वेदं न प्राप्नोमि। अत्र गर्वरूपभावस्यानौचित्येन प्रवृत्तेराभासता। स चाभासः भगवद्विषयकभावं प्रत्यङ्गभूतः ॥

इत्यलंकारमणिहारे ऊर्जस्विसरस्सप्तोत्तरशततमः

## अथ समाहितसरः (१०८)

समाहितं भावशान्तेर्भावाङ्गत्वे त्वलंकृतिः ॥

यत्र 'भावशान्तिस्त्वभिव्यक्ते प्रशमे व्यभिचारिणाम्' इत्युक्तलक्षणभावशान्तेर्भावाङ्गत्वम् तत्र समाहितम् ॥

यथावा—

कुटिलभ्रुकुटिविभीषणनिटिलो द्रुहिणादिदुष्प्रसादोऽपि । प्रह्लादं दृष्ट्वैव प्रासीदस्तव कियन्नु वात्सल्यम् ॥ २०१४ ॥

हे भगवन्नित्यध्याहारः । अत्र 'अपकारिषु पारुष्यमुग्रतातर्जनादिकृत्' इति लक्षितभगवद्गतोग्रताख्यभावशान्तिः कविगततद्विषयकरतिभावस्याङ्गम् । केचित्तु भावाभासस्य भावाङ्गत्वे समाहितं, भावशान्तेर्भावाङ्गत्वे भावशान्तिरित्याहुः ॥

इत्यलंकारमणिहारे समाहितसरोऽष्टोत्तरशततमः

## अथ भावोदयसरः (१०९)

भावोदयस्य भावाङ्गभावे भावोदयो मतः ।

'भावोदयस्स्यादुत्पत्तौ व्यङ्ग्यायां व्यभिचारिणाम्' इत्युक्तलक्षणस्य भावोदयस्य भावाङ्गतायां भावोदयो नामालंकारः ॥

यथा—

अम्भोधरगम्भीरे विजृम्भिते शौरिशार्ङ्गवि-

ष्फारे । अपि विज्वलति भुजोष्मणि वेपथुमभजन्त हन्त दैत्येन्द्राः ॥ २०१५ ॥

अत्र दैत्येन्द्रगतत्रासरूपभावोदयः कविगतभगवद्विषयकरतिभावस्याङ्गम् ॥

इत्यलंकारमणिहारे भवोदयसरो नवोत्तरशततमः.

## अथ भावसंधिसरः (११०)

भावाङ्गत्वे भावसंधेर्भावसंधिरलंकृतिः ॥

'भावसंधिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि' इत्युक्तलक्षणभावसंधेर्भावाङ्गत्वे भावसंधिरलंकारः ॥

यथा—

भुजबलहृतभैष्मीमुखविलोकनोत्फुल्ललोचनद्वंद्वः । चैद्याद्यभियोगवशाद्गृह्णन् शार्ङ्गं च जयति यदुवीरः ॥ २०१६ ॥

अत्र भुजबलहृतेत्यादिना शृङ्गाररसव्यभिचारिणो हर्षस्य चैद्याद्यभियोगवशातश्शार्ङ्गग्रहणेनानुभावेन वीररसव्यभिचारिण आवेगामर्षादेश्च संभूयवृत्तेः भावसंधिः । स च भगवद्विषयः कविगतरतिभावस्याङ्गम् ॥

इत्यलंकारमणिहारे भावसंधिसरो दशोत्तरशततमः.

# अथ भावशबलतालंकारसरः (१११)

भावाङ्गे भावशाबल्ये भावशाबल्यमुच्यते ।

यत्र भावशबलताया भावाङ्गत्वं तत्र भावशबलत्वं नामालंकारः । भावानां शबलता नाम पूर्वपूर्वोपमर्देन प्रवृत्तिः । यथोक्तं—'पूर्वपूर्वोपमर्देन तेषां शबलता मता' । इति । तेषां भावानामित्यर्थः ॥

यथा—(युग्मम्)

यास्याम्येव जनः किं पश्येन्मां तमसि किंनु विद्यात्सः । यदि पश्येद्ब्रूयान्मां कृष्णे रक्तां तदाऽस्मि धन्यैव ॥ २०१७ ॥

इति मन्दमन्दमन्धे तमसि चलन्तीं व्रजासिताब्जाक्षीम् । सरभसमभिमुखमुपयन् सुगाढमुपगूढवान् जयतु कृष्णः ॥ २०१८ ॥

अत्र यास्याम्येवेत्यौत्सुक्यं, जनः किं मां पश्येदिति शङ्का, तमसि किंनु विद्यात्स इति धृतिः, यदि पश्येदिति वितर्कः, ब्रूयान्मां कृष्णे रक्तामिति मतिः, तदाऽस्मि धन्यैवेति हर्षः इत्येतेषां पूर्वपूर्वोपमर्देनोत्तरोत्तरवृत्तेर्भावशबलता । सा च कविगतभगवद्विषयकरतिभावस्याङ्गम् ॥

इत्यलंकारमणिहारे भावशबलतासर एकादशोत्तरशततमः,

## अथ प्रमाणालंकाराः (११२)

प्रत्यक्षादिप्रमाणानां स्याच्चमत्कारिता यदि ।
तदा प्रमाणालंकारानष्टौ प्राहुः परे बुधाः ॥

तत्र प्रत्यक्षं यथा—

अर्थानामिन्द्रियाणां च संनिकर्षेण यद्भवेत् ।
ज्ञानं तदाहुः प्रत्यक्षं चारु चेत्तदलंकृतिः ॥

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं चारुतया वर्णितं चेत्प्रत्यक्षं नामालङ्कारः ॥

यथा—

त्वयि नाथ रुचिरवचने सुधाधरे सुन्दरेऽतिसुकुमारे । सर्वाणि सर्वगन्धे व्रजसुदृशामिन्द्रियाणि सुखितानि ॥ २०१९ ॥

अत्र प्राथमिकेन विशेषणेन श्रोत्रविषयस्य, द्वितीयेन रसनेन्द्रियविषयस्य, तृतीयेन चक्षुर्विषयस्य, तुरीयेण त्वगिन्द्रियविषयस्य, पञ्चमेन घ्राणेन्द्रियविषयस्य, सुखितानीत्यनेन सर्वेन्द्रियविषयानुभवजन्यसुखस्य च प्रतिपादनेन सर्वेन्द्रियजन्यप्रत्यक्षप्रतीतेश्चमत्कारितया प्रत्यक्षनामालङ्कारः ॥ अत्र 'सर्वगन्धस्सर्वरसः' इति श्रुतिरनुसन्धेया ॥

यथावा—

त्वत्तनुमतिदिव्यतमां त्वत्तीर्थं स्वादु तव सुर-

भितुलसीम् । तव पदमतिमृदु चरितं चासेव्य कृतार्थ इन्द्रियगणो नः ॥ २०२० ॥

अत्रासेवनकर्मभूतैः त्वत्तनुमित्यादिभिः चक्षूरसनघ्राणत्वक्-श्रोत्ररूपेन्द्रियविषयाणां पञ्चानां रूपरसगन्धस्पर्शशब्दानां आसेव्येत्यनेन तदनुभवस्य च प्रतिपादनादयमपि पूर्ववत्प्रत्यक्षालङ्कारः ॥

यथावा—

इममधुनाऽऽलोकपथं समनैषं फणिधरेऽत्र मम नाथम् । गमितो यश्श्रुतिपदवीममितोज्ज्वलभाः पुरा श्रियः कमिता ॥ २०२१ ॥

अत्र फणिधरे अधुना इमं मम नाथं आलोकपथं समनैषं अद्राक्षमित्यर्थः । पक्षे लोकपथं स्मृतिपदवीं समनैषमिति । लोकशब्दः स्मृतिवाची । 'अतोऽस्मि लोके वेदे च' इत्यत्र लोके स्मृतावित्यर्थस्य भाषितत्वात् । अमितोज्ज्वलभाः यः श्रियः कमिता पुरा श्रुतिपदवीं श्रवणसरणिं वेदवर्तनीं गमितः यश्श्रावणप्रत्यक्षविषयतां पूर्वं प्रापितस्सोऽधुना चाक्षुषप्रत्यक्षगोचरीकृतोऽस्माभिरिति भावः । पक्षे श्रुतिषु यः श्रियःपतित्वेनामिततेजस्त्वेन प्रथितस्स एव मन्वादिस्मृतिष्वपि तथात्वेनोच्यत इत्यविदमिति भावः । अत्र भगवतश्श्रावणचाक्षुषप्रत्यक्षविषयतया वर्णनम् ॥

यथावा—

चिन्तामणिगिरिशिखरे किं तावदियं तटिल्लताऽम्बुधरे । संदिह्येत्थं स्थेम्ना मन्दं निरचैषमच्युते लक्ष्मीम् ॥ २०२२ ॥

स्थेम्ना स्थैर्येण हेतुना अच्युते लक्ष्मीं निरचैषं नेयं जलधरे विद्युत् किंतु श्रीनिवासे श्रीरिति निरणैषमित्यर्थः। पूर्वत्र प्रत्यक्षमात्रं, इह तु विशेषदर्शनजन्यसंशयोत्तरप्रत्यक्षमिति विशेषः॥

इत्यलङ्कारमणिहारे प्रत्यक्षालंकारसरो
द्वादशोत्तरशततमः

## अथानुमानालङ्कारसरः (११३)

**अनुमानं लिङ्गजन्यलिङ्गिज्ञानमुदाहृतम् ॥**

लिङ्गं हेतुः धूमादिः, लिङ्गि साध्यं वह्न्यादिः। तथाच हेतुजन्यसाध्यज्ञानमनुमितिरित्यर्थः। एतच्च साधारणमनुमानम्। अस्य च कविप्रतिभोन्मिषितत्वेन सुन्दरतायां काव्यालंकारता॥

यथा—

**भुवनतलं शीतलयन् शिशिरमयूखस्त्वकारणं भगवन्। श्रीनिलय मानसं तव करुणाशिशिरं परं प्रकाशयति॥ २०२३॥**

प्रकाशनं स्फुटबोधनं तच्चानुमित्यात्मकम्। अत्र च भगवन्मानसशिशिरतारूपलिङ्गिनः शिशिरमयूखकर्तृकभुवनतलशीतलीकरणलक्षणलिङ्गजन्यत्वेनानुमानालंकारः। भगवन्मानसं करुणाशिशिरं भुवनतलशीतलीकरणनिपुणशिशिरमयूखजनिस्थानत्वादिति प्रयोगः॥

यथावा

**सामोदबाष्पपूरैः प्रेमोदयसप्रपञ्चरोमाञ्चैः। भ-**

गवन् भवदीयजने जानन्ति कृतास्पदां जना भक्तिम् ॥ २०२४ ॥

इमे जनाः भगवति भक्तिमन्तः सामोदबाष्पपूरादिमत्वादिति प्रयोगः ॥

यथावा—

यद्धर्माम्बुनिषिक्ते क्षेत्रे पुलकाङ्कुराः प्रहृष्यन्ति । तन्मन्येऽस्याश्शौरौ हृदयतटाकोऽनुरागरसपूर्णः ॥ २०२५ ॥

क्षेत्रमेव क्षेत्रमिति श्लिष्टरूपकं गात्ररूपकेदारमित्यर्थः । तस्मिन् 'क्षेत्रं शरीरे केदारे' इति मेदिनी । अत्र स्वेदाम्बुनिषिक्तक्षेत्राधिकरणकप्रहृष्टपुलकाङ्कुरत्वेन हेतुना व्रजललनायाः भगवद्विषयकानुरागरसपरिपूर्णहृदयतटाकवत्वानुमानम् । प्रयोगस्तु—इयं शौरिविषयकानुरागरसपरिपूर्णहृदयतटाका स्वेदाम्बुनिषिक्तप्रहृष्टस्वक्षेत्राधिकरणकपुलकाङ्कुरवत्त्वादित्यादिः । आद्ये पद्यद्वये लिङ्गलिङ्गिनोश्शुद्धत्वं, इह तु रूपकानुप्राणितत्वमिति वैलक्षण्यम् । कविप्रतिभोन्मीलितत्वं तु व्यक्तमेव । इह यत्र लिङ्गलिङ्गिनोस्सत्त्वं तत्र जानन्ति मन्ये शङ्के जाने नूनं अवैमि इत्यादिपदानामनुमितिबोधकत्वं, यत्र तु सादृश्यादिनिमित्तसद्भावः तत्रोत्प्रेक्षाबोधकत्वमिति विवेकः ॥

यथावा –

जडिमाऽपसर्पति यथा यथा च महती स्फुरत्यशोकश्रीः । शङ्के तथा ह्यमीषां साधूनां माधवोऽन्तरुल्लसति ॥ २०२६ ॥

जडिमा शैत्यं अज्ञानं च। अशोकानां वृक्षविशेषाणां श्रीः विकाससंपत्। अशोका शोकोपलक्षितहेयगुणरहिता श्रीः संपत् माधवः वसन्तः। श्रीनिवासश्च। 'यथा तथेति निपातौ हेत्वर्थकौ' इति गणव्याख्याने। यथा यस्मात् तथा तस्मात् इत्यर्थः यद्वा। 'यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः' इति विश्व कोशादनुमानवाचकः। अत्र जडिमापसर्पणादिलिङ्गेन माधवोल्लसनानुमानम्। अमी साश्रवः अन्तर्विलसन्माधववन्तः जडिमापसर्पणादिमत्त्वादिति प्रयोगः॥

यथावा—

अपहृत्य तव मुखद्युतिमन्तर्निशमेव दृश्यनिजरूपः। वेंकटनाथ शशाङ्कश्शङ्कान्वित एव केवलं मन्ये॥ २०२७॥

हे वेङ्कटनाथ! शशाङ्कः चन्द्रमाः शशाङ्कशब्दश्च अनयोस्तादात्म्यम्। तव मुखद्युतिं अपहृत्य अन्तर्निशमेव रात्रावेव, पक्षे अन्तः मध्ये निशं निवर्तितशाकारमेव विभ्रंशितशावर्णमेव यथा स्यात्तथा। क्रियाविशेषणत्वान्नपुंसकता। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः। दृश्यं निजरूपं स्वस्वरूपं यस्य स तथोक्तः केवलं शङ्कान्वित एव भीत एवेति मन्ये। अन्यथा रात्रावेव स्वरूपप्रकाशः कुतोऽस्येति भावः। पक्षे शशाङ्कशब्दः मध्यगतशाकारलोपे शङ्कान्वितः शङ्क इत्याभ्यां वर्णाभ्यामेवान्वित इत्यर्थः। अत्र शशाङ्कनिष्ठशङ्कान्वितत्वरूपालिङ्गिनः अन्तर्निशादृश्यनिजरूपत्वलिङ्गजन्यत्वेनानुमानम्॥

यथावा—

जाने विभाकरोऽयं शौरे त्वत्तेजसा पराभूतः।

अन्तर्गतभाः पश्चाद्विन्यस्तकरो यतसदा विमुखः॥

हे शौरे! अयं विभाकरः भानुमान्। पक्षे विभाकर इति शब्दः त्वत्तेजसा पराभूतः अतएव अन्तर्गतभाः निमग्नतेजाः अन्यत्र अन्तर्गतः मध्यभागस्थितः भाः भा इत्याकारको वर्णः यस्य स तथोक्तः। अस्मिन् पक्षे भाशब्दस्य आकारान्तस्य वर्णपरत्वेन स्त्रीप्रत्ययान्तत्वविरहान्नोपसर्जनह्रस्वः। पश्चात् विन्यस्ताः कराः येन स तथोक्तः निरस्तपौरुषत्वेनानुत्साहतया शरीर-पश्चार्धसमर्पितपाणिरिति तदनुभावोक्तिरियम्। इतरत्र पश्चात् चरमभागे विन्यस्तौ करौ ककाररेफौ यस्य स तथोक्तः सदा विमुखः अवमानेन न्यकृतवदन इति भावः। पक्षे विकारो मुखे यस्य स तथोक्तः। विभाकरशब्दस्य उपदर्शितवर्णात्मकत्वादिति भावः। अयं विभाकरः भगवत्तेजसा पराभूतः अन्तर्गतप्रकाश-त्वादिभ्यो हेतुभ्य इत्यनुमानशरीरम्। इदं च उक्तप्रकारशब्दार्थ-तादात्म्यावलीढश्लेषोत्तेजितं पूर्ववदेव। एवमग्रेऽप्यूह्यम्॥

यथावा—

गजराजो गमनेन द्विजराजः पर्यभावि वदनेन।
हरितरुणि भवत्या तन्मन्ये तावन्तरा जरालीढौ॥

हे हरितरुणि! इदं गजराजादिपराभवपटीयस्त्वद्योतनाय। अन्तरा मध्ये वयस्येव। मध्यभागे इति वस्तुस्थितिः। जरालीढौ जरसा वार्धकेन आलीढौ व्याप्तौ। त्वत्कृतपराभवनिमित्तकमना-व्यथया शीघ्रमेव जीर्णावभूतामिति भावः। पक्षे गजराजद्विजरा-जशब्दौ मध्ये ज रा इति वर्णद्वयेन व्याप्तावित्यर्थः। अत्र गज-राजद्विजराजयोरन्तरा जरालीढत्वे श्रीवदनगमनपराभूतत्वेन हे-तुना साध्येते॥

यथावा—

पुरुष तव पौरुषेण द्विषतामवधीरितं यशो मन्येऽहम् । यदिदं योषितमादावविदं शोषितमथ स्वतः क्लीबं च ॥ २०३० ॥

हे पुरुष निरुपाधिकपुरुषशब्दवाच्य ! हे भगवन्नित्यर्थः ।

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

इति स्मरणात् । अनेन कारणत्वमपि ज्ञापितं 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्' इति निर्वचनात् । तेन च सर्वज्ञत्वसर्वशक्तित्वाद्याक्षेपक्रमेण काव्यपरिभाव्यत्वादिकं द्योत्यते । तव एवंविधस्येति भावः । पौरुषेण पुरुषोचितेन भावेन कर्मणा वा अप्रधृष्यत्वादिना तेजसा वा 'पौरुषं पुरुषस्य स्याद्भावे कर्मणि तेजसि' इति मेदिनी । द्विषतां तव द्वेषिणां यशः अवधीरितं मन्ये । यत् यस्मात् इदं यशः एतच्च कर्म । द्विषतां कीर्तिमित्यर्थः । आदौ पूर्वं योषितं स्त्रियं अथ अनन्तरं कालान्तरे इति भावः । शोषितं शोषं प्रापितं व्यपगमितस्त्रीत्वमिति भावः । स्वतः स्वयमेव क्लीबं नपुंसकं च अविदं । यदिदं यशः पूर्वमेव स्त्रीत्वेन शोषितत्वेन क्लीबत्वेन चाज्ञासिषं तन्मन्ये त्वत्पौरुषेणावधीरितमेवेत्यर्थः । पुरुषोत्तमपौरुषेण स्त्रीपूर्वस्य निसर्गतश्शोषितस्य षण्डस्यावधीवणमीषत्करामिति भावः । वस्तुतस्तु यशः यश इति पदं आदौ योषितं यः यकारः उषितोऽस्मिन्निति तथोक्तं अथ अनन्तरं शोषितं शः शकारः उषितो यस्मिंस्तत्तथोक्तं क्लीबं नपुंसकलिङ्गं च अविदं यशश्शब्दमेवंरूपमज्ञासिषमित्यर्थः । शब्दार्थयोस्तादात्म्यम् । अत्र द्विषां यशसो नियमेनावधीरि-

तत्वं साध्यं, स्त्रीत्वादिना विदितत्वं साधनम्। तथाच इदं द्विषतां यशः पुरुषोत्तमपौरुषावधीरितं आदौ योषित्त्वेन शोषितत्वेन क्लीबत्वेन च विदितत्वादिति प्रयोगः॥

यथा वा—

त्वच्चक्रेण विवस्वान् संस्पर्धी नूनमाहतस्तेन।
विमुखोऽन्तर्मग्नवसुर्यददन्तो वैशसं परं प्राप्तः॥

हे भगवन्निति प्रकरणाल्लभ्यते। विवस्वान् भास्वान् त्वच्चक्रेण सह संस्पर्धी अतएव तेन समाहतः अभिहतः नूनम्। यत् यस्मात् विमुखः पराङ्मुखः अन्तर्मग्नानि वसूनि किरणाः यस्य स तथाभूतः अदन्तः विगळितरदनः परं वैशसं हिंसां च प्राप्तः। तस्मादभिहत इति मन्ये इति योजना।

पक्षे—विवस्वानित्याकारकश्शब्दः विमुखः विकारो मुखे यस्य स तथोक्तः परं परत्र विद्यमानं शसं शस्प्रत्ययं द्वितीयाबहुवचनं प्राप्तः अदन्तः अत् इत्याकारकवर्णद्वयं अन्ते यस्य स तथोक्तः वै इति निपातः प्रसिद्धौ शस्परकत्वे विवस्वत् इत्यवस्थानात्तथोक्तिः। शस् इत्युपलक्षणं टादीनामपि। सर्वनामस्थानपरकत्वे नुमो विधानेन अदन्ततायाः अश्रवणात् शसं परं प्राप्तः अदन्त इत्यभिहितम्। अत्र विवस्वतो भगवच्चक्रसमाहतत्वं विमुखत्वादिहेतुभिस्साध्यते॥

अत्रेदमवधेयम्—जानन्ति मन्ये इत्यादिपदोपादाने वाच्यमनुमानं, यथा 'सामोदबाष्पपूरैः' इत्याद्युदाहरणेषु। प्रकाशयतीत्यादिलक्षकपदोपादाने लक्ष्यं, यथा 'भुवनतलम्' इति प्राथमिकोदाहरणे। तदन्यतरानुपादाने साध्याक्षिप्तायामनुमितौ प्रतीयमानम्॥

तद्यथा -

त्वच्चरणरुचितुलायां हरे प्रवालो बहिष्कृतिं प्राप्तोऽभूत् । प्रमुखस्सन्वामध्यो यद्भजतेऽलं विसर्गमेवान्तेऽसौ ॥२०३२॥

अत्र साध्येन हरिचरणतुलाबहिष्कृतत्वेनानुमितेराक्षेपात्प्रतीयमानत्वम । हे हरे! प्रवालः विद्रुमः त्वच्चरणरुचितुलायां बहिष्कृतिं प्राप्तः । यत् यस्मात् असौ प्रवालः प्रमुखस्सन्वा सर्वैरग्रतो गणनीयो भवन्नपि मध्यः केनापि निहीनकर्मणा अधमस्सन्नित्यर्थः । 'मध्यं न्याय्येऽवकाशेऽवलग्नके लग्नकेऽवमे' इति विश्वः । अतएव अन्ते पर्यवसाने दूरे वा अलं विसर्गमेव सर्वैरतिमात्रं विसृष्टत्वमेव भजते । पक्षे प्रवालः प्रवालशब्दः प्रमुखः प्रवर्णमुखः वामध्यः वा इत्याकारकवर्णो मध्यो यस्य स तथोक्तः लं लवर्णं अन्ते अवसाने विसर्गं च भजते इत्यर्थः ॥

यथावा—

तावकवचनामृतरससंस्पर्धी ननु वनप्रियो जननि । नप्रिय एवावगतो नेतः प्रीतो यतोऽन्ततो भाति ॥२०३३॥

ननु जननि! तावकवचनामृतरससंस्पर्धी वनप्रियः नप्रिय एव प्रीत्यविषय एव अवगतः निश्चितः । यतः कारणात् अन्ततः साधु विमर्शेऽपीति यावत् । इतः अस्मात् वनप्रियात् प्रीतः संतुष्टः जनः न भाति कश्चिदप्यनेन तोषितः क्वापि न प्रकाशत इत्यर्थः । तस्मात् वनमात्रप्रियोऽयं न जनप्रिय इति भावः अन्यत्र वनप्रिय इति शब्दः अवगतः वगतः वकारं प्राप्तः स न

भवन्तीति तथोक्तः नप्रिय एव यकारलोपे नप्रिय इत्येवावशिष्ट इत्यर्थः । किञ्च नेतः नकारेण युक्तः प्रीतः प्रि इति वर्णसमुदायेन युक्तः अन्ततः यतः यकारेण सार्वविभक्तिकस्तसिः । भाति । वनप्रियशब्दस्यैवंविधत्वादिति भावः । अत्र वनप्रियो नप्रियः श्रीवचनरससंस्पर्धित्वेन कस्यापि प्रीत्यनाधायकत्वादित्यनुमितेराक्षेपात्प्रतीयमानत्वं पूर्ववदेव । एवमग्रेऽपि ॥

यथावा—

**श्रुतिराह सुमज्ज्ञानिं पुमांसमत्रोपसर्जनीभूता ।**
**सुमती पुंवत्प्रथते परतन्त्रत्वं तदेनयोस्तुल्यम् ॥**

श्रुतिः 'सुमज्ज्ञानये विष्णवे' इति श्रुतिः पुमांसं परमपुरुषं श्रीविष्णुं सुमज्ज्ञानिं सुमती शोभनवती जाया यस्य तं तथोक्तं कल्याणगुणशालिश्रीसहधर्मिणोकमित्यर्थः । आह । अत्र अनयोः श्रीश्रीनिवासयोर्मध्ये उपसर्जनीभूता भगवद्विशेषणीभूता सुमती श्रीः पुंवत् परमपुरुषवदेव प्रथते सर्वेश्वरत्वसर्वव्यापकत्वादिना प्रसिद्ध्यति । 'ईशानो भूतभव्यस्य, एष सर्वेश्वरः' इति भगवत इव 'अस्येशाना जगतः' ईश्वरीं सर्वभूतानां' इत्यादिना श्रियोऽपि सर्वेश्वरत्वश्रवणात् ॥

"गुणतश्च स्वरूपेण व्याप्तिस्साधारणी मता
मया यथा जगद्व्याप्तं स्वरूपेण स्वभावतः ।
तया व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी"
"त्वया च विष्णुना चाम्ब जगद्व्याप्तं चराचरम्" ॥

इत्यादिभिरुभयोरपि जगद्व्यापकत्वकथनाच्च । यद्वा भगवानिव इयमपि प्राधान्येन प्रसिद्ध्यतीत्यर्थः । 'सुमज्ज्ञानये, श्रियः कान्तोऽनन्तः, ब्रह्मणि श्रीनिवासे' इति भगवत इव

'विष्णुपत्नी' इति श्रियोऽपि प्राधान्यश्रवणात् । तत् तस्मात् एनयोः श्रीश्रीशयोरुभयोरपि परतन्त्रत्वं अन्योन्यं पराधीनत्वं तुल्यम् । "त्वयि स्त्रीत्वैकान्तान्प्रादिमपतिपारार्थ्यकरुणाक्षमादीन्वा भोक्तुं भवति युवयोरात्मनि भिदा । यस्या वीक्ष्य मुख तदिङ्गितपराधीनो विधत्तेऽखिलं । यद्भूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेः" इत्याद्युक्तेरिति भावः ॥

अहं तया समाक्रान्तो ह्यहमर्थः प्रसिध्यति ।
अहमर्थसमुत्था च साऽहन्ता परिकीर्तिता ॥
अन्योन्येनाविनाभावादन्योन्येन समन्वयात् ।
तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयोः ॥

इति लक्ष्मीतन्त्राद्युक्तमपीहानुकूलम् ॥

पक्षे—श्रुतिः पुमांसं पुल्लिङ्गं सुमज्ञानि सुमज्ञानिशब्दं आह । अत्र बहुव्रीहिसमासं प्राप्ते सुमज्ञानिशब्दे उपसर्जनीभूता विशेषणतामापन्ना सुमती सुमतीति शब्दः पुंवत् प्रथते । 'स्त्रियाः पुंवद्भाषितपुंस्कात्' इत्यादिना विहितं पुंवद्भावं प्राप्ता प्रकाशते । तत् तस्मात् एनयोः सुमज्ञानिशब्दयोः परतन्त्रत्वं अन्यपदार्थप्रधानत्वं तुल्यं 'अन्यपदार्थप्रधानो बहुव्रीहिः' इत्युक्तेरिति भावः । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । अत्र श्रीश्रीशयोरन्योन्यपारतन्त्र्यं साध्यम् । इमौ श्रीश्रीशौ अन्योन्यपारतन्त्र्यवन्तौ समप्रधानैश्वर्यव्याप्तथादिमत्त्वादिति प्रयोगः । अत्रापि वाचकपदानुपादानात्प्रतीयमानमनुमानम् ॥

यथावा—

**तावकवर्णप्रेप्सुः पुरतो नीतैव शान्तिमत्तुं यदगात् । श्रीरुत्तमवरवर्णिनि निशा निराशा तदन्तरावर्णासौ ॥ २०३५ ॥**

हे उत्तमवरवर्णिनि! वरः श्रेष्ठः वर्णः सोऽस्या अस्तीति वरवर्णिनी । प्रशंसायां मत्वर्थीय इनिः । 'उत्तमा वरवर्णिनी' इत्यमरः । उत्तमा च सा वरवर्णिनी च 'सन्महत्परमोत्तम' इत्यादिना समासः । तस्यास्संबुद्धिः । तास्वप्युत्तमेत्यर्थः । 'सीता नारीणामुत्तमा वधूः' इत्येतदत्र स्मर्तव्यम् । हे श्रीः! यत् यस्मात् निशा हरिद्रा 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः । तावकं वर्णं प्रेप्सुः लिप्सुस्सती आत्मनः केवलवरवर्णिनीत्वेन उत्तमवरवर्णिन्यास्तव 'हिरण्यवर्णा, आदित्यवर्णे' इत्यादिश्रुतं अत्युत्तमं वर्णं प्राप्तुमिच्छन्तीति भावः । पुरतः तवाग्रतः नीतैव प्रापितमात्रैव न तु स्वाभीप्सितलाभार्थमुपगुञ्जानेति भावः । शान्तिरस्यास्तीति शान्तिमत् 'शरदः कृतार्थता' इत्यादाविव सामान्ये नपुंसकम् तस्य भावः शान्तिमत्वं शान्तत्वमित्यर्थः । परोक्षं त्वद्वर्णलाभे सुलभं मनोरथमात्रं कृतवती । सूर्यां हिरण्मयीम्' इति सूर्यवत्प्रकाशमानत्वेन सूर्यरूपत्वेन वा श्रुतायास्तव संनिधौ विच्छायत्वमभजतेति भावः । प्रसिद्धं हि सूर्यप्रभालीढाया हरिद्राया विच्छायत्वम् । तत् तस्मात् अन्तरा त्वद्वर्णप्रेप्सात्वत्पुरोनयनयोर्मध्ये । 'अथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युः' इत्यमरः । वर्णस्य स्वप्रेप्सितस्य तावकवर्णस्येति भावः । आप्तौ प्राप्तौ विषये निराशा निर्गळिततृष्णैवेति मन्ये इति भावः ॥

पक्षे—निशा निशेति शब्दः पुरतः प्रथमभागे नीता नि इत्याकारकवर्णेन इता शा शाइत्याकारो वर्णः अन्तिमः जघन्यः यस्य तत् तस्य भावं शान्तिमत्त्वं अगात् निशाशब्दस्य उक्तवर्णद्वयात्मकत्वादिति भावः । अन्ते स्वघटकनिशावर्णयोरन्तरे 'अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽप्रेऽन्तिकेऽन्तरे' इति रत्नमाला । रा

इत्याकारको यो वर्णः तस्य आप्तौ सत्यां निराशेत्यत्र स्यादित्यर्थोऽपि चमत्कारकः । अत्र भगवत्याः श्रियो वर्णस्य प्राप्तौ निशा निराशैव । तत्सांनिध्यमात्रेण शान्तिमत्तावाप्तेरित्यनुमानमकारः प्रतीयते ॥

यथावा—

**भगवति तव पदरुच्या भातत्वाद्भास्करोऽपि तस्कर एव । यदयं गुणसंदानितकरोऽपराह्णेऽन्तरेऽसतां गमितश्च ॥ २०३६ ॥**

हे भगवति ! तव पदरुच्या चरणलक्ष्म्या भातत्वात् भास्करोऽपि तस्कर एव चोर एव । अन्यथा अस्य त्वत्पदलक्ष्मीभातत्वायोगादिति भावः । साध्ये तस्करत्वे हेत्वन्तरं चाह—यदिति । यत् यस्मात् अयं भास्करः अपराह्णे पृष्ठभागे गुणेन रज्ज्वा संदानिताः बद्धाः कराः हस्ताः यस्य स तथोक्तः । दृश्यते हि परस्वस्तेयकृतां पश्चादाकृष्टभुजतया रज्जुभिः पाणिबन्धनम् । असतां असाधूनामेवंविधानां तस्कराणामेवेति भावः । अन्तरे मध्ये गमितश्च । कर्मण आधारत्वविवक्षया सप्तमी । यद्वा सतामित्येव छेदः । विदुषामित्यर्थः । अन्तरे बहिःप्रदेशे गमितः सद्भिर्बहिष्कृत इत्यर्थः ॥

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥

इत्यमरः । 'अन्तरं बहिर्योगोपसंव्यानयोः' इति बहिर्योगरूपेऽर्थे सर्वनामसंज्ञायाः 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पितत्वादेह केः स्मिन्नादेशः ॥

अन्यत्र भास्कर इति शब्दः भातत्वात् भाकारस्य तकारत्वा भाकारमपनीय तत्रैव तकारविन्यसमात् पदरुच्याः इति छेदः पदेषु सुप्तिङन्तात्मकेषु रुचिः अभिलाषः यस्याः तथोक्तायाः पदपरिशुत्तिवैचित्र्यादिकुतूहलिन्या इति यावत् । तव भवत्याः तस्करः तस्कर इत्येव शब्दो भवति । किंच यत् यस्मात् अयं तस्करशब्दतामापन्नो भास्करशब्दः अपराह्ने उत्तरभागे गुणेन 'दिवाविभानिशा' इत्यादिसूत्रविहितार्धधातुकटप्रत्ययनिमित्तकेन लघूपधगुणेन संदानितः युक्तः करः कृञ्धातुप्रकृतिक। करोति शब्द : यस्य स तथोक्तः। अन्तरेसतामिति समस्तं पदम् । अन्तरे इत्येतदेदन्तमव्ययं मध्ये इत्यर्थकम् । 'अथान्तरेऽन्तरा : अन्तरेण च मध्ये स्युः' इत्यव्ययेष्वमरः । अन्तरे मध्ये सः 'कस्कादिषु च' इति विहितस्सकारः 'तद्बृहतोः' इति विहितस्सुट्संबन्धिसकारश्च यस्य स तथोक्तः। तस्य भावः अन्तरेसता तां गमितः प्रापित इत्यर्थः । इदमप्याक्षिप्तमेवानुमानम् ॥

यथावा—

त्वत्कीर्तिसुधाम्भोधेश्शीतकरोऽयं कणः फणिगिरीन्दो । यत एष शीकर इति स्वत एव मनीषिभिर्व्यवह्रियते ॥ २०३७ ॥

हे फणिगिरीन्दो ! शीतकरः त्वत्कीर्तिसुधाम्भोधेः कणः। इदं साध्यं । तत्र हेतुः यत इति। यतः यस्मात् एषः शीतकरः स्वत एव शीकर इति मनीषिभिर्व्यवह्रियते। वस्तुतस्तु अतः अविद्यमानतकारः सुष्ठु अतः स्वतः विगळिततकारोऽयं शीतकरशब्दः शीकर इति व्यवह्रियत इत्यर्थः ॥

यथावा—

लोपमुपयान्ति तापास्तमांसि सकलानि यन्न-ळन्तितमाम् । तदमीषां लसति सतां हृदयाकाशे विधुस्सदा विमले ॥ २०३८ ॥

अत्र साध्ये विधुविलसनेनानुमितेराक्षेपात्प्रतीयमानत्वम् । सन्तो हृदयाकाशविलसद्विधुत्ववन्तः लुप्ततापत्वात् गळिततमस्कत्वाच्चेति प्रयोगः । श्लेषरूपकसंकीर्णमिदम् । यत्र साध्यस्याप्यनुपात्तत्वे लिङ्गमात्रस्योपात्तत्वेनागूर्यमाणं साध्यं तत्र ध्वन्यनुमानम् ॥

यथावा—

बृंहन्ति दन्तिनिवहा ह्लेषन्ते हन्त सन्ततं वाहाः । गृहचत्वरेषु महतां बहुसत्वरगा रथाश्च विहरन्ते ॥ २०३९ ॥

अत्र महतां लक्ष्मीकटाक्षपात्रत्वरूपसाध्यस्यानुमानं ध्वन्यते ॥

इत्यलंकारमणिहारे अनुमानसरस्त्रयोदशोत्तरशततमः.

## अथोपमानसरः. (११४)

संज्ञायास्संज्ञिनश्चापि संबन्धप्रत्ययो हि यः ।
सादृश्यज्ञानकरण उपमानं तदुच्यते ॥

सादृश्यज्ञानकरणकस्संज्ञासंज्ञिसंबन्धप्रत्यय उपमानम् । तदेव चमत्कारि उपमानालंकारः ॥

यथा—

तं विद्धि कौस्तुभमणिं वेंकटगिरिनाथ हृदयमणिनिवहे । योऽत्र सखे गगनान्तरतारकनिकरस्थहिमकराकारः ॥ २०४० ॥

सुमशरमिव सुकुमारं सुरतरुमिव सन्ततं महोदारम् । जलनिधिमिव गम्भीरं विदाम देवं वृषाचलविहारम् ॥ २०४१ ॥

अत्र प्रथमोदाहरणे गगनान्तरतारकनिकरस्थहिमकरसदृशाकारताशालिवेंकटगिरिनाथहृदयगतमणिनिवहमध्यस्थितं वस्तु कौस्तुभमणिपदवाच्यमित्युपमानमूलभूतातिदेशवाक्योपन्यासेन तद्वाक्यार्थज्ञानादिदं वस्तु कौस्तुभमणिपदवाच्यमित्युपमितिप्रतीतेरयमुपमानालंकारः । द्वितीयोदाहरणे तु सुमशरमिवेत्यादिवाक्यैः कन्दर्पसदृशसौन्दर्यशालित्वसुरतरुसदृशौदार्यवत्त्वजलनिधिसमगाम्भीर्यवत्त्वानामतिदेशवाक्यार्थभूतसादृश्यात्मकानां वृषाचलविहारदेवशब्दवाच्यं विदामेति तत्पदशक्तिग्रहलक्षणोपमितिफलस्य प्रतिपादनादतिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः ॥

इत्यलंकारमणिहारे उपमानसरश्चतुर्दशोत्तरशततमः

## अथ शब्दप्रमाणसरः (११५)

स शब्दो यत्तु शब्दस्य प्रमाणत्वेन कीर्तनम् । श्रुतिस्मृतीतिहासादिरूपश्शब्द इतीर्यते ॥

स्वीकार्ये श्रुत्यादीनां प्रमाणतयोपन्यासश्शब्दप्रमाणालंकारः। शब्दपदार्थमाह—श्रुतीति । आदिशब्देन पुराणाभाणकलौकिकवाक्यादीनां संग्रहः ॥

तत्र श्रुतिरूपशब्दो यथा—

नावातरः फणिगिरौ नाथ यदि त्वां कथं नु पश्येम । विनुयाम वा श्रुतिर्यं दुर्ग्रहमवदन्न चक्षुषेत्यादिः ॥ २०४२ ॥

अत्र भगवतः परस्य ब्रह्मणः चक्षुरादीन्द्रियाग्राह्यत्वे 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिश्रुतिः प्रमाणत्वेनोपन्यस्ता । आदिशब्देन 'यत्तदद्रेश्यमग्राह्यम्' इत्यादेर्ग्रहणम् ॥

यथावा –

वेत्सि मम भक्तिमवने शक्तोषि तथाऽप्युपेक्षसे कस्मात् । सर्वेश्वर श्रुतिस्त्वां सर्वज्ञं ह्याह सर्वशक्तिं च ॥ २०४३ ॥

अत्र भवतः ममोपेक्षायां मद्भक्त्यज्ञानं वा रक्षणाशक्तत्वं वेति विकल्प्य तदुभयमपि न संभवतीति ज्ञापयितुं 'यस्सर्वज्ञस्सर्ववित् । पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतिरूपं प्रमाणमुपन्यस्तम् ॥

यथावा—

त्वामद्वितीय इति यो नारायण वेद स भवति भविष्णुः । त्वन्निभमातनुषे तं तन्निगमान्तस्स विष्णुरिति वदति ॥ २०४४ ॥

हे नारायण! अनेन वक्ष्यमाणार्थस्य नारायणोपनिषद्गतत्वं सूचितम्। यः पुमान् त्वां अद्वितीय इति अप्रतिद्वंद्व इति वेद वेत्ति सः भविष्णुः वार्धिष्णुः उत्तरोत्तरश्रेयश्शाली भवतीत्यर्थः। तं एवं वेत्तारं भविष्णुं पुमांसं त्वन्निभं त्वत्सदृशं आतनुषे। तस्य सायुज्यं ददासीत्यर्थः। पक्षे तं भविष्णुशब्दं त्वन्निभमित्यत्र त्वं निभमिति छेदः 'वा पदान्तस्य' इति वैकल्पिकोऽनुस्वारस्य परसवर्णः। त्वं निभं भकारशून्यमित्यर्थः। नीत्युपसर्गपूर्वको बहुव्रीहिः। आतनुषे। तत् तस्मात् निगमान्तः नारायणोपनिषद्रूपः। स पुमान् विष्णुरिति वदति। यथाऽऽम्नायते तत्र— 'अथ नित्यो नारायणः' इत्युपक्रम्य 'निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातश्शुद्धो देव एको नारायणः। न द्वितीयोऽस्ति कश्चित्। य एवं वेद। स विष्णुरेव भवति' इति। पक्षे भविष्णुशब्दो भकारच्यावने विष्णुरित्येव भवतीत्यर्थः। अत्र स्वोक्तार्थचमत्कारे उपनिषत् प्रमाणतां प्रापिता। अत्र नारायण—वेद—अद्वितीयः—भवतीति शब्दैरुक्तोपनिषत्प्रत्यभिज्ञाप्यते॥

क्वचिच्छ्रुतेरर्थान्तरपरिकल्पनेन प्रमाणतयोपन्यासे चारुतातिशयः। यथा—

**ब्रह्म त्वां गमयति मां यो गुरुरेनं न मानवं मन्ये। तत्पुरुषोऽमानव इत्युपनिषदुक्तिः प्रमाणमिह भगवन्॥ २०४५॥**

अत्र ब्रह्मगमयितृत्वेन हेतुना आचार्यस्यामानवत्वसंभावनरूपस्वाभिमतार्थे 'तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति' इति श्रुतेः प्रमाणतयोपन्यास इति वैचित्र्यविशेषः॥

यथावा—

यद्ब्रह्म वृषगिरिगतं तज्जगतां सुकृतमेव जानेऽहम्। तत्सुकृतमुच्यत इति श्रुतिराहैताद्धि तैत्तिरीयाणाम् ॥ २०४६ ॥

अत्र 'तदात्मानं स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यते' इति स्वात्मन एवोपादानतया स्वीकारेण सुष्ठु सृज्यप्रपञ्चकरणरूपप्रवृत्तिनिमित्तेन सुकृतशब्दवाच्यतां ब्रह्मणः प्रतिपादयन्ती तैत्तिरीयश्रुतिः भगवति स्वाभिमतजगत्सुकृतरूपलक्षणे अर्थे प्रमाणतां नीता ॥

यथावा—

सर्वान्तरात्मनि त्वयि योऽन्यं यजते फणाभृदचलमणे। यजमानः पशुरिति या तां श्रुतिमेतत्परां विजानीमः ॥ २०४७ ॥

यथावा—

यजते यस्त्वामविदन्यदुनन्दन सर्वयज्ञभोक्तारम्। यजमानः प्रस्तर इति या श्रुतिरेषा हि तत्परा मन्ये ॥ २०४८ ॥

सर्वान्तरात्मनि त्वयीत्यनादराधिक्ये भावलक्षणसप्तमी। प्रस्तरो दर्भमुष्टिः पाषाणश्च। सर्वयज्ञभोक्तारं 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति गानादिति भावः। अत एव यदुनन्दनेति साभिप्रायं संबोधनम्। अत्राद्ये पद्ये श्रुत्या अन्यार्थतया कल्पितस्य यजमाने पशुत्वस्य अज्ञत्वेन हेतुना

रूपणं परिकल्पितम् । द्वितीये तु प्रस्तरकार्यकरत्वेन रूपितस्य यजमाने प्रस्तरत्वस्य पाषाणरूपार्थान्तरकल्पनं वेदितव्यम् ॥

यथावा—

मा भूवं प्रत्यक्षस्तव देव परोक्ष एव भूयासम् । तर्हि प्रियो भवेयं श्रुतिः परोक्षप्रियान् वदति देवान् ॥ २०४९ ॥

अत्र—'इदिन्द्रꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया हि वै देवाः' इति परोक्षनामग्रहणे देवानां प्रीतिं प्रतिपादयित्री श्रुतिः स्वस्य परोक्षताहेतुकप्रियत्वाशंसनरूपार्थे प्रमाणभावं गमिता ॥

यथावा—

वेंकटगिरिमात्रपतिं त्वां कथयन्तो जनाः परं मुग्धाः । विष्णुर्हि पर्वतानामधिपतिरिति गौर्जरत्यपि प्राह ॥ २०५० ॥

जरती गौरपि जीर्णः कश्चित् पशुरपि विष्णुः पर्वतानां सर्वेषामधीश्वर इति वदति । वस्तुतस्तु जरती गौः 'विष्णुः पर्वतानामधिपतिस्स माऽवतु' इति श्रुतिरित्यर्थः । हिशब्दः प्रसिद्धौ, अत्र पूर्वार्धोक्तस्वाभिमतभगवतो वेंकटगिरिमात्रपतित्वं वदतां जनानां मुग्धत्वोपपादनेऽर्थे उदाहृतश्रुतिरुपोद्बलकतया प्रमाणतामनायि ॥

यथावा –

जानासि नैव दीनानस्मान् कस्मादितीह वि-

शयो नः । वृक्ष इव स्तब्ध इति त्वां श्रुतिराहाथ किं वितर्केण ॥ २०५१ ॥

यथावा—

यदमी क्रन्दन्ति हरे त्वामवलम्ब्यापि भवपथे मनुजाः। तदचक्षुश्श्रोत्रं त्वां श्रुत्यन्तास्सांप्रतं वदन्तीति ॥ २०५२ ॥

पूर्वोदाहरणेषु श्रुतिरभिमतार्थे प्रमाणतयोपन्यस्ता । अनयोरुदाहरणयोस्तु—'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । अचक्षुश्श्रोत्रं तदपाणिपादम्' इति श्रुती अनभिमतार्थे भगवदुपालम्भनपरेण भवपथनिर्विण्णेन प्रमाणतां प्रापिते इति भिदा । स्तब्धः जडः। वास्तवार्थस्तु नन्तव्यवस्तुविरहाद्वृक्ष इवाप्रणतस्वभाव इति॥

यथावा—

विदधानस्सश्रीकान्विप्रान्कमलापते कुचेलमुखान् । न श्री रमते ब्राह्मण इति श्रुतिं वितथवादिनीं व्यदधाः ॥ २०५३ ॥

अत्र विप्राणां निश्रीकताप्रमाणभूता 'न वै ब्राह्मणं श्री रमते' इति श्रुतिः तेषां सश्रीकतानिर्वर्तनेन वितथार्थवादिताप्रकाशनायोपात्तेति पूर्वापेक्षया विशेषः ॥

स्मृतिरूपशब्दप्रमाणं यथा –

हृत्कमलं मम विमलं श्रय मृदुलं श्रीश भुजगराडचलम् । विजहीहि चिरं न वसेत्पर्वत इति वर्वृतीति हि स्मरणम् ॥ २०५४ ॥

स्मरणं स्मृतिः वर्वृतीति क्रियासमभिहारेण वर्तते। अत्र भगवतश्श्रीनिवासस्यातिमृदुलस्वहृदयाश्रयणायातिनिष्ठुरभुजगराडचलपरित्यजनप्रार्थनरूपस्वाभीप्सितार्थे 'न चिरं पर्वते वसेत्' इति मानवी स्मृतिः प्रमाणभावमनीयत ॥

यथावा—

**नमतां जेतुं वर्गं द्विषतां श्रयसे मृगेन्द्रगिरिदुर्गम्। सर्वेषां दुर्गाणां स्मरन्ति गिरिदुर्गमेव हि ज्यायः ॥ २०५५ ॥**

नमतां शरणागतानां सम्बन्धिनं द्विषतां वर्गं कामाद्यरिषड्वर्गं जेतुं मृगेन्द्रगिरिदुर्गं शेषाद्रिदुर्गं सिंहादिक्रूरसत्वाधिष्ठितं दुर्गमित्यपि गम्यते। अत्र श्रीनिवासस्य भगवतः शरणागतसंबन्धिद्विषद्वर्गविजयफलकत्वेन संभाव्यमानमृगेन्द्रगिरिदुर्गाश्रयणरूपेऽर्थे—

सर्वेणापि प्रयत्नेन गिरिदुर्गं समाश्रयेत्।
एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥

इति मानवी स्मृतिरेव प्रमाणत्वेन प्रदर्शिता ॥

यथावा—

**दुर्गमचाक्षुषममतिः प्रपद्यतां नाच्युतं यदाह मनुः। दुर्गमचक्षुर्विषयं न हि प्रपद्येत कर्हिचिदपीति ॥ १०५६ ॥**

दुर्गे दुर्गमं 'क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति' इति श्रुतेः 'दुर्लभो दुर्गमो दुर्गः' इति नामसहस्रपाठाच्च। अचाक्षुषं चक्षुरगोचरं 'न चक्षुषा गृह्यते' इति श्रुतेः। ईदृशं अच्युतं 'यस्मात्प्राप्ता न च्यवन्ते सोऽच्युतः' इति निरुक्तिविषयं श्रीनिवासं परं ब्रह्म अमतिः—

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
मायया ऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥

इत्युक्तरीत्या मूढः मायया अपहृतज्ञानश्च जनः न प्रपद्यतां प्रपन्नो मा भूदित्यर्थः । उक्तार्थे—

'अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित् ।' इति स्नातकधर्मोक्तं चक्षुरगोचरं कान्तारं कदाचिदपि न प्रविशेदित्यर्थकं मनुवचनं श्लेषभित्तिकाभेदाध्यवसायेन प्रमाणतामनीयत । पूर्वं स्मृतेरभिमतार्थे प्रमाणतयोपन्यासः । इह तु भगवदप्रपन्नोपालम्भपरेणानभिमतार्थे इति विशेषः ॥

इतिहासरूपशब्दप्रमाणं यथा—

विषयविषाब्धाविन्द्रियमकरैः कृष्टोऽपि धारयन् प्राणान् । अधुनाऽऽपं त्वां द्वीपं जीवन् भद्राणि पश्यतीति नयात् ॥ २०५७ ॥

हे भगवन्निति प्रकरणाल्लभ्यते । अधुना याहाच्छिकादिसुकृतपरिपाकावसरे इदानीं त्वामेव द्वीपं आपं प्राप्तवानास्मि । अत्र बहूनि कृच्छ्राणि सोढ्वा प्राणान् धारयितुस्स्वस्य बहोः कालाद्भगवच्चरणावलम्बनभाग्यलाभरूपेऽर्थे—

'विनाशे बहवो दोषा जीवन् भद्राणि पश्यति' इति श्रीरामायणं प्रमाणतयोपात्तम् ॥

यथावा—

एतदलंकरणगणं नाथ ममादास्त्वमहमपि तवादाम् । रामायणमाह कृते प्रतिकर्तव्यं सनातनं धर्मम् ॥ २०५८ ॥

हे नाथ! एतत् करणगणं इन्द्रियवर्गं त्वदाराधनौपायिकमिति भावः। मम त्वं अलं पर्याप्तं अदाः दत्तवानसि अहमपि तव अदां अददाम्। अस्मिन् पक्षे अलंकरणमिति समस्तं पदम्। अलंकरणगणं अलङ्कारप्रतिपादकममुं प्रबन्धमित्यर्थः। अत्र स्वाभिमतेऽर्थे—

'कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः।' इति श्रीरामायणस्य प्रमाणत्ववर्णनम्। श्लेषोज्जीवितमिदम्। पूर्वं तु रूपकसंकीर्णम्॥

यथावा—

**यद्यपि सर्वज्ञस्त्वं न भक्तदोषांस्तथाऽपि जानासि। तदविज्ञातेति त्वां नामसहस्रे पठन्ति मुनिवर्याः॥ २०५९॥**

अत्र सर्वज्ञस्यापि श्रीनिवासस्य भक्तदोषादर्शननिर्धारणेऽर्थे 'अविज्ञाता सहस्रांशुः' इति श्रीभारतान्तर्गतसहस्रनामस्तुतिवचनं प्रमाणमुपनिबद्धम्॥

पुराणरूपशब्दप्रमाणं यथा—

**हानिस्समजनि माप त्वद्ध्यानभृतोऽपि वासुदेव कथम्। प्राह पुराणं हानिस्सा यत् क्षणमपि न चिन्त्यसे त्वमिति॥ २०६०॥**

हे माप! माधव हे वासुदेव! त्वद्ध्यानं बिभर्तीति त्वद्ध्यानभृत् तस्यापि निरन्तरं त्वां चिन्तयतोऽपीति भावः। हानिः इष्टहानिः कथं समजनि अजायत। आश्चर्यमेतदिति भावः। हानिः कुतो न संभवेदित्यत आह—प्राहेति। पुराणं—

यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महाच्छिद्रं सा भ्रान्तिस्सा च विक्रिया ॥

इति पुराणं, त्वं भवान् क्षणमपि अत्यल्पकालमपि वा न चिन्त्यस इति यत् सा हानिरिति प्राह । परिहारस्तु—पूर्वार्धे हा निस्समजनिं आप इति छेदः । त्वद्ध्यानेन भृतः जनः भृञः कर्मणि क्तः । निस्समां असदृशीं जनिं जन्म 'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म' इत्युक्तप्रकारं ब्रह्मविद्यावेतृत्वरूपं जन्मेति भावः । यद्वा 'वर्णाश्रमाचारपरः' इत्युपक्रम्य—

महता तेन पुण्येन वैष्णवत्वं लभेत सः ।
विष्णुभक्तिपरस्तद्वत्सप्त जन्मानि मानवः ॥
एकान्तभगवद्याजी विप्रो भागवतान्वये ।
ततस्स लभते जन्म देवैरत्यन्तदुर्लभम् ॥

इति वाराहोक्तं लोकोत्तरं प्रपन्नजन्मेति भावः । आप प्राप्तवान् । निस्संदेहैव तत्प्राप्तिरिति द्योतनाय 'कृतं कार्यमिति श्रीमान् व्याजहार पितामहः' इत्युक्तरीत्या सिद्धवत्कारेण भूतनिर्देशः । हा इत्याश्चर्ये । अत्र उपपादितश्लेषभित्तिकाभेदाध्यवसायनिर्व्यूढस्वविवक्षितभगवद्ध्यातृहान्यसंभावितत्वनिर्धारणाय उपदर्शितपुराणरूपशब्दप्रमाणोदाहरणम् ॥

व्याकरणरूपशब्दप्रमाणं यथा—

**महतः परमस्य सतो भवता पुरुषेण पूज्यमानेन । सामस्त्येऽग्रथत्वं स्याद्देवैतत्प्राह सन्महत्सूत्रम् ॥ २०६१ ॥**

हे देव! महतः पूज्यस्य अत एव परमस्य उत्कृष्टस्य सतः ब्रह्मविदः कस्यचित् पूज्येन पुरुषेण भगवता नारायणेन भवता

त्वया सामस्त्ये सामग्र्ये सति संबन्धे सतीत्यर्थः। अग्र्यत्वं सकललोकाग्रगण्यता स्यात्। एतत्, इदं कर्म। सन्महत्सूत्रं कर्तृ। प्राह वदति। इममर्थमुक्तसूत्रं कथयतीत्यर्थः। सूत्रपक्षे–महतः परमस्य सत इति च शब्दस्य पूज्यमानेन पुरुषेण पुरुषशब्देन सामस्त्ये समस्ततायां सत्यां समासे सतीत्यर्थः। अग्र्यत्वं पूर्वप्रयोज्यत्वं स्यादित्यर्थः। 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति सूत्रेण सदादिशब्दानां पूज्यमानवाचकैस्सह समासविधानात्तेषां 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसंज्ञायां 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोज्यत्वं स्यादित्यर्थः। अत्र विवक्षितस्य ब्रह्मविदो भगवत्संबन्धेन सर्वलोकाग्रगणनीयत्वस्य निर्धारणे उपपादितश्लेषभित्तिकाभेदाध्यवसायेन पाणिनीयसूत्ररूपशब्दः प्रमाणपदवीमनायि ॥

यथावा—

**विजितस्स पारिजाताहरणरणाग्रे त्वया हरे मघवा। बहुळं तान्तोऽद्यापिच मघवा बहुळमिति सूत्रमिह मानम् ॥ १०६२ ॥**

हे हरे! मघवा इन्द्रः पारिजाताहरणरणाग्रे त्वया विजितः। अतएव अद्यापि च बहुलं अतिवेलं तान्तः ग्लानः। इह अस्मिन्नर्थे 'मघवा बहुलम्' इति सूत्रं मानम्। मघवतोऽद्यापि बहुलं तान्तत्वे उक्तसूत्रं प्रमाणमित्यर्थः। मघवशब्दस्य उक्तसूत्रेण तृ इत्यन्तादेशस्य बहुलं विधानात्तस्य बहुलं तान्तत्वे तत्प्रमाणमिति भावः। अत्रोपपादितार्थस्थापनाय शब्दार्थतादात्म्यमूलकश्लेषोपष्टम्भेन उक्तसूत्रस्य प्रमाणताप्रदर्शनम् ॥

यथावा—

**निर्मित्सा चेत्तव जगदासीदेवात्र नेष्यतेऽभ्यासः। अत एवाच्युत पाणिनिरत्राभ्यासस्य लोपमेवाह॥ २०६३॥**

हे अच्युत! तव जगदेककारणस्येति भावः। निर्मित्सा निर्मातुमिच्छा चेत् जगत् इदं भुवनं आसीदेव निष्पन्नमेव। न तु तन्निष्पत्तौ मात्रयाऽपि विलम्बः 'इच्छामात्रं प्रभोस्सृष्टिः' इति श्रुतेरिति भावः। अत्र निर्मित्सायां अभ्यासः पौनःपुन्यं नेष्यते। सकृदिच्छोन्मेषमात्रादेव संभवन्त्यां जगत्सृष्टौ तत्पौनःपुन्यं नापेक्षितमिति भावः। अतएव निर्मित्सायामभ्यासानपेक्षणादेव पाणिनिः अत्र निर्मित्सारूपेऽर्थे, पक्षे निर्मित्साशब्दे अभ्यासस्य पौनःपुन्यस्य, अन्यत्र द्विर्वचनस्य लोपमेव अदर्शनमेव आह कथयति। निरित्युपसर्गपूर्वकात् माधातोस्सनि 'सनि मी मा' इत्यारभ्य यदुक्तं तत्राभ्यासलोपस्य 'अत्र लोपोऽभ्यासस्य' इति सूत्रेण तेन विहितत्वादिति भावः। अत्र भगवतो जगन्निर्माणविषयकेच्छाभ्यासानपेक्षणेऽर्थे पूर्ववदेव श्लेषमूलातिशयोक्त्यवलम्बनेन उपदर्शितं पाणिनिसूत्रं प्रमाणीकृतम्॥

यथावा—

**सम एव भवति सम्राट् पुरुषत्वं चापि भवति तस्यैव। यन्मो राजि समः क्वौ व्रश्चभ्रस्जेति सूत्रितं मुनिना॥ २०६४॥**

मया श्रिया सह वर्तत इति समः। स एव सलक्ष्मीक एव सम्राट् जगदीश्वरो भवति 'एष ब्रह्मलोकस्सम्राट्। राजा-

धिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान्' इत्यादिश्रुतिस्मृतिभ्यः। 'सलक्ष्मीकस्य साम्राज्यं सर्वथा सुप्रतिष्ठितम्' इत्याचार्यश्रीसूक्तेश्च। न ह्यलक्ष्मीकानां साम्राज्यं कदाऽपि भवेदिति भावः। तस्यैव सलक्ष्मीकस्यैव पुरुषत्वं चापि 'पूर्वमेवाहामिहासमिति तत्पुरुषस्य पुरुषत्वम्' इति निरुक्तसर्वकारणत्वसर्वान्तर्यामित्वादिप्रकाशकपुरुषशब्दवाच्यत्वं च भवति 'ह्री श्च ते लक्ष्मीश्च पत्न्यौ' इति लक्ष्मीजानेरेव 'वेदाहमेतं पुरुषं महान्तम्' इति पुरुषत्वश्रवणात्। एवं श्रुतिसिद्धे स्वाभिमतार्थे पाणिनीयसूत्रलक्षणस्मृतिमपि श्लेषेण प्रमाणीकरोति यदिति। तदा पूर्वार्धस्यैवमर्थः—यत् यस्मात् सम्राडिति शब्दः सम एव मकारसहित एव भवेत् 'मो राजि समः क्वौ' इति क्विबन्ते राजतौ परे समो मकारस्य मकारविधानात्। न तु 'मोऽनुस्वारः' इति विहितानुस्वारसहितः। तस्यैव सम्राट्छब्दस्यैव पुरु भूयिष्ठं यथातथा 'पुरुभूः पुरु भूयिष्ठम्' इत्यमरः। षत्वं 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति जश्त्वस्थानिभूतं षत्वं भवति। सम्राडिति शब्द उक्तप्रक्रियया निष्पद्यत इति भावः॥

यथावा—

**वृद्धाच्छप्रत्यय इह भवेत्त्वदीयो न चात्र संदेहः। स्मरति हि भगवान् पाणिनिरमुमर्थं शेषशैलमौलिमणे॥ २०६५॥**

हे शेषशैलमौलिमणे! वृद्धः अभिवृद्धः तैलधारावदाविच्छिन्न इति यावत्। अच्छः विजातीयप्रत्ययानन्तरिततया निर्मलश्च प्रत्ययः त्वद्विषयकध्यानं यस्य स तथाभूतः त्वदीयो भवति 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्युक्त-

रीत्या तव निरतिशयप्रीतिपात्रतामापद्येतेति भावः। अत्र न सन्देहः। यद्वा वृद्धः प्रवृद्धः अच्छः देवतान्तरसंबन्धगन्धवर्धीयस्तया विमलः प्रत्ययो विश्वासो यस्य स तथाभूतः महाविश्वासशालीत्यर्थः। त्वदीयः त्वदेकशरणः पुमान् वृद्धाच्छप्रत्यय इत्यावृत्त्या योज्यम्। अभिवृद्धनिर्मलज्ञानः 'सर्वं ह पश्यः पश्यति। स चानन्त्याय कल्पते' इत्युक्तरीत्या नित्यासंकुचितज्ञानो भवेदित्यर्थः। त्वयि महाविश्वासोपलक्षितात्मरक्षाभरसमर्पणं विदधानो मुक्तो भवतीति भावः। अत्र प्राथमिकेऽर्थे उपासना द्वितीयस्मिन्न्यास इति वैलक्षण्यम्॥

अन्यत्र वृद्धाच्छप्रत्यय इति सप्तम्यन्ततया छेदः। वृद्धाच्छप्रत्यये 'वृद्धाच्छः' इति सूत्रविहितछप्रत्यये कृते सति त्वदीय इति रूपं भवतीत्यावृत्त्या योजनीयम्। 'त्यदादीनि च' इति युष्मच्छब्दस्य वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्यये विहिते त्वदीय इति रूपं सिद्ध्यतीत्यर्थः। उत्तरार्धं सुगमम्। अत्र स्वाभिमते उपपादितेऽर्थे पाणिनिस्मृतेः प्रामाणतयाऽवतारणम्॥

यथावा—

इयमादेशमजाद्ये धत्ते सुप्रत्यये परेऽपि श्रीः।
भवतीलोपगताऽस्मिन्नर्थे शाब्दिकमुनेर्वचो मानम्॥ २०६६॥

हे श्रीः! इलोपगता इलया भूदेव्या उपगता समीपाश्रिता 'लक्ष्मीप्रियसखीम्' इति भूदेव्याः श्रीसखीत्वश्रवणादिति भावः। इयं भवती सुप्रसिद्धा त्वं अजाद्ये ब्रह्मादौ चतुर्मुखस्यापि कारणभूते इति परमात्मन एव विशेषणं वा। सुप्रत्यये शोभनज्ञाने, प्रत्यय इत्युपलक्षणं शक्तिबलादीनामपि परिपूर्णज्ञानादिषाड्गुण्ये

इत्यर्थः। परेऽपि भगवत्यपि 'परोऽरिपरमात्मनोः' इति विश्वः। आदेशं शासनं धत्ते पुष्णाति। 'यदपाङ्गाश्रितं सर्वं जगत् स्थावरजङ्गमम्। यद्भ्रूभङ्गाः प्रमाणं स्थिरचररचनातारतम्ये मुरारेः' इत्याद्युक्तेः॥

पक्षे–श्रीः श्रीशब्दः अजाद्ये अच् आद्यो यस्य तस्मिन् सुप्प्रत्यये सुप्प्रत्याहारघटक औजस् इत्यादौ प्रत्यये परे सति। अपिशब्दो भिन्नक्रम उत्तरत्रान्वेति। इयं इय् इत्याकारकं आदेशं धत्ते। भवति ईलोपगता इति छेदः। ईलोपं ईकारादर्शनं गताऽपि प्राप्ताऽपि, अपिस्समुच्चये। भवति भूधातोर्लट्। अस्मिन्नर्थे शाब्दिकमुनेः पाणिनेः वचः प्रमाणम्। श्रीशब्दस्याजादौ विभक्तौ परतः 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति विहितस्य इयङो ङित्वात् 'ङिच्च' इत्यनेन अन्त्यवर्णस्य ईकारस्यादेशविधानादिति भावः। ईकारस्य इयङाऽपहृतत्वाददर्शनम्। अत्रापि स्वविवक्षिते श्रुत्यादिसिद्धे श्रीपरत्वरूपेऽर्थे उपपादितश्लेषमूलाभेदाध्यवसायेन पाणिनीयवचसः प्रमाणतयोपन्यासः॥

यथावा—

**आस्ते विष्णुर्नित्यं पदे परस्मिन् श्रिया त्रिलोकतनुः। नित्यसमासवचस्तत्पुरुषस्योत्तरपदे तदत्युचितम्॥ २०६७॥**

त्रिलोकतनुः सकलजगच्छरीरकः 'जगत्सर्वं शरीरं ते' इत्यादिप्रमाणात्। त्रिलोकेत्यत्र 'दिक्संख्ये संज्ञायाम्' इति नियमेन समासाप्राप्तौ 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेन समासः। त्रयो लोकाः तनुः यस्येति त्रिपदे बहुव्रीहौ कृते तनुशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः। अत्रावान्तरतत्पुरुषस्य

विकल्पे प्राप्ते 'द्वंद्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति नित्यसमासः। विष्णुः भगवान् श्रिया लक्ष्म्या सह 'वृद्धो यूना' इति निर्देशाद्विनाऽपि सहशब्दयोगं तृतीया। परस्मिन् पदे श्रीमति वैकुण्ठे आस्ते उपविशति। तत् तस्मात् स चासौ पुरुषश्च तत्पुरुषः तस्य पूर्वोक्तस्य परमपुरुषस्येत्यर्थः। उत्तरे श्रेष्ठे पदे स्थाने नित्यं मया श्रिया सह वर्तत इति समः आसः उपवेशः आसेर्घञ्। नित्यसमं यथातथा आस इति वा। लक्ष्म्या सहावस्थानं तस्य वचः वचनं अत्युचितम्। पक्षे उपपादितरीत्या उत्तरपदे परतः तत्पुरुषस्य नित्यसमासवचनं अत्युचितमित्यर्थः। अत्र 'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः। आस्ते विष्णुरचिन्त्यात्मा' इति वचनरीत्या स्वोपपादितेऽर्थे उपदर्शित-श्लेषमूलातिशयोक्त्या 'द्वंद्वतत्पुरुषयोः' इत्युक्तव्याकरणवार्तिकस्य प्रमाणतयोपन्यासेन औचित्यं समर्थितम्॥

यथावा—

**या मदयति स्वसेविनमचिरेण जनं हरिप्रिया सैषा। सुवचा हलिप्रियेत्यपि रलयोरभिदा हि सम्मता विदुषाम्॥ २०६८॥**

या हरिप्रिया स्वसेविनं आत्मानं भजमानं आस्वादयमानं च मदयति हर्षवन्तं मदवन्तं च करोति 'हर्षेऽप्यामोदवन्मदः' इत्यमरः। सा हरिप्रिया हलिप्रियेत्यपि सुवचा हरिहलिनोर-भेदादिति भावः। हली बलभद्रः। पक्षे उपपादितेन हेतुनैव हलिप्रिया कादम्बरीत्यपि सुवचा। 'सुरा हलिप्रिया' इत्यमरः। समर्थितमप्यर्थं स्थूणानिखननन्यायेन पुनस्समर्थयते-रलयोरिति। हि यस्मात् रलयोर्वर्णयोः अभिदा अभेदः विदुषां वैयाकरणानां

सम्मता । अतो हरिप्रियाशब्दः हलिप्रियेत्यपि सुवचेति भावः । शब्दार्थतादात्म्यं न विस्मर्तव्यम् । अत्र स्वविवक्षिते हरिप्रियायाः हलिप्रियात्वनिर्धारणे वैयाकरणोक्तेः प्रमाणता ॥

यथावा –

**अजरं ब्रह्म तदेकं दैवतमन्यत्तु नाजरं विद्मः । जरसा विकृतिमजादौ मुनिराह हि निर्जरे समस्तेऽपि ॥ २०६९ ॥**

तद्ब्रह्म एकमेव अजरं जरोपलक्षितसर्वविकारविधुरं 'विजरो विमृत्युः, यत्तच्छान्तमजरं परं ब्रह्म' इत्यादिश्रुतेः । अन्यद्दैवतं तु अजरं न विद्मः । दैवतान्तरस्य सर्वस्यापि जरामरणाद्यनतीतत्वात् । हि यस्मात् मुनिः पाणिनिः । अजादौ चतुर्मुखादौ समस्ते निर्जरे दैवतेऽपि जरसा विकृतिं आह । यद्वा हीति प्रसिद्धौ । पक्षे निर्जरे निर्जरशब्दे समस्तेऽपि समस्ततां प्राप्तेऽपि अजादौ अजादिविभक्तौ परतः जरसा 'जराया जरसन्यतरस्याम्' इति विहितजरसादेशेन विकृतिं आह । समस्तेऽपीत्युक्तिः 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति ज्ञापनाय । अत्र भगवदतिरिक्तदैवतजराक्रान्तत्वनिर्धारणाय शाब्दिकोक्तेः प्रमाणता ॥

यथावा—

**प्राप्तानां त्वां चिह्नं प्रायेण तवेव भवति परमात्मन् । तत्पुरुषस्य हि परवल्लिङ्गं शाब्दिकमुनीशिताऽवादीत् ॥ २०७० ॥**

हे परमात्मन्! त्वां प्राप्तानां मुक्तानामित्यर्थः । ते तव चिह्नं चतुर्भुजत्वादि लिङ्गं प्रायेण भवति । प्रायेणेत्यनेन जगत्कारणत्व-

श्रीपतित्वादिव्यावृत्तिस्सूचिता । हि यस्मात् शाब्दिकमुनीशिता पाणिनिः तत्पुरुषस्य तादृशत्वदीयपुरुषस्य मुक्तस्य परवत् परमात्मनस्तवेव लिङ्गं चिह्नं भवतीत्यवादीत् । वस्तुतस्तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति तत्पुरुषस्य उत्तरपदलिङ्गमेवावादीदिति । अत्र स्वाभिमते भागवतानां मुक्तानां भगवच्चिह्नलाभे श्लेषावलम्बनेन पाणिनिसूत्रं प्रमाणतां नीतम् ॥

यथावा—

**ननु विश्वमेकनीडं यत्र स पुरुषोत्तमात्किमन्यत्स्यात् । विश्वंभरे मुमागममाह ऋषिश्शब्दवित् स्फुटं सक्तम् ॥ २०७१ ॥**

विश्वं इदं सर्वं जगत् यत्र ननु यत्रैव पुरुषे । ननु रवधारणे । एकनीडं अभिन्नस्थानकं ऐकाधिकरण्यभागित्यर्थः । सः पुरुषोत्तमात् पुरुषशब्दाभिलपनीयबद्धमुक्तोभयावस्थप्रत्यगात्मविलक्षणान्नारायणात् अन्यः किं इतरस्स्यात्किम् । किमित्यधिक्षेपे । कदाऽपि न स्यादेवेति भावः । यत्र विश्वमेकनीडमिति पदसंदर्भेण 'यत्र विश्वं भवत्येकनीडम्' इति श्रुतिः प्रत्यभिज्ञाप्यते । अमुं बुद्धिस्थं आगमं 'यत्र विश्वम्' इत्याद्युदाहृतश्रुतिं विश्वंभरे नारायणे स्वस्मिन् सक्तं तत्परं, शब्दवित् शब्दशब्दोऽत्र 'शब्दश्चातोऽकामकारे' इत्यादाविव वेदपरः । वेदविदित्यर्थः । 'वेदान्तकृद्वेदविदेव चाहम्' इति गानात् । ऋषिः वासुदेवतयाऽवतीर्णो बदरिकाश्रमतापसो नारायण इत्यर्थः । श्रूयते च भगवद्वाचक ऋषिशब्दः 'स्वयं जुहृत एकऋषिं श्रद्धयन्तः' इति मुण्डके । 'एकऋषिं मुख्यऋषिं परमात्मानमित्यर्थः' इत्युपनिषद्भाष्ये व्याख्यातम् । 'के ते ऋषयः प्राणा वाव ऋषय' इति श्रुतिरप्य-

आनुकूला। ऋषय इति बहुवचनान्त ऋषिशब्दः परमात्मपरतया 'तथा प्राणाः' इत्यधिकरणे अभाषि। आह वदति॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥

इति गायन् भगवान् बिभर्तीत्यनेन 'यत्र विश्वं भवत्येकनीडम्' इति श्रुतिं नारायणपरामेवाहेत्यर्थः। तथाह्यत्रोपबृंहणे 'परमात्मेत्युदाहृतः' इत्यनेन–'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति श्रुतिः स्मार्यते। 'यो लोकत्रयमाविश्य' इत्यनेन 'यच्च किंचित्' इत्यादिकं व्याख्यातम्। "लोक्यत इति लोकः तत्त्रयं लोकत्रयं अचेतनं तत्संसृष्टश्चेतनः मुक्तश्चेति प्रमाणावगम्यमेतत्त्रयं य आत्मतयाऽऽविश्य बिभर्ति तस्माद्व्याप्याद्भर्तव्याच्चार्थान्तरभूतः" इति श्रीमद्गीताभाष्यम्। बिभर्तीत्याधारत्वोक्त्या 'यत्र विश्वं भवत्येकनीडं, तत्सवितुर्वरेण्यं, ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम' इत्यादेरर्थ उक्तः। अव्ययशब्दोक्त्या 'शाश्वतं शिवमच्युतम्' इत्याद्युक्तसंग्रहः। ईश्वरशब्द इह 'व्याप्य नारायणस्स्थितः' इत्युक्तव्याप्तेः 'अन्तः प्रविष्टश्शास्ता' इत्याद्यनुसारात्समस्तनियमनाविशिष्टत्वं 'अतमेश्वरम्' इत्युक्तानन्यनियाम्यत्वं चाभिप्रैतीति 'पुरुषोत्तमः कः'। इत्यत्र श्रीमत् स्तोत्रभाष्यम्। तस्मात् 'यत्र विश्वं भवत्येकनीडम्' इति श्रुतिं नारायणे स्वस्मिन्नेव तत्परामाह गीताचार्य इति सुष्ठूक्तम्॥

अर्थान्तरं तु–शब्दवित् व्याकरणवेत्ता ऋषिः पाणिनिः

विश्वंभरे विश्वंभरशब्दे मुमागमं मुमित्याकारकमागमं सक्तं संबन्धं स्फुटमाह 'संज्ञायां भृतृवृजि' इत्यादिना विश्वशब्दोपपदकात् भृञः खचि 'अरुर्द्विषदजन्तस्य' इति मुमागमं व्यधत्तेति। अत्र 'यत्र विश्वम्' इत्यादिश्रुतिप्रतिपादितायास्सकलजगदाधारतायाः पुरुषोत्तमैकनिष्ठत्वनिर्धारणे स्वाभिमते 'यो लोकत्रयमाविश्य' इत्यादिस्मृतिः श्लेषभित्तिकाभेदाध्यवसायेन उदाहृतव्याकरणस्मृतिश्च प्रमाणतयोपदर्शिते इति पूर्वोदाहरणेभ्यो विशेषः ॥

यथावा—

**यो वेद ब्रह्मासद्दुर्मेधास्तं ह्यसन्तमेवाहुः। आस्तां श्रुतिरिह मानं नालं किं नित्यमसिजिति हि सूत्रम् ॥ २०७२ ॥**

यः दुर्मेधाः ब्रह्म असदिति वेद सत् अस्तीति न वेदेत्यर्थः। अ इत्येतन्नञ्समानार्थकमव्ययं 'अभावे नह्यनो नापि' इत्यव्ययेष्वमरानुशासनात्। यद्वा असदिति समस्तं पदं यथाश्रुतमेव योज्यम्। ब्रह्म नास्तीति योवेदेति तदर्थः। अन्यत्तुल्यम्। अत्राद्ययोजना "ब्रह्मविषयकज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्तां च वदति" इति 'असन्नेव स भवति' इति श्रुत्यर्थवर्णनपरमहासिद्धान्तस्थश्रीभाष्यतात्पर्यानुरोधेन। द्वितीया तु 'आनन्दमयसदसत्त्वज्ञानान्मोक्षसंसारौ भवतः' इति प्रकृतश्रुत्यर्थवर्णनपरोपनिषद्भाष्यानुरोधेन। तं दुर्मेधसं दुर्बुद्धिं दुर्मेधश्शब्दं च असन्तं असाधुमेव अन्यत्र अस् इति वर्णान्तमेव आहुः। इह अस्मिन्नर्थे श्रुतिः 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति श्रुतिः मानं प्रमाणं आस्मां तिष्ठतु

नाम। नित्यमसिजिति हि सूत्रं, हिशब्दोऽवधारणे। 'नित्यमसिच् प्रजामेधयोः' इति सूत्रमेवेत्यर्थः। नालं किं न पर्याप्तं किम्। अनेनैव निर्वाहे किं श्रुतिपर्यन्तानुधावनेनेति भावः। उक्तसूत्रेण दुरित्युपसर्गपूर्वकस्य मेधाशब्दस्य बहुव्रीहौ असिजिति समासान्तप्रत्ययस्य विहितत्वादिति वस्तुस्थितिः। अत्रापि असन्तामिति श्लेषभित्तिकाभेदाध्यवसायानुप्राणितं शब्दस्मृतिरूपप्रमाणं श्रुतिप्रमाणेन सह उक्तार्थस्थापनायोपात्तम्॥

यथावा—

**येन त्वं सर्वविदासि तस्मिन् बोधेऽस्ति सुमहती शक्तिः। माऽस्तु गुणेऽन्यत्र गुणो भगवन् बोधे तु सोऽस्ति शब्दनयात्॥ २०७३॥**

भगवान् ज्ञानशक्त्यादिपरिपूर्णः तस्य संबुद्धिः हे भगवन् येन बोधगुणेन षाड्गुण्यप्रथमभूतेन त्वं सर्ववित् 'यस्सर्वज्ञस्सर्ववित्' इत्युक्तरीत्या सर्वज्ञः असि नित्यासंकुचितबोधवत्त्वादेव हि तव सर्वज्ञत्वमिति भावः। तस्मिन् बोधे ज्ञाने सर्वसाक्षात्काररूपे सुमहती शक्तिः षाड्गुण्यान्तःपातिगुणविशेषः। सा च यदन्यैरशक्यत्वादघटितमिव भाति तद्घटनसामर्थ्यरूपा। सर्वज्ञत्वनिर्वहणसामर्थ्यमिति तु तत्त्वम्। अस्ति विद्यते। 'पराऽस्य शक्तिः' इतमुक्तरीत्या सर्वशक्तेस्तत्रापि सर्वविंत्त्वस्यानेन निष्पादितत्वादस्मिन् बोधे त्वत्तोऽपि महती शक्तिरस्तीति भावः। नन्वियमुक्तिः कथं घटतां गुणे गुणस्यानङ्गीकारात्। गुणौ हि बोधशक्ती उभे अपीत्यत आह—माऽस्त्विति। अन्यत्र बोधादन्यस्मिन् गुणे गुणान्तरं मास्तु अस्तु वा मा वेति भावः। बोधे तु बोधरूपे गुणे तु स गुणः उक्तशक्तिरूपः अस्ति। एवं

निर्धारणे किं प्रमाणमित्यत्राह—शब्दनयादिति । व्याकरणनयात् बोधे गुणास्तित्वमुक्तमिति भावः । तत्पक्ष बुधधातोर्घञा निष्पन्ने बोधशब्दे 'पुगन्तलघूपधस्य च' इति गुणविधानाद्गुणोऽस्तीति भावः । अत्र स्वविवक्षितस्य बोधरूपगुणे सुमहाशक्तिरूपगुण-सद्भावस्य उपपादितशक्तिगुणशब्दगतश्लेषमूलाभेदाध्यवसायेन शब्दाशास्त्रीयप्रक्रियायाः प्रमाणता ॥

यथावा—

**पद्मे तवाङ्गरोचिः परिभवति स्वर्णवर्णसौभा-ग्यम् । वर्णयति शाब्दिकौघो वार्णादाङ्गं बलीय इति तस्मात् ॥ २०७४ ॥**

अत्र वर्णकार्यादङ्गाधिकारकार्यस्य बलीयस्त्वमभिदधाना 'वार्णादाङ्गम्' इति परिभाषा 'अङ्गवर्णशब्दप्रतिपाद्यार्थद्वयश्लेष-भित्तिकाभेदाध्यवसायबलेन स्वाभिमतार्थे प्रमाणत्वेनोपन्यस्तेति विशेषः ॥

यथावा—

**स्वार्थे विबाधते परमच्युत नित्यं च मेऽन्तर-ङ्गं त्वाम् । शाब्दिकमुनिराह परान्नित्यादप्यन्त-रङ्गमधिकबलम् ॥ २०७५ ॥**

हे अच्युत ! नित्य 'नित्यो नित्यानाम्' इति श्रुतेः । परं च 'परः पराणाम' इति श्रुतेः । त्वां मे अन्तरङ्गं मनः कर्तृ स्वार्थे स्वाभीप्सितप्रयोजने विषये बाधते पीडयतीति यावत् । 'नूनं स्वार्थपरो लोको न वेद परसंकटम्' इति भावः । अन्यत्र परं नित्यं च शास्त्रं कर्म अन्तरङ्गं अन्तरङ्गशास्त्रं कर्तृ स्वार्थे विषये बाधते तत्प्रवृत्तिविघातकं भवतीत्यर्थः । अत्र

स्वोक्तार्थे शाब्दिकपरिभाषां प्रमाणयति शाब्दिकेति । शाब्दिक-मुनिः पतञ्जलिः परान्नित्यादप्यन्तरङ्गमधिकबलमाह । 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषणादिति भावः ॥

यथावा—

**कृपया तवाऽच्युताखिलकर्म विनाशोन्मुखं ततोऽहमघम् । तद्वशगोऽपि न कुर्यामकृतव्यूहा हि पाणिनीयास्स्युः ॥ २०७६ ॥**

हे अच्युत! तव कृपया मम अखिलं कर्म विनाशोन्मुखं, ततः कारणात् तद्वशगोऽपि कर्मवश्योऽपि अहं अघं उत्तराघं न कुर्याम् । हि यस्मात् पाणिनीयाः अकृतव्यूहाः 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषितत्वादिति भावः । 'निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्ति' इति परिभाषार्थः । अत्र विनाशोन्मुखकर्मानुरोधेन तत्प्रयुक्तोत्तराघस्याकरणे पाणिनीयपरिभाषायाः प्रमाणीकरणात्कवेः पाणिनीयताऽपि प्रकटिता ॥

यथावा—

**येषां त्वयाऽनुबन्धस्तेषां भगवन् कथं स्वसारूप्यं स्यात् । यदिह वदन्ति पदज्ञा न ह्यनुबन्धेन कृतमसारूप्यमिति ॥ २०७७ ॥**

हे भगवन्! येषां जनानां त्वया सह अनुबन्धः संबन्धः भवति भागवतत्वं भवतीत्यर्थः । यद्वा निरवशेषाविद्यानिवृत्तिपूर्वकं परमे व्योम्नि संश्लेषः भवतीत्यर्थः । तेषां जनानां असारूप्यं त्वदसरूपता कथंनु स्यात् शेषत्वेन त्वया परिगृहीतानां त्वामेव ध्यायतां त्वत्सारूप्यं चतुर्भुजत्वादिकं स्यादेव । यथा-

क्रतुनयादिति भावः । 'निरञ्जनः परमं साम्यमुपैति' इति श्रुतिरत्रानुसंधेया। यत् यस्मात्कारणात् पदज्ञाः व्याकरणविदः अनुबन्धेन 'ऋहलोर्ण्यत्' इत्यादौ कृतेन इत्संज्ञार्थकणकाराद्यनुबन्धेनं कृतं असारूप्यं 'पोरदुपधात्' इत्यादिविहितस्य यतः असरूपत्वं न भवतीति वदन्ति 'नानुबन्धकृतमसारूप्यम्' इति परिभाषणादिति भावः । तथाच शप्यं लभ्यमित्यादौ शापिलभ्यादेः 'पोरदुपधात्' इत्यनेन विहितो यत्प्रत्ययः 'ऋहलोर्ण्यत्' इति विहितस्य ण्यतः बाधक एव भवति । न तु 'वा सरूपोऽस्त्रियाम्' इत्यनेन असारूप्यनिबन्धनवैकल्पिकबाधकत्वं प्राप्नोतीत्यवधेयम्। अत्र श्रुतिस्मृतिशतप्रमाणसद्भावेऽपि चमत्कारातिशयाय 'नानुबन्धकृतमसारूप्यम्' इति शाब्दिकपरिभाषायाः श्लेषेणार्थान्तरं परिकल्प्य प्रमाणीकरणम् ॥

यथावा—

**त्वां परमवरं चान्यं समौ वदन्नापराध्यति मुरारे। पूर्वपरावरसूत्रे परावरौ पाणिनिर्यदाह समौ ॥ २०७८ ॥**

उत्कृष्टं त्वां त्वत्तोऽपकृष्टेन देवतान्तरेण तुल्यं वदतो जनस्यापराधाभावरूपेऽर्थे 'पूर्वपरावरदक्षिणोत्तर' इत्यादिपाणिनीयस्मृतेः प्रमाणतयोपन्यासः । पूर्वोदाहरणेषु पाणिनिस्मृतिरभिमतार्थे प्रमाणीकृता। इह तु—

यस्तु नारायणं देवं सामान्येनाभिमन्यते ।
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ ॥
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
समत्वेन विजानाति स पाषण्डीति कथ्यते ॥

इत्याद्युक्तरीत्या भगवतो नारायणस्य देवतान्तरतुल्यकक्ष्यतावर्णनपरजननिन्दापरेण अनभिमतार्थे प्रमाणीकृतेति वैलक्षण्यम्॥

यथावा—

**तद्विष्णोः पदमव्ययमाम्नातमनव्ययं स्वराद्यं तु। एवं सति पाणिनिना स्वरादिपदमव्ययं कथमभाणि ॥ २०७९ ॥**

तत् विष्णोः पदं 'तद्विष्णोः परमं पदम्' इत्याम्नातं स्थानं अव्ययं अनश्वरं आम्नातं 'तदक्षरे परमे व्योमन्' इत्यादिश्रुत्या प्रतिपादितम्। स्वराद्यं स्वर्गादिकं पदं स्थानं तु अव्ययं न भवतीत्यनव्ययं नश्वरं आम्नातम्। एवं सति एवं स्थिते पाणिनिना स्वरादि स्वर्गादिकं पदं स्थानं, पक्षे स्वरादिगणपठितं पदं अव्ययं अनश्वरं अव्ययसंज्ञकं च कथमभाणि 'स्वरादिनिपातमव्ययम्' इति सूत्रेणेति भावः॥

यथावा—

**स्वामिन्नैश्वर्ये तव केन निपातः क्वाऽपि किं दृष्टः। एवं स्थितेऽस्य पाणिनिराह निपातं कथं न्विति विचिन्ता ॥ २०८० ॥**

हे स्वामिन् हे सर्वेश्वर! ऐश्वर्ये जगदीश्वरत्वे विषये तव 'एष सर्वेश्वर एष भूताधिपतिः' इति श्रुतपारमैश्वर्यस्य तव निपातः भ्रंशः केन पुरुषेण क्व वाऽपि किं दृष्टः न दृष्ट एवेत्यर्थः। एवं स्थिते वस्तुस्वरूपे एवमवस्थिते पाणिनिः अस्य एवंविधैश्वर्यवतस्तवेत्यर्थः। पक्षे अस्य स्वामिन्निति शब्दस्येत्यर्थः। निपातं भ्रंशं, अन्यत्र ऐश्वर्यरूपेऽर्थे लक्षणाभावे शब्दसाधुत्वार्थं

स्वरूपेणोच्चारणरूपं निपातं कथंनु आह। 'स्वामिन्नैश्वर्ये' इति सूत्रेण ऐश्वर्यरूपार्थे स्वामिन्निति निपातितत्वादिति भावः। इत्यस्माकं विचिन्ता ॥

यथावा—

**प्रथमः पुमान् समन्तादचीकशत्सर्वनामरूप-
मिति। श्रुतिराह पाणिनिमुनिस्तस्य क्वचिदेव
तदिदमाह कथम् ॥ २०८१ ॥**

श्रुतिः—'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतिः प्रथमः पुमान् परब्रह्मभूतः पुरुषोत्तमः समन्तात् सर्वतः सर्वनामरूपं सर्वेषां नाम च रूपं च अनयोस्समाहारं, अन्यत्र पुमान् पुंलिङ्गः प्रथमः प्रथम इति शब्दः समन्तात् सर्वनामताप्रयुक्तकार्यास्पदभूतासु सर्वासु विभक्तिषु सर्वनामरूपं सर्वनामशब्दरूपं अचीकशत् प्रकाशितवान् इत्याह। पाणिनिमुनिस्तु तस्य प्रथमस्य पुंसः तदिदं सर्वनामरूपप्रकाशनं क्वचिदेव एकदेश एवेति कथमाहेत्याश्चर्यम्। पुल्लिङ्गस्य प्रथमशब्दस्य जस्येव सर्वनामतां 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति सूत्रेणावादीदित्याक्षेपपरिहारः ॥

अत्र पद्यत्रयेऽपि सूत्रस्य सर्वसंप्रतिपन्नार्थप्रत्यनीकार्थस्य प्रकाशनपरतां श्लेषेण परिकल्प्य तद्भेदाध्यवसायेन तत्प्रणेतृभिक्षेपाय वैहासिकेन प्रमाणतयोपन्यास इति विशेषः ॥

यथावा—

**सकलनयविषयनिगमोद्धरणादरजुषि फणीन्द्र-
गिरिनेतः। कथमिव मात्स्ये रूपे नयलोपं ते वद-
न्ति शब्दविदः ॥ २०८२ ॥**

हे फणीन्द्रगिरिनेतः! सकलानां नयानां मीमांसान्यायानां विषयः यो निगमः वेदः तस्य उद्धरणे उद्धारे आदरजुषि ते तव मात्स्ये मत्स्यसंबन्धिनि रूपे अवतारे शब्दविदः वैयाकरणाः नयलोपं कथं वदन्ति। सकलनयविषयभूतवेदोद्धरणालंकर्मीणे अवतारे नयलोपोक्तेरसंगतत्वादिति भावः। मात्स्ये रूपे मात्स्य इत्याकारके अणन्ते शब्दरूपे नयलोपं यलोपाभावं 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति विहितयकारलोपस्य 'मत्स्यस्य ङ्याम्' इति नियमितत्वेन यलोपाप्रसक्तेरिति परिहारः। यद्वा फणीन्द्रगिरीति भिन्नं पदम्। हे नेतः स्वामिन्! फणीन्द्रगिरि पतञ्जलिभाष्य इत्यर्थोऽप्युपस्कार्यः। तदा सकलनयविषयनिगमोद्धरणादरजुषीत्यस्य उक्त एवार्थः। व्याकरणभाष्यस्य वेदशब्दानुशासनार्थं प्रवृत्तत्वादिति भावः। अत्र स्वविवक्षितार्थप्रत्यनीकत्वं शब्दविद्वाक्यस्य श्लेषेण परिकल्प्य तदधिक्षेपाय तदुक्तेः प्रमाणतया उपन्यासः। एवमग्रेऽप्यूह्यम्॥

यथावा—

**विश्वंभरासहोक्तौ विश्वंभर एव शेषतां धत्ते। सैवास्य शेषभूतेत्युक्तौ संदेग्धि केवलपदज्ञः ॥२०८३**

विश्वंभरायाः भूदेव्याः सहोक्तौ सहसंलापावसरे विश्वंभरः भगवानेव शेषतां तत्पारार्थ्यं धत्ते। पक्षे विश्वंभराशब्देन सहोक्तौ सहवचने विश्वंभर एव शेषतां धत्ते विश्वंभरशब्द एक एवावशिष्यते। स्त्रीपुंसलक्षणमात्रविशेषसद्भावेन 'पुमान् स्त्रिया' इत्यनेन पुंस एकस्यैव शेषताविधानादिति भावः। सैव विश्वंभरा भूरेव अस्य शेषभूतेत्युक्तौ 'तथा भूमिश्च नीला च शेषभूते मते मम' इति भगवदुक्तौ, पक्षे विश्वंभराशब्द एव अस्य विश्वंभरशब्दस्य शेषभूता अवशिष्टा इत्युक्तौ केव-

लपदज्ञः न तु परमपदज्ञः अनाघ्रातभगवच्छास्त्रसत्संप्रदायगन्धश्शुष्कवैयाकरणः स्वाधीतव्याकरणमात्रदृष्टिरित्यर्थः। संदेग्धि 'पुमान् स्त्रिया' इत्यनेन तल्लक्षणमात्रविशेषसद्भावे पुंस एवावशेषस्य विहितत्वात् कथं स्त्रीलिङ्गस्य विश्वंभराशब्दस्यावशेषस्स्यादिति संशेते इति भावः। अत्र केवलवैयाकरणेन केनचिदुपपादितार्थस्य व्याकरणाविरोधं प्रदर्शयितुं भगवच्छास्त्रवचनार्थोपनिबन्ध इति विशेषः। श्लेषोत्तम्भितत्वं तु पूर्ववदेव॥

यथावा—

**एकमनेकानुगतं नित्यं सामान्यमिति वचो वितथम्। एकमनेकानुगतं नित्यमसामान्यमेव यद्ब्रह्म॥ २०८४॥**

यद्वस्तु एकं अनेकेषु गवादिव्यक्तिषु अनुगतं अनुस्यूतं नित्यं नाशाप्रतियोगि च। तत् सामान्यं जातिरित्यर्थः। 'जातिर्जातं च सामान्यम्' इत्यमरः। इति वचः 'नित्यमेकमनेकानुगतं सामान्यम्' इति नैयायिकवचनं वितथम्। कुत इत्यत आह—यत् यस्मात्कारणात् ब्रह्म एकं अनेकानुगतं नित्यमपि असामान्यं अजातिरेव। परमार्थतस्तु एकं असदृशं अनेकेषु चेतनाचेतनेषु अनुगतं अनुप्रविष्टं 'यः पृथिव्यां तिष्ठन्, य आत्मनि तिष्ठन्, अन्तःप्रविष्टश्शास्ता जनानाम्' इत्यादिश्रुतेः। नित्यं 'नित्यो नित्यानाम्' इति श्रवणात्। असामान्यं अनितरसदृशं 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः। यद्वा असामान्यं अत्युत्कृष्टमित्यर्थः। 'सामान्यास्तु परार्थमुद्यमपरास्स्वार्थाविरोधेन ये' इत्यादौ सामान्यशब्द उत्कर्षापकर्षहीने हि प्रयुक्तः। अत्र स्वविवक्षितार्थप्रत्यनीकतां न्यायविद्वाक्यस्य

श्लेषेण परिकल्प्य तदधिक्षेपाय तद्वाक्यस्य प्रमाणतयोपन्यास इति पूर्वेभ्यो वैलक्षण्यम् ॥

यथावा—

**असति विरोधे स्मृत्या श्रुत्या उपबृंहणं किल न्याय्यम् । श्रुतिरेव तव गुणानां स्मृतिमुपबृंहयति हन्त नश्शौरे ॥ २०८५ ॥**

हे शौरे! विरोधे असति प्रत्यक्षश्रुतिविरोधे अविद्यमाने सति स्मृत्या मन्वादिप्रणीतधर्मसंहितया श्रुत्याः वेदस्य उपबृंहणं अस्पष्टार्थविशदीकरणं न्याय्यं मीमांसान्यायादनपेतम् । किलेति शास्त्रीयवार्तायाम् । सति तु श्रुतिविरोधे स्मृतेरनादरणीयतैव । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति स्पर्शनश्रुतिविरोधे 'औदुम्बरी सर्वा वेष्टयितव्या' इति सर्ववेष्टनस्मृतेरिवेति भावः । तदेतत्सूत्रितं महर्षिणा—'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' इति । एवं सति शास्त्रीयप्रस्थाने विपरीतमेतदित्याह—श्रुतिरिति । तव गुणानां सत्यत्वज्ञानत्वादिकल्याणगुणानां श्रुतिरेव 'सत्यं ज्ञानमनन्तं ब्रह्म, यस्सर्वज्ञस्सर्ववित्' इत्यादिगुणप्रतिपादिका श्रुतिरेव । पक्षे-निशमनमेव नः अस्माकं स्मृतिं त्वत्कल्याणगुणादिविषयकां स्मृतिं 'सर्वज्ञस्सर्वदृक्सर्वशक्तिर्ज्ञानबलार्द्धिमान' इत्यादिपराशरादिस्मृतिमित्यर्थः । अन्यत्र तव स्मरणं स्मृतिसंतानमिति यावत् । उपबृंहयति अभिवर्धयति । हन्तेति वैपरीत्यचिन्तनजनिताश्चर्ये । अत्र श्लेषगर्भस्वोक्तार्थवैचित्र्यपरिपोषाय पूर्वमीमांसान्यायरूपशब्दप्रमाणोपन्यास इति पूर्वस्माद्विशेषः ॥

यथावा—

**पादान्ते सक्तास्ते लघवो वा दधति गौरवं**

भगवन् । नाहं ब्रवीमि मिथ्या छन्दोभिज्ञाः किलै-
तदभिदधते ॥ २०८६ ॥

हे भगवन् ! ते तव पादान्ते चरणाग्रे । अन्यत्र—पद्यचतुर्थांशचरमभागे सक्ताः संबद्धाः लघवो वा जातिगुणादिप्रयुक्तमहत्त्वहीना अपि । पक्षे—ते इत्यस्य लघव इत्येतद्विशेषणता । ते लघवः 'ह्रस्वं लघु' इति सूत्रानुशिष्टा वर्णाः । गौरवं पूज्यत्वं । पक्षे-वा इत्येतद्गौरवमित्यत्रान्वेति । वा गौरवं विकल्पेन गुरुवर्णत्वं दधाति । यदाहुः—'सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च लः । वा पादान्तस्तु' इति । अत्र स्वोक्तचमत्कृतिस्थापनाय उदाहृतच्छन्दश्शास्त्रवचनं प्रमाणतयोपात्तमिति विशेषः । छन्दोभिज्ञाः वेदज्ञा इत्यप्यर्थः प्रतीयते । तेन प्रामाण्यातिशयप्रतीतिः ॥

यथावा—

गुरवस्त्वद्भक्ताः किल ऋजवोऽन्ये लघव एव
वक्रास्स्युः । एवं सति वक्रं गुरुमृजुं लघुं छान्दसा
बत वदन्ति ॥ २०८७ ॥

हे भगवन्नित्यनुषज्यते । त्वद्भक्ताः गुरवः पूज्याः 'एवमष्टविधा भक्तिर्यस्मिन् म्लेच्छेऽपि वर्तते' । 'स च पूज्यो यथा ह्यहम्' इत्युक्तेः । ऋजवः करणत्रयसारूप्यशालिनः । अन्ये त्वदभक्ताः लघवः अल्पाः वक्राः कुटिलस्वभावाः स्युः । एवं स्थिते छान्दसाः छन्दश्शास्त्रवेत्तारः वैदिकाश्चेत्यप्युपस्कार्यम् । छान्दसा इत्येतत् 'श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः । अनुवाकहता बुद्धिः' इत्युक्तरीत्या मन्दबुद्धिताद्योतनाय । गुरुं वक्रं लघुं ऋजुं च वदन्ति । बतेति विपरीतकथनश्रवणजनितखेदे । अत्र 'असौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको ऋजुः' इति छन्दश्शास्त्रविदां वचनस्य

स्वाभिमतार्थविरोधितया तदधिक्षेपायोपन्यास इति पूर्वस्माद्वि-च्छित्तिविशेषः ॥

यथावा—

**त्वयि विदधानो मैत्रीं द्विजराजो बुधसुहृद्भव-त्यनरिः। जगति हरेऽशेषसमो धामनिधे ज्यौतिषं प्रमाणमिह ॥ २०८८ ॥**

धामनिधे हे तेजोनिधे हे हरे भगवन्! पक्षे हे भास्व-न्नित्यर्थः। त्वयि भगवति भानौ च मैत्रीं शरणागतिं 'विदि-तस्स हि धर्मज्ञश्शरणागतवत्सलः। तेन मैत्री भवतु ते' इत्यत्र मैत्रीशब्दस्य शरणागत्यर्थकतया व्याख्यानात्। अन्यत्र सुहृत्त्वं विदधानः द्विजराज ब्राह्मणमूर्धन्यः चन्द्रमाश्च। चन्द्रमसो भानुमन्मित्रत्वादिति भावः। बुधसुहृत् ब्रह्मवित्सौहार्दवान् सौम्य-ग्रहस्य मित्रं च, चन्द्रमसस्तन्मित्रत्वात्। अनरिः कामादि-वैरिवर्गविधुरः। चन्द्रपक्षे शत्रुरहितः तस्य शत्रुग्रहविरहादिति भावः। जगति अशेषेषु समः 'तुल्यो मित्रारिपक्षयोः' इत्युक्त-क्रमेण सर्वत्र समदर्शी अन्यत्र शेषसम इति छेदः। शेषेषु उक्त-ग्रहातिरिक्तग्रहेषु समः भवति। अन्येषां सर्वेषां तत्समत्वादिति भाव। इह अस्मिन्नर्थे ज्यौतिषं ज्योतिश्शास्त्रं प्रमाणं 'तीक्ष्णां-शुर्हिमरश्मिजश्च सुहृदौ शेषास्समाश्शीतगोः' इति वराहमिहिरा-युक्तिः प्रमाणमिति भावः। अत्र श्लेषमहिम्ना स्वोक्तार्थस्थापनाय ज्यौतिषरूपस्मृतेः प्रमाणताप्रा .णमिति पूर्वस्माद्विशेषः ॥

यथावा—

**हरिदृष्टियो हंसस्स महार्चिस्सत्क्रियाश्रितः क्र-मतः। उच्चपदस्थो भविता श्रुतिवज्ज्यौतिषमिह प्रमाणं चेत् ॥ २०८९ ॥**

यः हंसः यतिविशेषः भानुश्च । हरौ भगवति विषये दृष्टिः उपासनात्मकज्ञानं यस्य स तथोक्तः । पक्षे हरौ सिंहराशौ दृष्टिर्यस्य तथोक्तः कुम्भराशिस्थस्सन्निति भावः । तत्रावस्थितस्यैव तस्मात्सप्तमे सिंहे दृष्टिसंभवात् 'पश्यन्ति सप्तमान् सर्वे' इति हि ज्योतिर्विदः । सः यतिविशेषः महार्चिस्सत्क्रियाश्रितः महत्या अर्चिषः आतिवाहिकाद्यभूतस्याग्नेः सत्क्रियया सत्कारेण अश्रितः युक्तः क्रमतः 'अर्चिषोऽहरह्न आपूर्यमाणपक्षम्' इत्याद्युक्तादिनपूर्वपक्षादिक्रमेण उच्चपदस्थः परस्मिन् पदे स्थितः भविता। पक्षे सः कुम्भराशिगतो भानुः क्रमतः मीनराशिप्राप्तिपूर्वकं सत्क्रियाश्रितः संश्चासौ क्रियः मेषराशिः 'क्रियताबुरुजतुमकुलीरलेयपाथोनजूककौर्प्याख्याः' इति ज्योतिर्विद्भिः मेषादीनां क्रमेण क्रियादिसंज्ञाया उक्तत्वात् । तस्मिन् अश्रितः गतस्सन् उच्चपदस्थः उच्चस्थानस्थितः 'अजवृषभ' इत्यादिना मेषस्य तदुच्चस्थानतोक्तिः । अतएव महार्चिः महादीप्तिः 'स्वोच्चे प्रदीप्तः' इति विद्यामाधवोक्तेः । भविता । स्पष्टमन्यत् । अत्राप्यभिमतेऽर्थे ज्यौतिषस्य प्रमाणता ॥

यथावा—

**कवयस्तवोपमानं कथयन्ति हरिन्मणिं हरिमणिं च । अनयोर्न वर्णभेदो यदुच्यते कृष्ण तन्न खलु मिथ्या ॥ २०९० ॥**

हे कृष्ण! नीलनीरदश्यामलेति भावः । कवयः हरिन्मणिं मरकतं हरिमणिं इन्द्रनीलं च तव उक्तवर्णस्य भवतः उपमानं कथयन्ति कथं हरिन्नीलवर्णयोरुक्तरत्नयोश्श्यामलवर्णस्य तव चोपमानोपमेयभाव इत्याशङ्क्य समाधत्ते—अनयोरिति । अनयोः हरिन्मणिहरिमण्योः वर्णभेदः नेति यदुच्यते कविभिरिति शेषः ।

तत् न मिथ्या खलु अनयोरुक्तशब्दयोः नवर्णेनैव भेदो नान्यवर्णैरित्यर्थान्तरमपि चमत्कारि। अत्र भगवतो नीलतोयदनीलस्य हरिन्मणिहरिमण्युभयसादृश्यवर्णनाय तयोर्वर्णभेदाभाववर्णनरूपेऽभिमतेऽर्थे 'कमलासंपदोः कृष्णहस्तिनोर्नागसर्पयोः' इत्यारभ्य 'दानवासुरदैत्यानामैक्यमेवाभिसंहित।' इत्यालंकारिकोक्तिः प्रमाणभावं प्रापिता॥

एवं शास्त्रान्तरलौकिकवाक्यरूपाण्यपि शब्दप्रमाणान्युदाहार्याणि। 'आचारश्चैव साधूनामात्मनस्तुष्टिरेव च' इति प्रमाणप्रतिपादिताचारात्मतुष्ट्योरपि मीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमापकतया शब्दप्रमाण एवान्तर्भावः॥

तत्राचारप्रमाणं यथा—

## सौरिस्स कथं पापो वारे यस्याचरन्ति तव तुष्ट्यै। व्रतममितमहिगिरीश्वर सदसच्च विभाव्यमिह सदाचारात्॥ २०९१॥

हे अहिगिरीश्वर! सः सौरिः शनिः कथं पापः। तस्य ज्यौतिषोक्तं पापत्वं न घटत इति भवः। तत्र हेतुमभिप्रयन्नाह—यस्येति। यस्य शनेः वारे तव तुष्ट्यै अमितं व्रतं उपवासादिनियमं आचरन्ति सन्त इति शेषः। कथमाचारादेव तस्यापापत्वं निर्णेयमित्यत आह—सदिति। इह लोके सत् साधु असच्च असाधु वा सतां आचारादेव विभाव्यं निर्णेयं हि। स्ववारे सतां श्रीनिवासप्रीणनव्रताद्याचारदर्शनात्सौरेः पापत्ववाचोयुक्तिरयुक्तेति भावः। अत्र शनेरपापत्वनिर्णये तद्वारे व्रताचरणरूपस्सदाचारः प्रमाणतयोपन्यस्तः। 'आचारो नाम शिष्टानामभिमतो दयादाक्षिण्यादियुक्तो वृत्तविशेषः' इति माधवीये॥

आत्मतुष्टिप्रमाणं यथा—

भक्तिः प्रपत्तिरथवा भवदाप्तेस्साधने स्मृते तदपि। प्रपदन एव विशेषात्परितोषोऽस्मादृशां वृषाद्रिमणे ॥ २०१२ ॥

अत्र—

भक्त्या परमया वाऽपि प्रपत्त्या वा महामुने।
प्राप्योऽहं नान्यथा प्राप्यो मम कैंकर्यलिप्सुभिः ॥

इति विकल्पितयोर्भक्तिप्रपत्त्योः प्रपदन एवास्मादृशां प्रवृत्तावात्मतुष्टिरूपं प्रमाणमुपन्यस्तम् ॥

एवं श्रुतिलिङ्गादिकमपि मीमांसकोक्तं प्रमाणं संभवदिहोदाहार्यम् ॥

तत्र श्रुतिर्यथा—

नाम्नैव हरिरसि त्वं दुरितं हरसे किमत्र लिङ्गेन। स्वकरप्रकोष्ठकङ्कणसमीक्षणे न खलु दर्पणापेक्षा ॥ २०१३ ॥

अत्र श्रीनिवासस्य हरिरित्यभिधानश्रुत्या सकलदुरितहारित्वं समर्थितम्। 'श्रुतिर्नाम निरपेक्षरवः' इत्याहुस्तत्रत्यविदः ॥

यथावा—

धत्से नाभयमुद्रामभयं ब्रह्मेति यच्छ्रुतोऽसि हरे। श्रुत्या परमे तत्त्वे निर्णीते को नु लिङ्गमाद्रियते ॥ २०१४ ॥

हे हरे श्रीनिवास! त्वं अभयमुद्रां ऊर्ध्वाग्राङ्गुलिकपाणितलप्रदर्शनरूपामभयसूचनीं मुद्रां न धत्से न धारयसे। श्रीनिवासस्यावाक्कृताग्राङ्गुलिककरतलप्रदर्शनरूपवरदानसूचकमुद्रावद्दंनेन

तादृशाभयमुद्रावहनाभावात्तथोक्तिः । यत् यस्मात् त्वं अभयं ब्रह्मेति श्रुतोऽसि 'एतदमृतमेतदभयमेतद्ब्रह्म' इति, 'अभयं वै ब्रह्म' इति च श्रुतिप्रथितोऽसि । अविद्यमानं भयं यस्मादिति पञ्चमीबहुव्रीहिः । तथाहि—श्रुत्या अभिधानश्रुत्यैव परमे श्रेष्ठे तत्त्वे अर्थयाथात्म्ये निर्णीते सति लिङ्गं तदनुमापकं सामर्थ्यरूपं कोनु आद्रियते । श्रुत्यैवार्थनिर्धारणे दुर्बललिङ्गादरणं न क्रियत एवेति भावः । किंच 'नारायणः परं ब्रह्म तत्त्वं नारायणः परः' इत्यादिश्रुत्या नारायणस्यैव परतत्त्वे निर्णीते सति लिङ्गं शिवलिङ्गं कोनु नामाद्रियते । श्रुत्यर्थयाथात्म्यवेत्ता नारायणादन्यं रुद्रादिकं परतत्त्वतया नाद्रियत इत्यर्थोऽपि प्रतीयते । अत्र श्रीनिवासस्य 'अभयम्' इति श्रुत्या अभयमुद्राधारणरूपलिङ्गानावश्यकत्वं समर्थितम्॥

यथावा—

**श्रुतिराह श्रीपतिरिति मामाभ्यां किमिति शङ्खचक्रे प्राक् । अजहाः किमीहगिरीन्दो श्रौतेऽर्थे न खलु लिङ्गमाद्रियते ॥ २०९५ ॥**

हे अहिगिरिन्दो ! श्रुतिः 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादिश्रुतिः मां श्रीपतिरित्याह । आभ्यां शङ्खचक्राभ्यां मम किं साध्यं श्रीपतित्वस्य श्रुत्यैव निर्णये शङ्खचक्रधारणरूपलिङ्गेन किं प्रयोजनमिति प्राक् पूर्वं शङ्खचक्रे अजहाः अत्याक्षीः किमित्युत्प्रेक्षा । तथाहि श्रुते निरपेक्षत्वसिद्धेऽर्थे लिङ्गं नाद्रियते तान्त्रिकैरिति शेषः । अत्राप्युदाहृतश्रुत्या शङ्खचक्रधारणानावश्यकता समर्थिता । अत्रान्यहेतुकश्शङ्खचक्रत्याग उक्तहेतुकस्संभाव्यते । अत्र कस्यचिद्राक्षसशत्रुविजयाय भगवान् श्रीनिवासश्शङ्खचक्रे व्यतारीदिति पौराणिकी कथाऽनुसंहिता ॥

लिङ्गं यथा—

**भुवनोपकारहेतोस्तव नो भगवन् प्रवृत्तिरेकाऽपि । किन्तु स्वार्था मन्ये निखिलशरीरत्वमेव तद्वदति ॥ २०१६ ॥**

अत्र भगवतश्श्रीनिवासस्य 'यस्य पृथिवी शरीरम्' इत्यादिश्रुतिप्रसिद्धसर्वोपकारकसर्ववस्तुशरीरकत्वलिङ्गेन तत्प्रवृत्तेः स्वप्रोजनैकतत्परत्वं समर्थितम् ॥

ननु लिङ्गस्य सामर्थ्यात्मकस्य शब्दप्रमाणबहिर्भूततया शब्दप्रमाणप्रस्तावे कथमुदाहरणमिति चेन्न, स्वतस्तस्य प्रमाणताविरहेण वेदानुमापकतयैव प्रमाणत्वाच्छब्दप्रमाण एवान्तर्भावितत्वात् । एवं लौकिकलिङ्गानामपि लौकिकशब्दोन्नायकतया लौकिकशब्द एवान्तर्भावः । तादृशलिङ्गमप्येवमेवोदाहार्यम् ॥

वाक्यं यथा—

**अघनिष्कृतिप्रकरणे प्रबलं निश्चित्य तावकं वाक्यम् । जननि वृणे शरणं त्वां प्रकरणतो वाक्यमेव हि बलीयः ॥ २०१७ ॥**

अघनिष्कृतिप्रकरणे प्रायश्चित्तप्रसक्तौ सत्यां तावकं वाक्यं—

'प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे ।
मामेकां देवदेवस्य महिषीं शरणं व्रजेत्' ॥

इति लक्ष्मीतन्त्रोक्तं त्वद्वाक्यं प्रबलं निश्चित्य हे जननि श्रीः ! त्वां शरणं वृणे । हि यस्मात् प्रकरणतः उभयाकाङ्क्षालक्षणात् वाक्यं समभिव्याहारलक्षणं वाक्यं बलीयः प्रबलं आहुः । तान्त्रिका इति शेषः । तथाच पारमर्षं सूत्रम्—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थवि-

प्रकर्षात्' इति, 'निरपेक्षो रवश्श्रुतिः । सामर्थ्यं लिङ्गम् । समभिव्याहारो वाक्यम् । उभयाकाङ्क्षा प्रकरणम् । देशसामान्यं स्थानम् । यौगिकश्शब्दस्समाख्या' इति संक्षेपः । अत्र प्रकरणवाक्यरूपशब्दप्रतिपाद्यार्थद्वयश्लेषमूलाभेदाध्यवसायोत्तम्भितेन प्रकरणाद्बलीयसा वाक्येनोक्तार्थसमर्थनम् ॥

यथावा—

**नाम्नैव माधवे त्वय्यात्तदरारिणि कुमार एष इति । वाक्यं कश्श्रद्दध्याच्छ्रुतिलिङ्गाभ्यां हि दुर्बलं वाक्यम् ॥ २०९८ ॥**

हे भगवन्! नाम्नैव माधवे 'माधवं वेङ्कटगिरौ' इति भगवच्छास्त्रोक्तेरिति भावः । अनेनाभिधानश्रुतिर्दर्शिता । आत्ते श्रीभगवद्रामानुजाचार्यात्स्वीकृते दरारिणी शङ्खचक्रे येन तस्मिन्निति लिङ्गम् । त्वयि एष कुमारः स्कन्द इति केषांचिन्मूर्खाणां वाक्यं कश्श्रद्दध्यात् । हि यस्मात् श्रुतिलिङ्गाभ्यां तदपेक्षया वाक्यं दुर्बलम् । पूर्वोदाहरणे प्रकरणाद्वाक्यस्य प्राबल्यं प्रादर्शि । अत्र तु श्रुतिलिङ्गापेक्षया तस्य दौर्बल्यमिति विशेषः । अन्यत्तुल्यम् ॥

प्रकरणं यथा—

**यत्रक्कवाऽस्तु तव गुणकथाप्रकरणं तदेव साधुजनैः । आद्रियते न स्थानं परमपि तत्प्रकरणाद्धि हीनबलम् ॥ २०९९ ॥**

हे भगवन्! तव गुणकथायाः प्रकरणं प्रस्तावः यत्रक्कवा अस्तु अप्रशस्तेऽपि देशे अस्त्वित्यर्थः । तदेव त्वद्गुणकथाप्रकरणमेव साधुजनैः भागवतैः आद्रियते परं स्थानं परमं पदमपि नाद्रियते तेषां भगवत्कथैकभोग्यत्वादिति भावः । तत्

परं स्थानं परत्वेन सूत्रोक्तं देशसामान्यरूपस्थानं च प्रकरणादपि प्रस्तावादपि उभयाकाङ्क्षारूपप्रकरणादपि च हीनबलं दुर्बलं हि। पारदौर्बल्यस्य सूत्रितत्वादिति भावः। अत्र उक्तरीत्याप्रकरणस्थानशब्दवाच्यार्थद्वयश्लेषभित्तिकाभेदाध्यवसायदत्तहस्तेन प्रकरणेन विवक्षितार्थसमर्थनम् ॥

स्थानं यथा—

**स्थानेन व्यपदिष्टा भाति समाख्याऽपि वेङ्कटेश तव। यत्कथितं जैमिनिना स्थानं बलवत्तरं समाख्यायाः ॥ २१०० ॥**

हे वेङ्कटेश! तव श्रुतिशतप्रथितवैभवस्येति भावः। समाख्याऽपि नामापि स्थानेन त्वदावासभूतवेङ्कटाद्रिलक्षणस्थानेन व्यपदिष्टा व्यपदेशं ख्यातिं प्राप्ता "वासिष्ठव्यपदेशिनः" इतिवत् वेङ्कटाद्रिरूपस्थानपुरस्कारेणैव हि तव वेङ्कटेश इत्यभिधेति भावः। यत् यस्मात् जैमिनिना समाख्यायाः यौगिकशब्दरूपसमाख्यायाः नाम्नश्च तदपेक्षयेत्यर्थः। स्थानं देशसामान्यरूपं आवासभूतं च स्थानमेव बलवदिति कथितं पारदौर्बल्यसूत्रेण। तस्मात् तव समाख्याऽपि स्थानेन व्यपदिष्टा भातीति योजना। अत्र समाख्यास्थानशब्दप्रतिपाद्यार्थद्वयश्लेषमूलाभेदातिशयैकीकृतेन स्थानेन भगवत्समाख्याया व्यपदेश्यत्वं समर्थितम् ॥

समाख्या यथा—

**वेधास्स कृत्तिवासास्सान्ता वृद्धश्रवाश्च विश्वात्मन्। नान्तस्त्वमत्र मानं भवति हि युष्मत्समाख्यैव ॥ २१०१ ॥**

हे विश्वात्मन्! इदं अत्रैव उदाहरिष्यमाणवचनस्थविश्वात्मशब्दप्रत्यभिज्ञापकम्। स इत्येतत् वेधःप्रभृतिषु सर्वेष्वप्यनुषञ्जनीयम्। सः लोकस्रष्टृतया प्रख्यातः वेधाः चतुर्मुखः, सः जगत्संहर्तृत्वेन प्रसिद्धः कृत्तिवासाः पिनाकी, सः अमराधीशत्वेन प्रथितः वृद्धश्रवाः इन्द्रश्च सान्ताः अन्तेन सह वर्तन्त इति तथोक्ताः। विनश्वरा इत्यर्थः। पक्षे उक्तास्सर्वेऽपि शब्दास्सकारान्ता इत्यर्थः। सः 'अजरोऽमृतः। विजरो विमृत्युः। सत्यं ज्ञानमनन्तम्' इति श्रुतिशतख्यापितः त्वं नान्तः अनन्तः नशब्दपूर्वको बहुव्रीहिः। नित्य इत्यर्थः। पक्षे विश्वात्मन्निति शब्दो नकारान्त इत्यर्थः। अत्र मानं प्रमाणं युष्माकं ते च त्वं च यूयं तेषां 'त्यदादीनां मिथस्सहोक्तौ यत्परं तच्छिष्यते' इति परैकशेषः। समाख्या नामैव। अत्र—

ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे।
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान्।
एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः॥

इति श्रीमन्महाभारतवचनं,

ब्रह्मा शम्भुस्तथाऽर्कश्च चन्द्रमाश्च शतक्रतुः।
एतदाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा॥
जगत्कार्यावसानेषु वियुज्यन्ते स्वतेजसा।
वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति च॥

इति श्रीविष्णुधर्मोत्तरवचनं चार्थतः प्रत्यभिज्ञाप्यते। अत्र विवक्षितेऽर्थे समाख्यायाः प्रमाणता॥

यथावा—

नतनिवहेन क्रीतो नितरां चक्री समिद्धया

भक्तया । चक्रीति समाख्यैव क्रीतत्वममुष्य वदति सुस्पष्टम् ॥ २१०२ ॥

चक्रीति समाख्या नामैव अमुष्य भगवतः क्रीतत्वं क्रयणकर्मत्वं, पक्षे क्रीत्याकारकवर्णेन इतत्वं युक्तत्वम् । अत्रापि स्वाविवक्षिते क्रीतत्वरूपेऽर्थे शब्दार्थतादात्म्यमूलकश्लेषमाहिम्ना समाख्यैव प्रमाणतां गमिता । अत्र 'भक्तिक्रीतो जनार्दनः' इति प्रमणार्थोऽनुसंधेयः ॥

यथावा—

त्वत्पदविधुतो रविरिह खेऽटेष्वग्रेसरो भवन् भगवन् । व्यग्रोऽप्यभवन्नूनं समाख्ययैवावगम्यतेऽर्थोऽसौ ॥ २१०३ ॥

हे भगवन्! रविः भानुः रविशब्दश्च । त्वत्पदेन तव चरणरुचोति यावत् विधुतः अतएव खेटेषु गर्ह्येषु 'खेटगर्ह्याणकास्समाः' इत्यमरः । गगनचारिषु ग्रहेष्विति तत्त्वम् । अग्रेसरः श्रेष्ठः अन्यत्र अग्रे आदौ सरः शब्दार्थतादात्म्यबलेन रेफविशिष्ट इत्यर्थः । भवन् सन् व्यग्रोऽपि व्याकुलोपि अभवत् । विः विवर्णः अग्रे प्रान्ते यस्य स तथाभूतश्च "अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवत्" इति मेदिनी । अभवत् । नूनमिति सम्भावनायाम् । अत्र तस्य समाख्ययैवायमर्थः अवगम्यते । उक्तरीत्या समाख्यया तादृशार्थलाभादिति भावः । अत्रापि स्वविवक्षितेऽर्थे समाख्यैव श्लेषमाहिम्ना प्रमाणीकृता ॥

यथावा—

विधुरिह विभो भवन्मुखविप्रतिपन्नो धुतस्तत-
स्सख्यमगात् । अस्य समाख्यैव वदत्यमुमर्थं किं-
न्विहान्यमीमांसनतः ॥ २१०४ ॥

हे विभो स्वामिन्! इह विधुः इन्दुः भवन्मुखेन भवन्मुखे वा विप्रतिपन्नः विप्रतिपत्तिं गतः विरोधं प्राप्त इत्यर्थः। अत एव ततः सार्वविभक्तिकस्तासिः तेन मुखेनेत्यर्थः। धुतः तिरस्कृत इति यावत्। तत इत्येतत् मध्यमाणिन्यायेनोभयान्वयि। ततः तेन सह सख्यं सौहार्दं अगात् उत्कृष्टेनावधीरितस्य निकृष्टस्य कुशलमतेर्झडिति तदाश्रयणमेवोचितमिति भावः। अमुमर्थं उक्तमर्थं अस्य विधोः समाख्यैव वदति प्रकाशयति। इह अस्मिन्विषये अन्यमीमांसनतः किं विचारान्तरमनावश्यकमिति भावः। समाख्यापक्षे तु-विधुः विधुशब्दः विभो अभवत् इति छेदः। मुखे प्रथमभागे विप्रतिपन्नः वि इत्याकाराक्षरेणाश्रितः अभवत् आसीत्। ततः अनन्तरं धुतः सार्वविभक्तिकस्तासिः। धुवर्णेन सख्यं साहित्यमिति यावत्। अगात् प्रापत्। विधुशब्द एवंनिष्पन्न इत्यर्थः। अन्यत्पूर्ववत्॥

यथावा—

आदौ स्वाराद्धश्श्रीधर मध्ये त्रासितोऽपि सु-
त्रामा । मानुगृहीतोऽन्तेऽभूदस्य समाख्यैव तमि-
ममाहार्थम् ॥ २१०५ ॥

हे श्रीधर! सुत्रामा इन्द्रः सुत्रामेति शब्दश्च। आदौ दुर्वासश्शापोपप्लवात्पूर्वं स्वः स्वर्गः राद्धं सिद्धं यस्य सः स्वा-

राद्धः स्वः स्वर्गे राद्धः संसिद्ध इति वा। सर्वैश्वर्यपरिपूर्ण इत्यर्थः 'रो रि' इति रेफलोपे 'ढ्रलोपे' इति पूर्वस्याणो दीर्घः। शब्दपक्षे तु—आदौ सु इति वर्णे आराद्धं येन सः स्वाराद्धः। मध्ये दुर्वासश्शापलक्ष्मीकटाक्षलाभयोरन्तरालसमये त्रासितः वैरोचनिप्रभृतिभिः पदभ्रंशनादिना भीषितोऽपि। अन्यत्र मध्ये सु मा इति वर्णद्वयान्तरे त्रासितः त्रा इति वर्णसमुदयः आसितः उपवेशितः यस्य स तथोक्तः। त्रा इति वर्णसमूहेन सितः बद्धः संबद्ध इति वा। अपिरत्र समुच्चये। त्रासितश्चेत्यर्थः। अन्ते पर्यवसाने मानुगृहीतः लक्ष्मीकटाक्षविषयीकृत इत्यर्थः अन्यत्र अन्ते चरमभागे मानुगृहीतः मा इति वर्णेन घटित इति यावत्। अभूत्। तमिममर्थं अस्य सुत्राम्णः समाख्यैव आह सुत्रामेति समाख्ययैव वेदितेऽस्मिन्नर्थे पौराणिकोक्तिपर्यन्तानुधावनं नापेक्षितमिति भावः। अत्र उपपादिते स्वाभिमतेऽर्थे समाख्यायाः प्रमाणता॥

यथावा—

**मापमुमापतिरन्तर्बिभर्ति तदधीनसत्त्व एवायम्। यदि दुर्ग्रहोऽयमर्थो विमृश्यतां साधु तत्समाख्यैव॥ २१०६॥**

उमापतिः शिवः मापं श्रीनाथं अन्तर्बिभर्ति अन्तरात्मतया दधाति।

ममान्तरात्मा तव च येचान्ये देहिसंज्ञिताः।
विष्णुरात्मा भगवतो भवस्यामिततेजसः॥

इत्यादिप्रमाणादिति भावः। अत एव अयं उमापतिः तदधीनसत्त्व एव तदायत्तस्वरूपस्थितिप्रवृत्तिभेद इत्यर्थः। अयमर्थः अन्तर्यामिब्राह्मणार्थाविसंवादिप्रदर्शितप्रमाणसंप्रतिपन्नोऽर्थः दुर्ग्रहो

यदि अल्पप्रज्ञैर्दुर्विज्ञानश्चेत् साधु सम्यक् तत्समाख्यैव उमापति-समाख्यैव विमृश्यतां विमर्शे अयमर्थस्स्फुटीभविष्यत्यल्पज्ञाना-मपीति भावः। समाख्यापक्षे तु उमापतिः उमापतिशब्दः अन्तः आद्यन्ताक्षरयोर्मध्ये मापं माश्च पश्च अनयोस्समाहारः मापं एवं-रूपं वर्णसमुदयं बिभर्ति। अतएव अयं उमापतिशब्दः तदधीन-सत्तः मापवर्णायत्तस्वास्थितिः उक्तमापवर्णाभावे उमापतिशब्द-सत्ताया दुर्घटत्वादिति भावः। अत्र स्वाविवक्षिते उमापतेर्भगवद-न्तरात्मकत्वे उमापतिसमाख्यायाः प्रमाणीकरणम्॥

यथावा—

**सति भवति सर्वभोग्ये कामुक इतरामिषस्य यो भगवन्। अमुकस्स काक एव स्यादेतद्वाक्ति तत्समाख्यैव॥ २१०७॥**

हे भगवन्! सर्वभोग्ये सर्वैस्सर्वप्रकारेण भोग्ये भवति सत्यपि यः इतरामिषस्य भोग्यवस्त्वन्तरस्य 'आमिषं पुंनपुं-सकम्। भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपिच' इति मेदिनी। अन्यमांसस्येत्यप्युपस्कार्यम्। कामुकः कामयिता। 'न लोक' इत्यादिकृद्योगलक्षणषष्ठीनिषेधस्य 'कमेरनिषेधः' इति पर्युदस्तत्वात् कामुकशब्दयोगे इतरामिषशब्दस्य षष्ठ्येव। सः अमुकः सोऽसौ कामुकः। अदश्शब्दसमानार्थकोऽयमव्युत्पन्नोऽ-मुकशब्दः। 'अमुकगोत्रस्यामुकशर्मणः। ज्ञातस्स्वरेणामुकः' इत्यादिप्रयोगदर्शनात्। न तु साकच्कोऽदश्शब्दः। तथा सत्यमुक इति स्यात्। काक एव वायस एव स्यात्। आमिषगृध्नुत्वा-त्तत्तुल्य एवेति भावः। पक्षे कामुकशब्दो मुकारविघटितः काक एव काकशब्द एव स्यात्। अत्र स्वाविवक्षितार्थनिर्धारणाय

ख्याविस्तैकवर्णकामुकसमाख्यायाः प्रमाणतयोपन्यास इत्यख्या-
वितवर्णसमाख्योदाहरणेभ्यः पूर्वेभ्यो विच्छित्तिविशेषशालीदम् ॥

यथावा—

**प्रतिकूलभावभाक्त्वे नूनं हंसीति भासि सिंह-
त्वम् । ईदृक्सिंहेत्येतत्पदमेव हि मानमत्र पर्या-
प्तम् ॥ २१०८ ॥**

हे सिंह हे नृसिंह! त्वं प्रतिकूलभावभाक्त्वे त्वद्विषये प्रातिकूल्यकृत्त्वे नूनं हंसीति भासि प्रातिकूल्यभाजं जनं संहरसीति मम प्रतिभासीत्यर्थः । पक्षे हे सिंहेति सिंहशब्दस्यैव संबोधनम् । प्रतिकूलभावभाक्त्वे प्रातिलोम्यप्राप्तौ हंसीति भासि हंसीत्यानुपूर्व्या प्रकाशसे इत्यर्थः । अत्र उक्तार्थे ईदृक् प्रातिलोम्यभाक्त्वे हंसीति निष्पद्यमानं सिंहेत्येतत्पदमेव मानं प्रमाणं पर्याप्तम् । किमन्यप्रमाणान्वेषणेनेति भावः । अत्र उक्तार्थे उक्तरूपं सिंहेति संबुद्ध्यन्तसमाख्यापदं प्रमाणतयोपन्यस्तमिति पूर्वस्माद्विच्छित्तिविशेषशालीदम् ॥

इत्यलङ्कारमणिहारे शब्दप्रमाणसरः पञ्चदशोत्तरशततमः.

## अथार्थापत्तिसरः (११६)

**अन्यथाऽनुपपत्त्या यत्किंचिदर्थस्य कल्प्यते ।
अर्थान्तरं तां कथयन्त्यर्थापत्तिं विचक्षणाः ॥**

किंचिदर्थान्यथानुपपत्त्या अर्थान्तरकल्पनमर्थापत्तिर्नामालंकारः ॥

यथा—

नन्दकिशोरकरदरुचिबृन्दं नितरामचूचुरत्कुन्दम्। उपपद्यतामपरथा विपिनभवस्यापि दान्तताऽस्य कथम् ॥ २१०९ ॥

कुन्दस्य विकारः पुष्पं कुन्दं 'पुष्पमूलेषु बहुळम्' इति बहुलग्रहणाद्वैकारिकाणो लुक्। 'व्रिहीनं प्रसवे सर्वम्' इति क्लीबता। इदं कर्तृ माघ्यकुसुममित्यर्थः। नन्दकिशोरकरदरुचिबृन्दं कर्म अचूचुरत् अचोरयत्। अपरथा एवं चौर्याभावे विपिनभवस्य आरण्यस्यापि अस्य कुन्दस्य दान्तता दन्तसंबन्धिता कथमुपपद्यतां न कथंचिदप्युपपद्यत इत्यर्थः। कुन्दशब्दस्य दवर्णान्तत्वाद्दान्तत्वमिति स्तुस्थितिः। अत्र कुन्दस्य दान्ततान्यथाऽनुपपत्त्या भगवद्दन्तरुचिबृन्दचौर्यनिर्णयनिबन्धनादर्थापत्तिः॥

यथावा—

त्वत्पदगतिविद्वेष्टाऽशुचं ततः प्राप्य जननि शुण्डालः। चण्डालोऽभून्मन्ये मातङ्गत्वं कथंन्वितरथाऽस्य ॥ २११० ॥

हे जननि! शुण्डालः गजः त्वत्पदगतिविद्वेष्टा त्वच्चरणगमनद्वेषी तत्र पदं स्थानं परमव्योम तस्य गतिः प्राप्तिः तस्याः विद्वेष्टेति च। अतएव ततः विद्वेषात् शुचं शोकं प्राप्य। पक्षे अशु चं इति छेदः। अशु शुवर्णरहितं यथास्यात्तथा चं 'न गिरा गिरा' इति न्यायेन तत्रैव शुवर्णस्थाने चकारं प्राप्य चण्डालोऽभूत्। 'यस्तु नारायणं द्वेष्टि तं विद्यादन्त्यरेतसम्' इतिवत् लक्ष्मीपदगतिविद्वेषस्य फलमिदमिति भावः। शुण्डाल-

शब्दः शुकारापनयनपूर्वकं तत्रैव चकारन्यसनेन चण्डाल इति निष्पन्न इत्यर्थः। इतरथा उक्तरीत्या चण्डालत्वाप्राप्तौ अस्य शुण्डालस्य मातङ्गत्वं कथं नु मातङ्गशब्दाभिलपनीयत्वं न स्यादिति भावः। 'मातङ्गश्श्वपचे गजे' इति मेदिनी। अत्र गजस्य मातङ्गत्वव्यवहारान्यथानुपपत्त्या चण्डालत्वं श्लेषमहिम्ना कल्प्यते ॥

यथावा—

हरिमुखरुचिपरिभूतो विधुरिति मन्येऽन्यथा विवर्णमुखः। अतिपाण्डुरुक्प्रतिपदं क्षयमपि जाड्यं कुतोऽयमुपयायात् ॥ २११ ॥

विधुः इन्दुः हरेः भगवतः मुखेन परिभूत इति मन्ये। अन्यथा एवं परिभवाभावे अयं विधुः अतिपाण्डुरुक् अतिमात्रपाण्डुरोगवान् 'स्त्री रुग्रुजा' इत्यमरः। अतएव विवर्णमुखः निस्तेजस्कवदनः। पक्षे अतिविशददीप्तिः 'स्युः प्रभा रुग्रुचिः' इत्यमरः। वि इति वर्णो मुखे अग्रभागे यस्य स तथोक्त इत्यर्थः। क्षयं जाड्यं राजयक्ष्माख्यरोगमपि। पक्षे क्षयं कलापचयं 'क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च' इति मेदिनी। जाड्यं शैत्यमपीत्यर्थः। कुतः उपयायात्। अत्र विधोर्विवर्णमुखत्वाद्यन्यथानुपपत्त्या हरिमुखपरिभूतत्वं कल्प्यते। श्लेषोत्तम्भिता प्राग्वत् ॥

यथावा—

तव सौकुमार्यभूम्ना नवनीतं जननि खर्वितौन्नत्यम्। आद्यन्तनतमितरथा कुतो वनीगर्भगं तदेतत्स्यात् ॥ २१२ ॥

हे जननि ! नवनीतं तव सौकुमार्यभूम्ना खर्वितौन्नत्यं संकुचितसौकुमार्योच्छ्रयं इतरथा तदेतत् नवनीतं आद्यन्तावभिव्याप्य आद्यन्तं नतं सर्वदा भुग्नं सदित्यर्थः । कुतो हेतोः वन्याः वनस्य गर्भे मध्यप्रदेशं गच्छतीति वनीगर्भगं स्यात् । त्वत्सौकुमार्यकर्तृकस्वसौकुमार्यखर्वीकरणविरहे उक्तरीत्या कुतो वनीगर्भे प्रविशेदिति भावः ॥

पक्षे नवनीतमिति पदं आद्यन्तयोः नतौ नकारतकारौ यस्य तत्तथोक्तं वनी इति वर्णौ गर्भगौ यस्य तत्तथोक्तं स्यात् । नवनीतशब्दस्वरूपस्यैवंविधत्वादिति भावः । अत्र नवनीतस्याद्यन्तभुग्नत्व-वनीगर्भगत्वान्यथानुपपत्त्या श्रीसौकुमार्यातिशयखर्वीकृतौन्नत्यता संभाविता ॥

यथावा—

**मन्ये तटितस्त्वच्छ्रीजिहीर्षवश्श्रीस्त्वयाऽऽहता गाढम् । कथमितरथा त्ववाक्कृताशिरसोऽपि न तान्ततां समत्याक्षुः ॥ २११३ ॥**

हे श्रीः ! तटितः त्वच्छ्रीजिहीर्षवः त्वल्लक्ष्मीहरणेच्छवस्सत्यः अतएव त्वया गाढं आहताः अभिहताः इथरथा तु एवमाघाताभावे तु अवाक्कृतशिरसोऽपीति लोकोक्तिः । अतिवेलप्रयासभाजोऽपीति यावत् । तान्ततां ग्लानतां न समत्याक्षुः । तटित इति शब्दस्य प्रातिलोम्येऽपि यथापुरमवस्थानेन तवर्णान्तत्वाप्रहाणात्तथोक्तिः । अर्थगतबहुत्वस्य शब्दे आरोपः । अत्रावाक्कृतशिरस्त्वेऽपि तान्तत्वाप्रहाणान्यथानुपपत्त्या तटितां लक्ष्मीगाढप्रहृतत्वं कल्प्यते ॥

यथावा—

**मकरन्देनाम्ब त्वद्वचनरसस्तेयमेव न कृतं चेत् ।**

सूनावस्थानात्स्यादस्य किमुद्वासनावाप्तिः ॥

अस्य मकरन्दस्य सूनायां हिंसास्थाने। सूने कुसुमे इति तु तत्त्वं अवस्थानात् स्थितेः 'सूनं प्रसवपुष्पयोः। सूना पुत्र्यां वधस्थाने गळशुण्डिकयोः स्त्रियाम्' इति मेदिनी। उद्वासनं प्रमथनं तस्यावाप्तिः 'उद्वासनप्रमथनक्रथनोज्ज्वासनानि च' इति वधपर्यायेष्वमरः। उत्पूर्वकात् 'वस स्नेहच्छेदापहरणेषु' इति चौरादिकाद्धातोर्ल्युट्। उत्कृष्टा वासना परिमळः तस्याः अवाप्तिरिति तु तत्त्वम्। अत्र मकरन्दस्य उपपादितश्लेषसंपादितसूनावस्थानोद्वासनावाप्त्यन्यथानुपपत्त्या जगज्जननीवचनरसचोरत्वं कल्प्यते ॥

यथावा—

त्वद्वचनधुतं गव्यं नो यदि तदिदं पुरोऽगमारूढम्। मध्येऽतिभयेऽवाप्ते श्रीमन्व्याधिगतमन्ततः कस्मात् ॥ २११५ ॥

हे भगवन्! गव्यं गोपयः त्वद्वचनेन धुतं तिरस्कृतमेव नो यदि तदिदं गव्यं पुरः आदौ अगं अद्रिं आरूढं सत् कर्तरि क्तः। लोके प्रतिपक्षनिर्धूतानां गिरिदुर्गप्रवेशस्सुप्रसिद्ध इति भावः। मध्ये गिरिप्रदेशगमनावसरान्तरे अतिभये प्रत्यनीकभूतत्वद्वचनस्मरणेनात्यन्तिकत्रासे अवाप्ते सति अन्ततः पर्यवसाने व्याधिगतं 'द्वितीया श्रित' इत्यादिना समासः प्राप्तरोगं चेत्यर्थः। अतिमात्रभयसंभ्रान्तानां व्याधेरपि संभवादिति भावः। कस्माद्भवेत् त्वद्वचनधुतत्वादेव गव्यस्येदृगवस्थावाप्तिरिति भावः। अर्थान्तरं तु शब्दपरम्। अस्मिन् पक्षे पुरः। गं। अतिभये। अवाप्तेः। इति छेदः। प्राथमिकार्थे अवाप्ते इति सप्तम्यन्ततया छेदे परत्रस्थितश्रीशब्दशाकारस्य 'अनचि च' इति वैकल्पिकं द्वित्वम्। हे अतिभ

अतितेजस्विन् श्रीमन्! गव्यं गव्यमिति पदं पुरः अग्रे गं गवर्णं आरूढं प्राप्तं तस्य मुखे गवर्णस्य श्रूयमाणत्वात्। ये 'गोपयसो-र्यत्' इति सूत्रेण विहिते वैकारिके यादौ प्रत्यये परे मध्ये गकार-यकारयोरन्तराळे अवाप्तेः अवस्य 'वान्तो यि प्रत्यये' इति सूत्र-विहितस्य ओकारस्थानिकावादेशस्य आप्तेः प्राप्तेर्हेतोः अन्ततः आन्ते व्याधिगतं व्येत्याकारकवर्णसमुदायं प्राप्तं भवेत्। गोशब्दा-दुक्तरीत्या यत्प्रत्यये अवादेशे च सत्येव गव्यशब्दस्य व्यवर्णान्तत्वं सिध्येत् नान्यथेति भावः। अत्रापि गव्यस्य पुरोऽगारूढत्वाद्यन्य-थानुपपत्त्या शब्दार्थतादात्म्यमूलकश्लेषावलम्बिन्या भगवद्वचन-स्वादिमविजितत्वं कल्प्यते। विच्छित्त्यन्तरं तु स्पष्टमेव॥

यथावा –

स्वकरेण तव भुजश्रीस्पर्धी दन्तावळो मुखेऽ-
भिहतः। मन्येऽन्यथा कथमभूद्विरदत्वं द्विरसना-
द्रिनाथस्य॥ २११६॥

अभूद्विरदत्वमित्यत्र विरदत्वमिति छेदः। विरदत्वं विभ्रं-शितदन्तत्वम्। द्विरदत्वमिति परिहारः॥

यथावा—

गाढं प्रहृतस्य मुखे त्वत्तेजस्पर्धिनोऽनलस्य
हरे। रदनास्स्फुलिङ्गदम्भाज्जगळुः कथमन्यथैष ह-
विरदनः॥ २११७॥

एषः ह विरदनः इति छेदः। हेत्यव्ययं प्रसिद्धौ 'ह संबुद्धौ प्रसिद्धौ च' इति रत्नमाला। पक्षे हविरदन इति समस्तं पदम्। हुताशन इत्यर्थः। अनयोरुदाहरणयोरपि विरदत्वाविरदनत्वान्य-थानुपपत्त्या श्लेषभित्तिकाभेदाध्यवसायसंपादितया दन्तावळान-लयोर्मुखेऽभिहतत्वस्य कल्पनम्॥

यथावा—

**वसुदेवसुतो भगवांत्सूतोऽजनि पारदश्च युक्त-मिदम् । कथमितरथा रसो वै स इति श्रुतिवच-नमर्थवत्त्वमियात् ॥ २११८ ॥**

भगवान् वसुदेवसुतः सूतः पारदश्च अजनीति युक्तम् । वस्तुतस्तु सूतः अर्जुनस्य सारथिः । जनिपारद इति समस्तं पदम् । जनेः जन्मनः पारं ददातीति पारदः जन्मपरंपरापारभूत-निश्श्रेयसप्रद इत्यर्थः ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥

इति गानात् । अनेन—

संसारार्णवमग्नानां विषयाक्रान्तचेतसाम् ।
विष्णुपोतं विना नान्यत्किंचिदस्ति परायणम् ॥
दुर्गे संसारकान्तारमपारमभिधावताम् ।
एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः ॥

इत्यादिकं स्मार्यते । इतरथा एवं सूतत्वपारदत्वाभावे 'रसो वै सः' इति श्रुतिवचनं कथमर्थवत्स्यात् तस्य रसत्वादेव सूतत्व-पारदत्वे युक्ते इति भावः । 'रसस्सूतश्च पारदः' इति त्रयाणामपि शब्दानां तुल्यार्थकत्वानुशासनात् । रसः आनन्दमय इति वस्तु-स्थितिः । अत्र भगवतो रसत्वान्यथानुपपत्त्या सूतत्वपारदत्वे कल्प्येते ॥

यथावा—

**अञ्जनमञ्जनगिरिपतिमञ्जुलसुषमां जहार म-न्येऽहम् । सुदृशामिदमक्षिगतं ददृशे कथमन्यथा तदिदम् ॥ २११९ ॥**

सुदृशां विदुषां योषितां च अक्षिगतं द्वेष्यं चक्षुर्विषयं च 'द्वेष्ये त्वक्षिगतः' इत्यमरः। अत्राञ्जनस्य सुदृगक्षिगतत्वान्यथानुपपत्त्या भगवद्विग्रहसुषमाहरणदोषवत्त्वकल्पनम् ॥

यथावा—

**स्वशरीरतोऽहरत्तव धम्मिल्लरुचिं घनाघनो मन्ये। कथमन्यथाऽस्य कमले जगदन्तस्थावरापकीर्तिजनिः ॥ २१२० ॥**

हे कमले! घनाघन स्वशरीरतः निजवपुषा तव धम्मिल्लरुचिं अहरत् अमुष्णात् इति मन्ये। अन्यथा अस्य घनाघनस्य जगदन्तः लोकमध्ये अपगता कीर्तिः यस्यास्सा अपकीर्तिः सा चासौ जनिश्च स्थावर इत्यपकीर्तिजनिः स्थावरत्वेनाप्रशस्तं जन्मेत्यर्थः। कथं भवेत्। उक्तविधशारीरकर्मदोषवशादेव स्थावरजन्मलाभ इति भावः॥

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥

इति मनुस्मरणात्। पक्षे अस्य संबन्धसामान्ये षष्ठी। अस्मात् घनाघनादित्यर्थः। वरापकीर्तिजनिः। अपां समूहः आपं वरं च तत् आपं च वरापं। कीर्तिः कर्दमः। तयोः जनिः उत्पत्तिः जगदन्तस्था जगन्मध्यस्थिता। घनाघनादेव हि जगति सलिलपङ्कसंभव इति भावः। अत्र घनाघनस्य जगदन्तस्थावरापकीर्तिजन्मलाभान्यथानुपपत्त्या लक्ष्मीधम्मिल्लरुचिचौर्यरूपकायिकदोषकल्पनम्। श्लेषोत्तम्भितत्वं तु पूर्ववदेव ॥

यथावा—

**तावकनखानि गोभिस्तारकनिकरो व्यदूदुष-**

न्मन्ये । कथमपरथा सदाख्योऽप्येष हि वैहायसीं गतिं विन्देत् ॥ २१२१ ॥

हे जननि! तारकाणां उडूनां आपदादिकृच्छ्रादुत्तारकाणामिति च गम्यते। निकरः तावकनखानि गोभिः वाग्भिः किरणैश्च व्यदूदुषत् दूषयति स्मेति मन्ये। अपरथा एष तारकनिकरः सदाख्यः साधुरित्याख्यावानपि सदित्याख्या नाम यस्य स इति वस्तुस्थितिः 'भं नक्षत्रं तारकं सत्' इत्यनुशासनात्। वैहायसीं पक्षिसंबन्धिनीं गतिं कर्मफलं कथं विन्देत् 'वाचिकैः पक्षिमृगताम्' इत्यनन्तरपूर्वोदाहरणदर्शितप्रमाणेन वाचिककर्मदोषफलतया प्रतिपादिता वैहायसी गतिः कथं सत्वेन प्रतीतस्यापि संभवेदिति भावः। वैहायसीं अन्तरिक्षभवां गतिं गमनमिति तु तत्त्वम्। 'विहायश्शकुने पुंसि गगने पुंनपुंसकम्' इति मेदिनी। अत्र तारकनिकरस्य वैहायसगतिप्राप्त्यन्यथानुपपत्त्या लक्ष्मीचरणनखकर्मकवाक्करणकदूषयितृत्वं संभाव्यते ॥

यथावा—

अमलद्विजस्तव स्मितवसुहारी मानसेऽभवन्नूनम्। कथमन्यथा प्लवैस्सह वसेदसावन्त्यजत्वमासीदन् ॥ २१२२ ॥

अमलद्विजः हंसः निर्मलो विप्रश्चेत्यपि गम्यते। मानसे मनसि तव स्मितस्य वसूनि धनानि हरतीति स्मितवसुहारी अभवत् नूनम्। अन्यत्र स्मितस्य वसुः रश्मिः स इव हारी मनोहरः स्मितवद्विशद इत्यर्थः। मानसे तन्नाम्नि सरसि अभवत् सत्तामलभतेति योजना। हंसानां मानसनिवासित्वादिति भावः। अन्यथा एवं मानसकर्मदोषविरहे अन्त्यजत्वमा-

सीदन् 'मानसैरन्त्यजातिताम्' इति प्रागुदाहृतवचनप्रतिपादित-मानसकर्मदोषफलभूतमन्त्यजातित्वं प्राप्नुवन् सन् अन्तिमजकार-वत्तामिति तु तत्त्वम्। प्लवैः चण्डालैः कारण्डवाख्यविहगैश्च कथं सह वसेत्। 'चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः, मद्गुः कारण्डवः प्लवः' इति चामरः। 'हंसकारण्डवाकीर्णाम्' इत्यादौ सर्वत्र हंसस्य कारण्डवसहचारित्वं हि वर्ण्यते 'प्लवस्स्यात्प्लवने मेळे भेकेऽवौ श्वपचे पशौ, इत्युपक्रम्य 'कारण्डवाख्यविहगे' इति मेदिनी च। एवंचोपदर्शितोदाहरणत्रयेण करणत्रयनिर्वर्तितकर्मदोषफलानि क्रमेण दर्शितानि। अत्रामलाख्यद्विजस्यान्त्यजत्व-प्राप्त्यन्यथानुपपत्त्या मानसिकलक्ष्मीस्मितवसुचौर्यरूपदोषवत्ता कल्पिता ॥

यथावा—

**अग्रकराहितमिह तव कटकं कर्कटकतां गतं मन्येऽहम्। कथमन्यथाऽस्य कमले सिंहमुखत्वं शुचिद्युतिपदत्वं वा ॥ २१२३ ॥**

हे अम्ब! तव अग्रश्चासौ करश्च अग्रकरः कराग्रमित्यर्थः 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदात्' इत्यवयवावयविनोरभेदः। तस्मिन् आहितं न्यस्तं कटकं वलयं कर्कटकतां कर्कटकराशितां गतं मन्ये 'स्यात्कुळीरः कर्कटकः' इत्यमरः। 'स्यात्कर्कटः कर्कटकश्च कर्की' इति कर्कटराशिनामपर्यायेषु विद्या-माधवः। पक्षे अग्रे मुखभागे कर् इति वर्णसमुदयेन आहितः कर् आहितो यस्मिन्निति वा। कटकशब्दः कर्कटकतां प्रपद्यत इत्यर्थः। अन्यथा कर्कटकत्वायोगे अस्य कटकस्य कथं सिंहमुखत्वं सिंहराशेः पूर्वगण्यत्वं स्यात् सिंहराशेः कर्कटक-राश्यनन्तरभावित्वादिति भावः। सिंहस्य मुखमिव मुखं यस्य

स तथोक्तः तत्त्वमिति वस्तुस्थितिः। सिंहमुखाकारवत्त्वं कटकस्य प्रसिद्धम्, यत् सिंहललाटकटकमिति व्यवह्रियते जनैः। शुचिद्युतेः सितकिरणस्य पदं स्थानं तत्त्वं वा कथं भवेत् कर्कटकत्वादेव चन्द्रस्य क्षेत्रमासीदिति भावः। 'कर्कटस्य निशाकरः' इति कर्कटस्य नक्षत्रतोक्तेः। वस्तुतस्तु शुचेः शुद्धायाः द्युतेः कान्तेः पदं स्थानं आधार इत्यर्थः। तथात्वं, यद्वा शुचिद्युतेः अग्नितुल्यदीप्तेः पदं अत्युज्ज्वलमित्यर्थः। अत्र कटकस्य सिंहमुखत्वाद्यन्यथानुपपत्त्या कर्कटकत्वं कल्प्यते॥

यथावा—

त्वन्नखसंघर्षीन्दुस्तैश्शस्त्राशस्त्रि मर्दितो मन्ये। अहिगिरिनाथेतरथा वहति स मृदुलाञ्छितां कुतो मूर्तिम्॥ २१२४॥

सः इन्दुः मृदुलां मृद्वीं छितां छिन्नां च मूर्तिं कुतो वहति। शस्त्राशस्त्रिमर्दितत्वादेव हि मूर्तेर्मृदुत्वं छिन्नत्वं चेति भावः। मृदुश्चासौ लाञ्छिता च मृदुलाञ्छिता तामिति तत्त्वम्। मृद्वी कलङ्किता चेत्यर्थः। स्पष्टमन्यत्। अत्र मृदुलाञ्छितां मूर्तिं कुतो वहतीत्युक्तार्थान्यथानुपपत्त्या चन्द्रमसो भगवन्नखसंघर्षमूलकशस्त्राशस्त्रिमर्दितत्वं कल्प्यते॥

यथावा—

ननु देव पुष्पवन्तौ सस्पर्धौ त्वत्प्रतापकीर्तिभ्याम्। प्रहतौ मुखेऽन्यथा तावदन्ततां तान्ततां च कथमैताम्॥ २१२५॥

पुष्पवन्तौ सूर्याचन्द्रमसौ। अदन्ततां अविद्यमानदन्तत्वं तान्ततां क्लान्तत्वं च। पक्षे अकारान्तत्व तकारान्तत्वं च 'एक-

योक्त्या पुष्पवन्तौ' इत्यमरः। ऐताम् अगच्छताम्। अयमदन्त स्तान्तोऽप्यस्ति–'पुष्टिह्रासौ कुमुदसुहृदः पुष्पवन्तोपरागे' इति, 'त्रिलोचने विभोर्यस्य विख्याते पुष्पवत्तया' इत्युभयथाऽपि प्रयोगदर्शनात्। अत्र सर्वत्र श्लेषोज्जीवितत्वं तुल्यम्॥

इत्यलङ्कारमणिहारे अर्थापत्तिसरः षोडशोत्तरशततमः.

## अथानुपलब्धिसरः (११७)

**यद्योग्यानुपलब्धेस्स्यादभावस्यावधारणम्।**
**कृतिनोऽनुपलब्धिं तां रम्यां विदुरलंकृतिम्॥**

योग्यानुपलब्धिजन्यमभावावधारणमनुपलब्धिर्नामालंकारः। रम्यत्वं तु सर्वालंकारानुगतमेव॥

यथावा—

**दोषलवोऽपि यदि स्यात्त्वयि सुदृशां तदुपल-**
**ब्धिरेव स्यात्। कल्याणगुणैकनिधे कलङ्क उपल-**
**भ्यते हि सकलेन्दौ॥ २१२६॥**

अत्र भगवतो यदि दोषलवोऽपि स्यात् तदा सुदृशां 'श्रुतिस्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते' इत्युक्तश्रुतिस्मृतिरूपचक्षुष्मतां तदुपलब्धिस्स्यादेवेति तत्सानथया अनुपलब्ध्या दोषगन्धानवकाशनिर्धारणादनुपलब्धिर्नामालंकारः। कल्याणगुणैकनिधे इति संबोधनं दोषात्यन्ताभावाभिप्रायगर्भम्। सकलेन्दौ संपूर्णे चन्द्रमसीत्यर्थः। कलङ्क उपलभ्यते। सत्त्वादेव तदुपलब्धिः। यदि न स्यात्तर्हि नोपलभ्येतैवेति व्यतिरेकदृष्टान्तः॥

इत्यलंकारमणिहारे अनुपलब्धिसरस्सप्तदशोत्तरशततमः.

## अथ संभवसरः (११८)

संभवोऽधिकसद्भावान्न्यूनस्थित्यवधारणम् ।

शते पञ्चाशन्न्यायेनाधिकसद्भावे न्यूनसद्भावावधारणं संभवः ॥

यथा—

कति कति वा तव करुणा व्यतिकरतो नाप्नुवन् श्रियं नित्याम् । तेनैव ममापि श्रीजाने सा संभवेन्न किं ब्रूयाः ॥ २१२७ ॥

तेनैव करुणाव्यतिरेकेणैव । सा नित्यश्रीः ॥

यथावा—

कृष्णघन वर्षति त्वयि भुवनाभ्युदयाय दिव्यतमममृतम् । कथमिव न संभविष्यति चातकवृत्तेर्ममापि तल्लाभः ॥ २१२८ ॥

उदाहरणद्वयेऽपि अधिकसद्भावान्न्यूनसद्भावावधारणरूपसंभवप्रमाणं प्रदर्शितम् ॥

यथावा—

स्फुरतां भवजलधौ चिरमुरुतान्तानां हठात्तव स्मरताम् । परताराप्तौ सत्यां परितापं त्यज भवेत्तवाप्येषा ॥ २१२९ ॥

अत्र—

ज्ञानतोऽज्ञानतो वाऽपि वासुदेवस्य कीर्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥

सकृत् स्मृतोऽपि गोविन्दो नृणां वर्षशतैश्चितम् ।
पापराशिं दहत्याशु तूलराशिमिवानलः ॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान्विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव ॥
हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
यदृच्छयाऽपि संस्पृष्टो दहत्येव हुताशनः ॥

इत्याद्युक्तप्रक्रियया श्रीहरिं हठात् स्मरतामपि संसारसागरपरतीराप्तौ संभवन्त्यां तवाप्येषा भवितेति संभवप्रमाणप्रदर्शनम् । परतारेत्यत्र 'दिक्छब्देभ्यस्तीरस्य तारभावो वा वाच्यः' इति तीरशब्दस्य तारादेशः ॥

इत्यलंकारमणिहारे संभवसरोऽष्टादशोत्तरशततमः.

---

## अथैतिह्यसरः (११९)

**यत्रेतिहोचुरित्याद्यमनिर्दिष्टप्रवक्तृकम् । पारंपर्यं प्रवादस्य तत्रैतिह्यमलंकृतिः ॥**

अनिर्दिष्टप्रवक्तृकं इतिहोचुरित्यादिप्रवादपारंपर्यमैतिह्यम् ॥
यथा—

**सस्यदशायामनमन्न् शाखी भूत्वा नमेत्तरुः किमिति । लौकिकगाधां स्मरता बुद्धिमताऽऽबाल्यतो हरिस्सेव्यः ॥ २१३० ॥**

अत्र सस्यदशायामित्यादिलौकिकगाधां स्मरता बुद्धिमता 'कौमार आचरेत्प्राज्ञो धर्मान् भागवतानिह' इत्युक्तरीत्या आ बाल्यादेव हरिस्सेवनीय इत्यर्थः । अत्र लौकिकगाधामित्यनेनानिर्दिष्टप्रवक्तृकप्रवादपारंपर्यरूपता दर्शिता ॥

यथावा—

**तावत्कर्म न मे स्तात्तव शौरे यावता स्मृतिर्नश्येत् । तावत्किमर्थमञ्जनमक्षि विनश्येद्धि यावतेत्याहुः ॥ २१३१ ॥**

अत्रापि तावत्किमर्थमञ्जनमित्याकारकलौकिकगाथायाः प्रतिबिम्बभूतायाः आहुरित्यनेनानिर्दिष्टप्रवक्तृकप्रवादपारंपर्यं दर्शितमिति द्रष्टव्यम् ॥

यद्यप्येते अष्टौ प्रमाणालंकाराः दीक्षितेभ्यः प्राचीनैर्न कृतविवेकाः । तथाऽप्यनुमानालंकारस्य सर्वैरपि लक्षितत्वात्प्रत्यक्षादिप्रमाणालंकारा अपि लक्षितप्राया एव । न हि प्रत्यक्षादीनामपि प्रमाणतायामनुमानतोऽस्ति विशेषः । न वा विच्छित्तिसदसद्भावकृतं वैलक्षण्यम् । अतोऽनुमानालंकारकथनं प्राचामितरप्रमाणालंकारोपलक्षणमित्याशयेन दीक्षितैः कुवलयानन्दे सर्वाण्यपि तानि विविच्य प्रदर्शितानीत्यस्माभिरपि तानि प्रदर्शितानि ॥

इत्यलंकारमणिहारे ऐतिह्यसर एकोनविंशत्युत्तरशततमः.

## अथ संसृष्टिसरः (१२०)

**अलंकृतीनां सर्वासां यथासंभवमेळने ।**
**लौकिकीनामिवैतासां चारुताऽतिशयेक्षणात् ॥**
**नरसिंहप्रक्रियया भात्यलंकारता पृथक् ।**
**अतस्तन्निर्णयं प्राचां मतेनात्राभिदध्महे॥**

ननूक्तानामलंकाराणामनेकेषामेकत्रावस्थाने किं तत्तदलंकारतैव? उताहो नरसिंहन्यायेन समवायकृतमलंकारत्वम्? इति

चेत् अत्र केचित्—नालंकारान्तरं युक्तमभ्युपगन्तुं, प्रातिस्विकतत्तदलंकारतातिरेकेण संज्ञान्तरस्य विच्छित्तिविशेषस्य चाभावादित्याहुः । अन्ये तु—नरसिंहन्यायेनालंकारान्तरमेव । न च संज्ञान्तरविच्छित्तिविशेषयोरभावः, असिद्धेः । संसृष्टिसंकरसंज्ञयोर्लौकिकालंकाराणां कनकमुक्ताप्रवाळहरिनीलमरकतादीनामन्योन्यविलक्षणशोभाधायकानां मेळनकृतशोभातिशयवदिहापि मेळने विच्छित्तिविशेषसद्भावस्य च सहृदयहृदयैकसाक्षिकत्वात् । अतो नरसिंहाकारेण मेळनमलंकारान्तरमेवेति । तदेतन्मतमवलम्ब्योक्तं 'भात्यलंकारता पृथक्' इति ॥

तिलतण्डुलसंसर्गरीत्या यत्रेतरेतरम् ।
संसृज्येरन्नलंकारास्सा संसृष्टिरितीर्यते ॥

तिलतण्डुलन्यायेन स्फुटावगम्यभेदालंकारमेळने संसृष्टिरित्यर्थः ॥

शब्दालंकारयोरर्थालंकृत्योश्च परस्परम् ।
उभयोरपि संसृष्टिरिति सा त्रिविधा मता ॥

तत्राद्या यथा—

कलिकलुषशबलितमतिक्षितिपातिसेवातिवाहितायुरहम् । अधुना तव मधुनाशन विधुनानि क्रमभरं चरितमधुना ॥ २१३२ ॥

अत्र शब्दालंकारयोर्वक्ष्यमाणयोरनुप्रासयमकयोः पूर्वोत्तरार्धगतयोरन्योन्यानिरपेक्षयोस्संसृष्टिः ॥

द्वितीया यथा—

वृषभूमिभृद्वतंसेन्दीवरमिन्दीवराप्तजैत्रमुखम् ।
श्रीवासनामधेयं तज्जगतां भागधेयमव्यान्नः ॥

अत्र परंपरितरूपकोपमाकैतवापह्नुतीनामितरेतरानेरपेक्षाणा-मर्थालंकाराणां संसृष्टिः ॥

तृतीया यथा—

**पन्नगनगपावनवनराजीराजी तमालसालश्रीः ।**
**पापातुरमार्तं मां पापातु रमात्तमानसस्स पुमान् ॥**

पन्नगनगस्य पावनानि यानि वनानि तेषां राज्यां श्रेण्यां राजत इति तथोक्तः । तमालसालस्य श्रीरिव श्रीः यस्य स तथोक्तः । रमया श्रिया आत्तं वशीकृतं मानसं यस्य स तथोक्तः स पुमान् परमपुरुषः पापैः आतुरं मां पापातु भृशं पातु । यङ्लुक् । अत्र छेकानुप्रासवृत्त्यनुप्रासयमकानां शब्दालंकाराणां उपमापर्यायोक्तयोरर्थालंकारयोश्च संसृष्टिः ॥

यथावा—

**शरणं तमेव रमया भजामहे हेमजाभयाऽऽ-श्लिष्टम् । त्वां विपदि महत्यामपि वदेम वा वामदेव शरणमिति ॥ २१३५ ॥**

हेमजा स्वर्णजन्या आभा प्रभा यस्यास्तथोक्तया हिरण्यवर्णयेत्यर्थः । रमया आश्लिष्टं तमेव श्रीमन्तं नारायणमेव शरणं भजामहे प्रपद्यामहे । हे वामदेव विरूपाक्ष! त्वां महत्यां विपद्यपि शरणमिति वदेम वा । न वदेमैवेत्यर्थः । शरणमित्युक्तेरपि संभावना न कार्या । किमुत शरणवरणकथेति भावः 'महत्यापदि संप्राप्ते स्मर्तव्यो भगवान् हरिः' इत्युक्तरीत्या तं श्रियःपतिमेव भजामो न तु भवन्तंप्रति रक्षेति वचनमपि वा वदामः । 'नाहमुत्सृज्य गोविन्दमन्यमाराधयामि भोः' इत्यम्बरीषव्रतनिष्णाता वयामिति भावः । रमयाऽऽश्लिष्टमित्यनेन भग-

वतस्सरसत्वं वामदेवेत्यनेन तद्व्यतिरेकि वक्रत्वं च सूच्यते। अत्र पूर्वार्धोत्तरार्धयोः अक्षरपञ्चकानुलोम्यप्रातिलोम्यलक्षणशब्दालङ्कारौ परिसङ्ख्यया अर्थालङ्कारेण संसृष्टौ ॥

इत्यलङ्कारमणिहारे संसृष्टिसरो विंशत्युत्तरशततमः.

## अथ संकरसरः (१२१)

यत्रान्योन्यमलंकाराः क्षीरनीरनयादमी ।
संकीर्येरन् संकरोऽयमिति काव्यविदो विदुः ॥

क्षीरनीरन्यायेनास्फुटभेदालंकारमेळने संकर इत्यर्थः ॥

सोऽयमङ्गाङ्गिभावेन समप्रधान्यतस्तथा ।
संदेहेन तथा चैकवाचकानुप्रवेशतः ॥

चतुर्धा संकरः प्रोक्तश्श्रीमदप्पयदीक्षितैः ।
एवं नृसिंहाकृतयः पञ्चालंकृतयो मताः ॥

एवं संसृष्टिप्रभृतयः पञ्चालंकृतयो नरसिंहाकारा इत्यर्थः ॥

अप्रधानालंक्रियया प्रधानालंक्रिया यदि ।
उज्जीव्येत तदाऽङ्गाङ्गिभावसंकर इष्यते ॥

यथा—

वदनसुषमासुधाम्बुधिनिमग्नकुसुमशरकरिकिशोरेण। शुण्डाग्रमिवोन्नामितं मृगमदतिलकं विभात्यहिनगेन्दोः ॥ २१३६ ॥

यथावा ममैव प्रपन्नानन्दस्तुतौ—

वदनरुचिह्लदविहरन्नयनमहामीनराजनिष्ठ्यूतम्। नासाविवरविलग्नं नूनं ध्यायामि मौक्तिकं देव्याः ॥ २१३७ ॥

अत्रोदाहरणद्वयेऽपि वदनसुषमासुधाम्बुधीत्यादि वदनरुचिह्रदेत्यादि च परंपरितरूपकमुत्प्रेक्षयोरङ्गं, तदुज्जीवकत्वात् रूपकाभावे चेदृशोत्प्रेक्षानुन्मेषात्। अतोऽनयोरङ्गाङ्गिभावलक्षणस्संकरः॥

यथावा—

अविवेकपटलमलिनं सुविवेकाञ्जनशलाकया नयनम्। नोन्मीलयति जनो यो जन्मान्धो भवति कोनु ततोऽन्यः ॥ २१३८ ॥

अविवेकानां अज्ञानानां पटलमेव पटलं नयनेन्द्रियाच्छादकरोगविशेषः तेन मलिनम् नयनम्। सुविवेकः तत्त्वत्रययाथात्म्यविवेचनम्। स्पष्टमन्यत्। अत्राविवेकपटलेत्यादिरूपकेण जन्मान्धतानिर्धारणस्य समर्थितत्वात्काव्यलिङ्गमित्यनयोरङ्गाङ्गिभावसंकरः॥

यथावा—

बर्हमयो यदुनन्दन शिरसि वतंसस्त्वया नवो विहितः। व्रजतरुणीहरिणीनां प्रसभं ग्रहणे वितंसतामैषीत् ॥ २१३९ ॥

नवः नव्यः रम्यो वा वतंसः उत्तंसः विहितः न्यस्तः। वितंसतां मृगबन्धनोपकरणताम्। पक्षे वतंस इति शब्दः नवः

वकाररहितः। नशब्दपूर्वको बहुव्रीहिः। विहितः विः विकारः हितः वकारस्थान एव निहितः यस्य स तथोक्तस्सन् वितंसतां वितंसशब्दतां पेषीदित्यर्थः। अत्र व्रजतरुणीहरिणीनामिति रूपकं वितंसतामिति पदार्थवृत्तिनिदर्शनाया अङ्गम्॥

यथावा—

त्वय्यात्मशिखान्तस्थे विद्युदिवान्तस्थनीलजलदाऽस्तु। अन्तस्थनीलतोयदविद्युदसि त्वं कथं नु परमात्मन्॥ २१४०॥

हे परमात्मन्! अनेन 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति श्रुतपरमात्मशब्दः प्रत्यभिज्ञाप्यते। आत्मशिखा 'तस्य मध्ये वह्निशिखा' इत्युक्ता प्रत्यगात्मरूपा ज्वाला 'वह्निशिखा वह्नेश्शिखा आत्मज्वाला' इत्युपनिषद्भाष्यम्। त्वयि नीलतोयदश्यामलदिव्यविग्रहे इति भावः। अन्तस्थे सति 'तस्याश्शिखायाः' इत्युक्तरीत्या अन्तर्विद्यमाने अन्तस्थः नीलजलदः यस्यास्सा तथोक्ता विद्युदिवास्तु 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' इति श्रुतेः "नीलतोयदश्यामलभगवद्विग्रहाश्रयत्वान्मध्यस्थनीलतोयदविद्युन्निभेत्यर्थः। मध्यस्थेति नीलतोयदविशेषणस्य पूर्वनिपाताभावश्छान्दसः" इत्युपनिषद्भाष्यकारैरभाषि। अभूतोपमेयम्। त्वं अन्तस्थनीलतोयदविद्युत् कथं नु असि। आत्मशिखामध्ये नीलतोयदनिभस्य भवतोऽवस्थानात्सा अन्तस्थनीलतोयदविद्युदिव प्रकाशतां नाम तव तथा प्रकाशः कारणाभावाद्विस्मयावह इति भावः। वस्तुतस्तु अन्तस्थः नीलतोयदशब्दः यस्य सः विद्युत् विद्युच्छब्दः विद्युदिति वर्णमध्ये नीलतोयदशब्दनिवेशे विनीलतो-

यद्द्युत् इति निष्पद्यते शब्दः तद्वाच्य इति यावत्। विनील-जलद इव द्योतत इति तथोक्त इति परिहारः। अत्र पूर्वार्धो-दीरिता उपमा उत्तरार्धोदीरितविभावनाया अङ्गं श्लेषोपस्कृतम्॥

यथावा—

**भवतोऽम्बुजाक्ष भवता भवन्ति ये तारिता न जात्वपि ते। विन्दन्ति विपर्यासात्प्रकृतिविकारं पुनस्तदपि तान्ताः॥ २१४१॥**

हे अम्बुजाक्ष! ये जनाः भवता भवतः संसारात् तारिताः मोचिता इत्यर्थः। ते जनाः जात्वपि कदाऽपि विपर्यासात् वैपरी-त्यात् पुनरावृत्तेर्हेतोरिति यावत्। प्रकृतिविकारं प्राकृतलोकं न विन्दन्ति 'एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमा-वर्तं नावर्तन्ते' इत्यादिश्रवणात् 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति स्मरणात् 'अनावृत्तिश्शब्दात्' इति सूत्राच्चेति भावः। पक्षे तारिता इति शब्दः जात्वपि विपर्यासात् प्रातिलोम्यात् प्रकृतेः तारिता इति प्रकृत्यंशस्य विकारं अन्यथाभावं न विन्दति। यथापूर्वमेवावस्थानादिति भावः। तथाऽपि एवं प्रकृतिसम्बन्धा-त्तारितत्वेऽपि पुनः पूर्ववदिति भावः तान्ताः अशनायापिपासा-दिप्रयुक्तग्लानिशालिन इति विरोधः। तारिता इति शब्दो वैपरी-त्येऽपि पूर्ववत्तारिता इत्येव निष्पत्तेस्तकारान्त एवेति परिहारः। अत्र श्लेषोपस्कृतं काव्यलिङ्गं तथाविधस्य पुनरपि तान्ता इति पूर्वावस्थानुवृत्तिरूपपूर्वरूपस्याङ्गम्॥

यथावा—

**त्वत्तेजोविजिगीषुस्तेन परास्तोऽक्षमः प्रती-**

कारे। विषमश्नन्मग्नोऽब्धावौर्वोऽच्युत बाडबस्य गतिरियती ॥ २१४२ ॥

हे अच्युत! और्वः बडबामुखाग्निः विषमश्नन् क्ष्वेळं जलं च पिबन्। बाडबस्य ब्राह्मणस्य और्वाग्नेश्च गतिः स्थितिः इयती एतावती यत्त्वावधीरयितुर्वैरनिर्यातनाक्षमतया विषाशनेनाब्धौ पतनमिति। पक्षे यज्जलशोषणेन जलधौ निवास इति। शिष्टं स्पष्टम्। अत्र श्लेषावलीढयोर्विषमार्थान्तरन्यासयोरङ्गाङ्गिभावः ॥

यथावा—

अधिगतकृशानुभावो महानुभावं महस्तुलयितुं ते। नूनमपर्याप्तोऽग्निर्भगवन्ननलं ततो वदन्त्येनम् ॥ २१४३ ॥

अधिगतः प्राप्तः कृशः अनुभावः प्रभावः येन कृशानुभावः कृशानुत्वं च येन स तथोक्तः अग्निः महानुभावं महाप्रभावं 'अनुभावः प्रभावे च' इत्यमरः। प्रभावः प्रतापः ते धाम तेजः प्रतापमित्यर्थः। तुलयितुं अपर्याप्तः नूनं। ततः एनं अग्निं अनलं अपर्याप्तं असमर्थमिति यावत्। अनलशब्दाभिलपनीयमिति तत्त्वम्। वदन्ति। अत्र कृशानुभावशब्दप्रतिपाद्यार्थद्वयश्लेषाभित्तिकाभेदाध्यवसानाङ्गकं तुलनाऽपर्याप्तत्वसमर्थनरूपकाव्यालिङ्गमनलमिति निरुक्तेरङ्गमिति विशेषः ॥

केचित्तु—एवंरूपस्संकरो न केवलमर्थालंकारयोः किंतु शब्दालंकारयोरप्यस्तीत्युक्त्वा यमकानुलोमप्रतिलोमयोश्शब्दालंकार-

योस्संकरमाहुः। तदेदमुदाहरणम्—

**देवे नानावेदे प्रथिते नित्यं स्थिता नतानवितुम्। देवेनानाऽवेदेवैषा मामपि रमा क्षमाजलधिः॥**

नानावेदे नानाविधश्रुतौ, जात्येकवचनम्। प्रतिथे प्रसिद्धे सर्वेश्वरत्वेन सर्ववेदप्रतिपाद्ये इत्यर्थः। देवे भगवति श्रीनिवासे नतान् शरणागतान् अवितुं त्रातुं नित्यं स्थिता क्षणमप्येतदवस्थानविरहे विनतजनापराधदर्शनजनितक्रोधोष्मलतया नैतद्रक्षणाभिमुख्यं भगवान् भजेतेति भावः। देवेनाना आनयति प्राणयतीत्याना पचाद्यच् देवानां इनाः प्रभवः इन्द्रादयो लोकपालाः तेषां आना प्राणयित्री क्षमाजलधिः मादृशापराधमर्षणनिपुणेति यावत्। एषा रमा मामपि अनवरतबहुविधापराधपरंपराकरणधुरीणमपीति भावः। अवेदेव रक्षेदेवेति संभवोक्तिः॥

यथावा—

**साऽवतु वृषगिरिभूषा सारसनाभा नदीनभाना सरसा। तद्भूषा साऽपिच या सारसनाभा नदीनभा नासरसा॥ २१४५॥**

सारसनाभा पद्मनाभा 'अच् प्रत्यन्वव' इत्यत्र अजिति योगविभागादच्। पृषोदरादित्वाद्वा अकारान्तत्वं निर्वोढव्यम्। नदीनभाना नदीनां इनः प्रभुः उदन्वान् तस्य भानमिव भानं प्रकाशो यस्यास्सा जलनिधिश्यामलमूर्तिरित्यर्थः। सरसा सानुरागा सानन्दा वा भूसहिता वा। सा वृषगिरिभूषा श्रीनिवास इति यावत्। अवतु इति पूर्वार्धार्थः। तद्भूषा तस्य श्रीनिवासस्यापि भूषा आभरणप्राया साऽपिच श्रीरपीति भावः। अव-

त्वित्येतदत्राप्यनुषज्यते । सारसनाभा सारसनेन काञ्चीदाम्ना आभातीति तथोक्ता या श्रीः नदीनभाः दीना स्वल्पा भाः दीप्तिः यस्यास्सा तथोक्ता न भवति। सरसा न भवतीत्यसरसा च न भवाति सरसैव भवतीत्युत्तरार्धस्यार्थः॥

अत्राद्ये पद्ये प्रथमतृतीययोः द्वितीये द्वितीयतुरीययोश्चरणयोश्च यमकानुलोमप्रतिलोमयोश्शब्दालंकारयोः परस्परापेक्षत्वेनाङ्गाङ्गिभावसंकरः। सर्वस्वकारस्तु—'ईदृशस्थले शब्दालंकारयोरन्योन्यमुपकार्योपकारकभावाभावेनाङ्गाङ्गिभावसंकरो न युक्तः। किंतु शब्दालंकारद्वयसंसृष्टिरेव। यद्वा अत्र शब्दालंकारद्वयमेकवाचकानुप्रविष्टम्' इत्यभाणीत्। काव्यदर्पणकारस्तु–'द्वयोश्शब्दालंकारयोः परस्परापेक्षया वैचित्र्यातिशयाधायकत्वात्संकर एवेदृशस्थले न तु संसृष्टिः, अङ्गाङ्गिभावाभावेऽपि मिथो वैचित्र्यातिशयहेतुत्वस्याक्षतत्वात् । अङ्गाङ्गिभावेऽपि मिथो वैचित्र्यातिशयहेतुत्वस्यैव पार्थक्येन प्रयोजकत्वात्' इत्यवादीत्॥

**अन्यालंकारगर्भैवोन्नह्यते काऽप्यलंकृतिः ।**
**अन्यया तुल्यकालं चेत्समप्राधान्यसंकरः ॥**

यथा—

**शिरसा स्वं लालयतां प्रथयन्तं नित्यमेव साम्राज्यम् । फणिभूभृतः किरीटं काञ्चनलक्ष्मीं दधानमीडीय ॥ २१४६ ॥**

स्वं आत्मानं शिरसा लालयतां दधानानां नमस्कुर्वतां च नित्यमेव शाश्वतमेव साम्राज्यं 'येनेष्टं राजसूयेन मण्डलस्ये-

श्वरश्च यः। शास्ति यश्चाज्ञया राज्ञस्स सम्राट्' इत्युक्तलक्षणं सम्राट्त्वं, अन्यत्र 'स स्वराड्भवति' इत्युक्तं मुक्तैश्वर्यं प्रथयन्तं प्रख्यापयन्तं ईदृशकीरीटधारणविरहे सम्राट्त्वप्रसिद्धेरयोगादिति भावः। पक्षे विपुलयन्तं असंकुचितं वितन्वन्तमित्यर्थः। काञ्चनलक्ष्मीं सुवर्णस्य समृद्धिं शोभां वा पक्षे काञ्चन अनिर्वचनीयवैभवां लक्ष्मीं भगवतीं श्रियं दधानं फणिभूभृत् शेषाद्रिरेव भूभृत् राजा तस्य किरीटं किरीटत्वेनाध्यवसितं श्रीनिवासं ईडीय स्तुयाम्। 'ईड स्तुतौ' लिङुत्तमैकवचनम्। अत्र शिरसा स्वं लालयतामित्यादिश्लेषमूलातिशयोक्त्या अङ्गभूतया उन्नह्यमानैव भगवति श्रीनिवासे किरीटत्वाध्यवसानरूपरूपकातिशयोक्तिः फणिभूभृति महाराजव्यवहारारोपश्लिष्टरूपकगर्भैवोन्नह्यते, उक्तश्लेषमूलातिशयोक्तेरुभयोपकारकत्वात्। अत उक्तरूपकातिशयोक्तिरूपकयोरेकः कालः परस्परापेक्षया सौन्दर्योन्मेषश्चोभयोस्तुल्य इति विनिगमनाविरहात्समप्राधान्यम्॥

यथावा—

हन्त सरागालापा त्वत्पाणिस्पर्शनिर्वशिता मुरळी। अतिमधुरं त्वदधररसमनितरसुलभं किलापिबति शौरे॥ २।४७॥

हे शौरे! मुरळी वंशनाळी त्वत्पाणिस्पर्शेन एकत्र रागालापार्थेन अन्यत्र परिरम्भाद्यर्थेन विवशिता परवशीकृता एकत्र तदायत्ततया अन्यत्र स्तम्भप्रलयादिसात्विकभावोदयेन, सरागः सानुरागः आलापः मिथोभाषणं यस्यास्सा तथोक्ता। अन्यत्र रागाणां शंकराभरणादीनां गान्धर्ववेदोक्तानां रागाणां आलापेन

सह वर्तत इति तथोक्ता। अनितरसुलभं अतिमधुरं च त्वदधररसं आपिबति किल हन्तेत्येतादृशभाग्यलाभपरिचिन्तनजनिते हर्षे। अत्र सरागालापेत्यादिश्लेषभित्तिकाभेदातिशयोक्त्या अङ्गभूतया परिपोष्यमाणैव मुरळ्या भगवदधररसास्वादोत्प्रेक्षा मुरळ्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैव परिपोष्यते, सरागादिशब्दश्लेषस्योभयोर्जीवकत्वात्। तस्मादुपपादितोत्प्रेक्षासमासोक्त्योरैककालिकत्वात्समासोक्तिगर्भतां विना अधररसास्वादनोत्प्रेक्षाया निरवलम्बनत्वाच्चात्रापि समप्राधान्यम्॥

यथावा—

मुग्धाऽतिललितलोला स्निग्धा श्रीनाथहृदयपरिरब्धा। गळदंशुकाऽनवरतोल्लासं किल याति हारयष्टिरियम्॥ २१४८॥

मुग्धा रम्या उदयद्यौवना च अतिललितं यथातथा लोला चञ्चला। अन्यत्र अत्यन्तं ललितेषु विलासविशेषेषु लोला आसक्ता स्निग्धा थाळथळयवती स्नेहवती च। इयं हारयष्टिः स्त्रीलिङ्गान्नायिकेति च प्रतीयते। श्रीनाथहृदयेन परिरब्धा सती गळन्तः प्रसृमराः अंशवो यस्यास्सा गळदंशुका 'शेषाद्विभाषा' इति कप्। अन्यत्र अतएव गळत् स्रंसमानं अंशुकं वसनं यस्यास्सा तथोक्ता। अनवरतं सततं उल्लासं प्रकाशं, इतरत्र नवरते अभिनवसंभोगे उल्लासं कुतूहलं याति किलेत्युत्प्रेक्षा॥

अत्र मुग्धत्वादिश्लेषमूलाभेदाध्यवसायातिशयोक्त्या अङ्गतामापन्नया उत्तभ्यमानैव गळदंशुकेत्यादिश्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिमवलम्बिनी श्रीनिवासोरस्स्थलपरिरम्भहेतु-

कमनवरतोल्लासप्राप्तिरूपोत्प्रेक्षा हारयष्ट्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्तभ्यते। अनयोश्च श्लेषोत्तम्भितत्वतौल्यादेककालिकत्वादन्योन्यापेक्षचारुतातिशयत्वाच्च पूर्ववत्समप्रधानता॥

यथावा—

कल्याणगुणामुक्तः पयोधराग्रेसरातिशायिश्रीः।
त्रय्यास्तरळो मणिरिव जीयाद्देवो वृषाचलनिकाय्यः॥ २१४१॥

कल्याणैः मङ्गळरूपैः गुणैः सौशील्यादिभिः अमुक्तः नित्ययुक्तः। आमुक्त इति वा संबद्ध इत्यर्थः। पक्षे कल्याणगुणैः सुवर्णतन्तुभिः आमुक्तः बद्धः यद्वा कल्याणगुणः आ समन्तात् मुक्ताः मौक्तिकानि यस्येत्यामुक्तः। विशेषणोभयपदकर्मधारयः। 'कल्याणं मङ्गळे स्वर्णे' इति रत्नमाला। पयोधराग्रेसरः घनाघनश्रेष्ठः तं अतिशेते अतिवर्तत इत्यतिशायिनी श्रीः दिव्यविग्रहशोभा यस्य स तथोक्तः। इतरत्र पयोधराग्रे इति व्यस्तम्। स्तनयोरुपरिसरेषु हारेषु अतिशयितशोभ इत्यर्थः। त्रय्याः श्रुतेः तरळः हारमध्यगमणिरिव स्थितः। अन्यत्सुगमम्। अत्र कल्याणगुणादिशब्दश्लेषातिशयोक्त्युज्जीव्यमानैव भगवति तरळमणित्वोत्प्रेक्षा त्रय्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिमन्तर्भाव्यैवोज्जीव्यते। श्लेषोत्तम्भितत्वादिकमुभयोस्तुल्यमेवेति समप्राधान्यम्॥

यथावा—

देवर्षिपितृगणेभ्यो विनतान्नूनं मुमोचयिषसि हरे।

उद्धारभरं वहसे वृद्धिं वितरन्कुतोऽन्यथाऽमीषाम्
॥ २१५० ॥

हे हरे! इदं इह विवक्षितार्थोपस्कारकम् । देवर्षिपितॄणां ऋणेभ्यः पितृणेत्यत्र 'अकस्सवर्णे' इति सवर्णदीर्घः । विनतान् शरणागतान् मुमोचयिषसि नूनं मोचयितुमिच्छसीति सम्भावये । अन्यथा अमीषां विनतानां संबन्धिनीं एतत्प्रदेयामिति यावत् । वृद्धिं उत्तमर्णेन मूलातिरिक्तं ग्राह्यं द्रव्यं वृद्धिः । तां । पक्षे वृद्धिं अभ्युदयं मुक्त्यैश्वर्यरूपां समृद्धिं वा 'वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे । कालान्तरे चाभ्युदये समृद्धावपि योषिति' इति मेदिनी । वितरन् नियमेन प्रतिपादयन् । भगवत्पक्षे—'लक्षणहेत्वोः' इति शता, हेतुरिह फलं । वितरीतुमित्यर्थः । उद्धारस्य ऋणस्य भरं अतिशयं 'स्यादृणं पर्युदञ्चनम् । उद्धारः' इत्यमर । पक्षे 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्युक्तरीत्या संसृतिसिन्धोरुद्धृतिभारं वहसे । अत्र वृद्धिदानपूर्वकोद्धारभारवहनान्यथानुपपत्त्या भगवतः ऋणविमोचनेच्छा कल्प्यते ।

देवर्षिभूतात्मनृणां पितॄणां न किंकरो नायमृणी च राजन् ।
सर्वात्मना यश्शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः ॥

इति श्लोकार्थोऽत्रानुसंहितः । अत्र वृद्ध्युद्धारशब्दश्लेषाभित्तिकाभेदाध्यवसायमूलातिशयोक्त्या उन्नह्यमानैव उक्तार्थापत्तिः भगवति प्रतिभूव्यवहारारोपलक्षणसमासोक्तिसहकृतैवोन्नह्यते । उक्तश्लेषोपकृतत्वपरस्परापेक्षचारुतोन्मीलनैककालिकत्वान्यनयोस्तुल्यानीति समप्राधान्यम् ॥

ऐककालिकताभावेऽप्यलंकारद्वयं यदि ।

एकेनोन्नह्यते सोऽपि समप्राधान्यसंकरः ॥

यथावा—

त्वत्कीर्तिसुमसमुदयं ग्रथ्नातीव त्रयी त्वदीयगुणैः । गृह्णन्तस्तं सुधियः प्रसाधयन्ते दिशां ध्रुवं कबरीः ॥ २१५१ ॥

अत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यं, इतरेतरनिरपेक्षवाक्यद्वितयप्रतिपादितत्वात् । तं गृह्णन्त इति कीर्तिकुसुमसमुदयरूपरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात् । नचैवं 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इतिवदुत्प्रेक्षाद्वितयस्य संसृष्टिरेवेयमिति वाच्यं, लौकिकसिद्धग्रथनप्रसाधनपौर्वापर्यच्छायानुकारेणोत्प्रेक्षाद्वयपौर्वापर्येण सौन्दर्योत्कर्षसमुन्मीलनतस्संसृष्टिवैषम्यात् । तस्माद्दर्शादिवदेकफलसाधनतया समप्रधानमिदमुत्प्रेक्षाद्वयम् । अयं च संकरो दीक्षितोपज्ञमेव । "प्राञ्चस्तु अस्मिन् समप्राधान्यसंकरे प्राथमिकोऽङ्गाङ्गीभावेन, द्वितीयस्संसृष्ट्या च गतार्थ इत्याशयेन इमं भेदं न मेनिरे" इति रसिकरञ्जनीकारः । तद्विस्तरस्तत्रैव द्रष्टव्यः ॥

साधकं बाधकं वाऽपि यत्रान्यतरसंग्रहे ।
प्रमाणं नैव दृश्येत स्यात्स सन्देहसंकरः ॥

यत्र विरुद्धयोरलंकारयोरेकत्र स्फूर्तौ तयोरन्यतरस्य परिग्रहे साधकं बाधकं वा प्रमाणं न दृश्येत तत्रानिश्चयात्संदेहसंकरः ॥

यथा—

त्वद्दरदानाविच्युतमाङ्गल्यां सर्वमङ्गळां शौरे ।

**कात्यायनीं वदन्तः कोशकृतो हन्त कोशकृत एव॥**

त्वद्वरदानेन अविच्युतं माङ्गल्यं यस्यास्तां तथोक्तां नित्यसौमङ्गल्यशालिनीमित्यर्थः। बाणासुराहवे भगवता महादेवे पराभूते भीतया भवान्याऽभ्यर्थितेन तेनैव भगवता नित्यसौमङ्गल्यलक्षणवरोऽस्यै व्यतारीति पद्मपुराणकथाऽत्रानुसंहिता। अतएव सर्वमङ्गळां सर्वप्रकारमाङ्गल्यशालिनीत्वेन तन्नामाभिलपनीयां देवीं भवानीं कात्यायनीं 'कात्यायनीत्युमा। या चार्धवृद्धा काषायवसना गतभर्तृका। कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा' इत्यभिहिताभिधानां वदन्तः कोशकृतः रत्नमालानामलिङ्गानुशासनादिग्रन्थकृतः कोशकृत एव। हन्तेतीदृशजुगुप्सितनामकथनचिन्तनप्रयुक्ते खेदे। अत्र कोशकृतां कोशकृत्त्वविधानमनुपपत्तिबाधितं सत्तदविवेचकतां गर्भीकरोतीति विरुध्यलंकारो वा। कोशकृतः कोशकृत एव कोशकाराक्रिमय एव न तु विवेकशालिनो ग्रन्थकृत इत्यारोपपूर्वक आद्योऽपह्नवो वेत्युभयोरन्यतरनिर्धारणे साधकस्य वा बाधकस्य वा प्रमाणस्यादर्शनादनयोस्संदेहसंकरः॥

यथावा—

**मुखरुचिजलनिधिविहरन्नयनझषद्वंद्वजातपोतधियम्। उन्मीलयदुरगाचलविलासिमृगनाभितिलकमव्यान्नः॥ २१५३॥**

अत्र धियमिति मतेर्भ्रान्तिरूपत्वाविवक्षायां भ्रान्तिमदलंकारे विश्रान्तिः, संभावनात्वविवक्षायां उत्प्रेक्षायामित्यनध्यवसायादनयोस्संदेहसंकरः॥

यथावा—

**माधवविदूरसत्वा घनागमोल्लासितास्सुजाति-**

भवाः । अपि सुमनसश्च्यवन्ते वृथैव कतिचन महाफलाग्रहणात् ॥ २१५४ ॥

माधवस्य विदूरसत्त्वाः दूरस्थितयः घनानां महतां जनानां आगमेन प्राप्तया घनैः आगमैः शास्त्रैर्वा उल्लासिताः सुजातिभवाः सत्कुलप्रसूताः सुमनसो मनीषिणोऽपि कतिचन महाफलस्य निश्श्रेयसरूपस्य उत्तमफलस्य अग्रहणात् वृथैव च्यवन्ते भ्रश्यन्ति । अन्यत्र माधवस्य वसन्तस्य विदूरे सत्त्वं स्थितिः यासां ताः घनागमेन प्रावृषा उल्लासिताः विकासिताः शोभनाश्च ताः जातयः मालतीलताः तासु भवाः कतिचन सुमनसोऽपि पुष्पतां प्राप्ता अपि महत फलस्य अग्रहणात् वृथैव च्यवन्ते । जातीकुसुमानां वसन्तसमये अनुन्मेषात् प्रावृषि विकासात् फलवत्त्वविरहात् वृथैव च्यवनं भवतीति भावः । अत्राप्रस्तुतजातीकुसुमप्रशंसा प्रस्तुतेषु उक्तविधेषु विद्वत्सु पर्यवस्यतीत्यप्रस्तुतप्रशंसा वा, प्रस्तुतविद्वद्वृत्तान्तेनाप्रस्तुतमालतीकुसुमव्यवहारस्फूर्तिरिति समासोक्तिर्वा, प्रकृताप्रकृतश्लेषो वेत्यनध्यवसायादेषां संदेहसंकरः ॥

यथावा—

त्वच्चरणसमं किसलयमासेव्याधश्शिराश्चिराद्बस्तः । कान्तस्स्तबकस्स्याद्यदि कमले त्वच्चरणपूजनार्हस्स्यात् ॥ २१५५ ॥

हे कमले! बस्तः छागः चिरात् बहुकालं अधश्शिराः भक्त्या नम्रशीर्षस्सन् बस्तस्य निसर्गतस्तथात्वादिति हार्दम् । आसेव्य संपूज्य भक्षयित्वेति तु तत्त्वम् । कान्तः सुन्दरः स्तबकः कुसुमगुच्छश्चेत् त्वच्चरणकिसलयास्वादनफलभूतस्तबकजन्मतां

यायाश्चेदित्यभिप्रायः। तदा त्वच्चरणपूजानार्हस्स्यात्। स्तबकजन्मना विना तदर्हता न स्यादिति भावः। बस्तः बस्तशब्दः अधःशिराः विपरीतस्सन् स्तब इति निष्पन्नः ततः यदाकदाचित् कान्तश्चेत् कवर्णान्तस्स्याद्यदि स्तबकशब्दो भावेतेति वस्तुस्थितिः। अत्र बस्तः स्तबकस्स्याच्चेत्त्वच्चरणार्चनार्हस्स्यादिति संभावना वा। इदं न कदाऽपि सिध्यतीति मिथ्याध्यवसितिर्वेति कविसंरम्भस्य निर्णेतुमशक्यत्वादनयोस्संदेहसंकरः ॥

यथावा—

**अर्पयसि स्म यदा त्वं कार्पण्यं माधव प्रपित्सोर्मे। मन्ये सर्वाधिक्यात्तदैव कारुण्यमन्तरे व्यतनोः ॥ २१५६ ॥**

हे माधव! प्रपित्सोः त्वत्प्रपदनमिच्छतः मे कार्पण्यं—

अङ्गसामग्र्यसंपत्तेरशक्तेश्चापि कर्मणाम्।
अधिकारस्य चासिद्धेर्देशकालगुणक्षयात् ॥
उपाया नैव सिद्ध्यन्ति ह्यपाया बहुलास्तथा।
इति या गर्वहानिस्तु दैन्यं कार्पण्यमुच्यते ॥

इति लक्षितं प्रपदनाङ्गं यदा अर्पयसि स्म कार्पण्योपलक्षितमङ्गजातमददाः तदैव अन्तरे मनसि सर्वाधिक्यात् सर्वातिशायितया कारुण्यं मयि कृपां व्यतनोरिति मन्ये। अन्यथा ममेदृशीमङ्गसंपत्तिं नार्पयेरेवेति भावः। पक्षे यदा कार्पण्यमिति पदं अर्पयसि पवर्णरहितं करोषि स्म तदा सः र्वाधिक्यमिति छेदः। सः त्वमिति योजना एवंविधस्त्वं अन्तरे मध्ये र्वाधिक्यात् रुवर्णाधिक्यात् कारुण्यं व्यतनोरिति मन्ये। कार्पण्यशब्दस्य पवर्णोत्सारणेन मध्ये तत्रैव रुवर्णन्यासेन च कारुण्यमिति निष्पादना-

दिति भावः। अत्र कार्पण्यान्यथानुपपत्त्या भगवतः कारुण्यविधानं कल्पितमित्यार्थापत्तिर्वा। अयं भगवान्मयि सर्वाधिक्येन कृपावान् मम प्रपदनाङ्कजातार्पयितृत्वादित्यनुमानं वेति संदेहः॥

यथावा—

**सुदृगिति गर्वात् योऽपरमाह त्वत्तोऽपि कारणं जगताम्। आहुस्तमेव सुदृशश्शौरेऽपरकारणं किमाश्चर्यम्॥ २१५७॥**

हे शौरे! यः पुमान् सुदृक् सुधीरिति चक्षुष्मानिति च गर्वात् त्वत्तोऽपि अपरं अन्यं जगतां कारणं आह ब्रवीति सुदृशः विपश्चितः चक्षुष्मन्तश्च तमेव त्वत्तोऽन्यज्जगत्कारणमस्तीति वदन्तं पुंमासमेव अपरकारणं अपरं त्वदन्यत्कारणं यस्य तं तथोक्तं अपरं अवरं अश्रेष्ठं कारणं यस्य तथोक्तमिति वा आहुः। किमाश्चर्यमिति लोकोक्तिः। यस्त्वत्तोऽप्यपरं कारणमस्तीति ब्रवीति तस्यापरकारणत्वमनाश्चर्यावहं किंतु युक्तमेवेति भावः। अतएव समालंकारः। यद्वा तं अपरकारणवादिनमेव अपरं च तत् कारणं चेति कर्मधारयः तं अपरकारणं आहुः। किमेतदाश्चर्यं अत्याश्चर्यमिति भावः। अतएव विरोधाभासः। तं पुमांसमेव अपरकारणं अपगतो रः रेफः यस्मात्तं कारणं काणं आहुरिति वस्तुस्थितिः। 'एको ह वै नारायण आसीत्, सर्वभूतस्थमेकं नारायणं, कारणरूपमकारपरं ब्रह्मोम्' इत्यादिश्रुतिशतकण्ठरवप्रतिपादितभगवत्कारणत्वाविरुद्धार्थाभिधायी काण एव न तु चक्षुष्मानिति सुदृशो वदन्ति। 'श्रुतिस्मृती तु विप्राणां चक्षुषी द्वे विनिर्मिते। एकेन हीनः काणस्स्यात्' इत्याद्युक्तेरिति भावः। अत्र समविरोधाभासयोरेकत्रैव कविसंरम्भाविश्रान्तेस्तयोस्सन्देहसंकरः॥

यथावा—

**दात्रं मन्ये तोत्रं वेत्रं वाऽरिच्छिदा त्वया वि-धृतम् । कुरुवीररथकुटुम्बिन् दातोवेतस्तु भेद एतेषाम् ॥ २१५८ ॥**

हे कुरुवीररथकुटुम्बिन् अर्जुनसारथे भगवन्! त्वया विधृतं तद्रथ्याश्वचोदनाय पाणौ कृतं तोत्रं तोदनं 'प्राजनं तोदनं तोत्रम्' इत्यमरः। वेत्रं वा दात्रं रिपुवंशलवनसाधनं लवित्रं 'दात्रं लवित्रम्' इत्यमरः। मन्ये संभावये। एतेषां दात्रतोत्रलवित्राणां भेदः दातः छिन्न इति 'दो अवखण्डने' कर्मणि क्तः। 'आदेचः' इत्यात्वम्। 'कृत्तं दातं दितं छितं वृक्णम्' इत्यमरः। अवेतः अवगतः अवपूर्वकादिणः कर्मणि क्त। एतेषां रिपुकुलभेदनरूपधर्मवत्ताया-स्साम्यात् भेदाभावो ज्ञात एवेत्यर्थः। तुशब्दोऽवधारणे। 'तुः स्याद्भेदेऽवधारणे' इत्यमरः। यद्वा दात्रं मन्ये लवित्रमेवेति निर्धारयामीत्यर्थः। अन्यत्सर्वं पूर्ववदेव। तत्त्वं तु एतेषां दात्रादीनां दातोवेतः क्रमेण दावर्णं तोवर्णं वेवर्णैरेव भेद इत्यर्थः। सार्वविभक्तिकस्तसिः। अथवा तोत्रं वेत्रं वा दात्रं दात्रतुल्यं मन्ये जाने। एतेषां भेदस्तु दातोवेतः उक्तवर्णैरेव न तु सर्वात्मना। शब्दार्थतादात्म्यं न विस्मर्तव्यम्। अत्र तोत्रवेत्रयोर्दात्रतादात्म्यसंभावनाभिसंधौ उत्प्रेक्षा, दात्रत्वानिर्धारणस्योत्तरवाक्यार्थसमर्थितत्वाभिसंधौ काव्यलिङ्गम्, दात्रतोत्रवेत्राणां तुल्यानां स्ववाचकशब्दगतयाकिंचिद्वर्णमात्रभेद इत्यभिप्राये व्यतिरेकः, भगवत्करे धृतं वस्तु दात्रमेव न तु तोत्रं वेत्रं वेत्यभिसंधौ त्वपह्नुतिरित्येतेषामेकत्रैव कविसंरम्भस्य नियन्त्रयितुमशक्यत्वात्संदेहसंकरः॥

यथावा—

तव भक्तैरतिशुचिभिर्नाम्ना शुचिरवमतोऽनलो नूनम् । अहह विषाशनमुपयन् जीवनभङ्गाद्धि शान्ततां यातः ॥ २१५९ ॥

अतिशुचिभिः—

योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिश्शुचिः ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥

इत्युक्तप्रकारेण सर्वप्रकारशुद्धिशालिभिः त्वद्भक्तैः बहुभिरिति भावः। नाम्ना शुचिः नाममात्रेणैव शुचिरिति व्यवहार्यः न तु तद्वच्छुचितमः एक इति भावः। अनलः अवमतो नूनम्। अहहेति खेदे अद्भुते वा। विषाशनं विषोपलक्षितमन्नं उपयन् अश्नन्निति यावत्। जीवनभङ्गात् जीवितभ्रंशात् शान्ततां विनिष्टतां यातः। हीत्यवधारणे हेतौ वा ॥

वस्तुस्थितिस्तु अहेत्यव्ययं अहहत्येतदनतिरिक्तार्थकम् । हविषा आज्यादिना अशनं अभेदे तृतीया, हविरभिन्नमशनं उपयन् जीवनभङ्गात् जलतरङ्गात् शान्ततां निर्वाणतां यात इति। अत्रानलकर्तृकविषाशनादेरुपपादतश्लेषभित्तिकाभेदाध्यवसायनिर्व्यूढस्य भगवद्भक्तावमतत्वं न हेतुरित्यहेतोस्तस्य हेतुत्वेन संभावनायां चेदभिसंधिः तदा उत्प्रेक्षायां पर्यवसानं, उक्तविषाशनाद्यन्यथानुपपत्त्या तस्यावमतत्वकल्पने चेत् अर्थापत्तौ, विषाशनादिहेतुना अवमतत्वसाधने चेत्तात्पर्यं तदा अनुमानालंकारे इति कविसंरम्भस्य नानामुखप्रसृततया अमीषां संदेहसंकरः ॥

यथावा—

सुमहानेकोऽहार्यः क्षोभं गमितोऽपि नैति वि-
कृतिलवम्। गाम्भीर्यं श्रीधाम्नः स्थिराशयस्यास्य
को गदितुमीष्टाम् ॥ २१६० ॥

सुमहान् गिरिपक्षे अतिविशालः भगवत्पक्षे अतिपूज्यः मह्यते पूज्यते इति महान् इति व्युत्पत्तेः। एकः अहार्यः गिरिः। पक्षे इतरैरसंहार्यः।

ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च।
प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते॥

इति भगवत एव सर्वसंहर्तृत्वोक्तेः। क्षोभं गमितोऽपि पुष्पफलशिलादार्वादिवस्तुलिप्सुभिर्जनैः स्वस्वाभीष्टप्रेप्सुभिरर्थिभिश्च क्षोभितोऽपि विकृतिलवं विकारलेशमपि नैति। स्थिरायाः भुवः आशयस्य आधारस्य जलाशय इतिवत् भूधरस्येति यावत् यद्वा स्थिराः आशयाः पनसाः यस्मिन् तस्य 'आशयः स्यादभिप्राये पनसाधारयोरपि' इति मेदिनी। पक्षे स्थिरहृदयस्येत्यर्थः। शरणागतसंग्रहे दोषप्रदर्शकैरन्तरङ्गैरप्यकम्पनीयहृदयस्येति भावः। तथाचाह— मित्रभावेन संप्राप्तं न त्यजेयं कथंचन' इति। श्रीधाम्नः सरळद्रुमाणां बिल्वानां वा आश्रयस्य 'श्रीर्वेषरचनाशोभासंपत्सरळशाखिषु। वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽपि' इति रत्नमाला। 'श्रीर्वेषरचनाशोभाभारतीसरळद्रुमे। लक्ष्म्यां त्रिवर्गसंपत्तिविद्योपकरणेषु च' इति मेदिनी च। पक्षे श्रीनिवासस्येत्यर्थः। अस्य गिरेर्भगवतश्च गाम्भीर्यं दुष्प्रवेशत्वं अक्षोभ्यत्वं वा। भगवत्पक्षे भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं आश्रितापराधेषु प्रतिग्रहीतृनिकर्षादिषु च

सतोऽपि स्वज्ञानस्य गोपनेन दुर्ग्रहत्वं वा। तदभिप्रायेण हि सर्वज्ञस्याप्यविज्ञातृत्वोक्तिः। गादितुं वर्णयितुं क ईष्टां शक्नुयात्॥

अत्राप्रस्तुतस्य कस्यचिन्महागिरेः प्रशंसा प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे भगवति श्रीनिवासे पर्यवस्यतीत्याभिसन्धौ अप्रस्तुतप्रशंसा, प्रस्तुतवृषाद्रिवृत्तान्ते वर्ण्यमाने विशेषणसाम्याद्प्रस्तुतमहाराजवृत्तांतस्य वा तथाविधदुग्धपयोनिधेर्वा वृत्तान्तस्य प्रतीतेस्समासोक्तिर्वा। अस्मिन् प्रकारे वृषगिरिपक्षे सुमहान् शोभिनैर्महैरुत्सवैः अनितीत्यन् अनितेः क्विप्। महाराजपक्षे शोभनं महत् राज्यं यस्य तथाभूतः 'वर्तमाने पृषत्' इत्यादिना शतृवद्भावातिदेशादुगित्वान्नुम्। 'महती वल्लकीभेदे राज्ये स्यात्तु नपुंसकम्' इति मेदिनी। 'महद्राज्यं च' इत्यमरश्च। पयोधिपक्षे अतिमहान् आतिविपुलः क्षोभं गमितोऽपि वृषगिरिपक्षे भगवद्दर्शनलिप्सुभिर्जनैरारोहणचरणघट्टनादिभिस्सम्मर्दितोऽपीत्यर्थः। महाराजपक्षे वैरिजनाधिक्षेपादिभिः कदर्थितोऽपीत्यर्थः। पयोधिपक्षे अमृताद्यर्थिभिस्सुरैर्मथनेन विलोडितोऽपीत्यर्थः। विकृतिलवमपि नैति। स्थिराशयस्य आद्ये स्थिराणां सालपर्णीवृक्षाणां आशयस्य आधारस्य 'स्थिरा भूसालपर्ण्योर्ना शनौ मोक्षबलाद्रिषु' इति मेदिनी। द्वितीये स्थिरा भूः शये करे यस्य तस्य स्वायत्तधरणीकस्येत्यर्थः। तृतीये स्थिरायाः भूमेः आ समन्तात् शेत इति शयः तस्य पचाद्यच्। मेखलावद्भुवं वेष्टितवत इत्यर्थः। श्रीधाम्नः आद्यपक्षे—

श्रीपदत्वाच्छ्रियो वासाच्छब्दशक्त्या च योगतः।
रूढ्या श्रीशैल इत्येवं नाम चास्य गिरेरभूत्॥

इति वाराहोक्तरीत्या लक्ष्मीनिवासस्थानभूतस्येत्यर्थः। द्वितीये त्रिवर्गसंपत्त्याश्रयस्येत्यर्थः। तृतीये श्रीजन्मनिकेतनस्येत्य-

र्थः । गाम्भीर्यं दुष्प्रवेश्यत्वं दुराधर्षत्वं निम्नत्वं चेत्यर्थः । अन्यत्पूर्ववत् । यद्वा प्रस्तुतशैलवृत्तान्ते वर्ण्यमाने प्रस्तुतश्रीनिवासवृत्तान्तस्यैव द्योतनात् प्रस्तुताङ्कुरः । अथवा वाच्यस्यैव भगवद्रूपार्थस्य भङ्ग्यन्तरेण वर्णनात्पर्यायोक्तम् । आहोस्वित् एकोहार्य इत्यत्र एकः हा अर्यः आर्य इति वा छेदेन विशेष्यस्यापि श्लिष्टतया अर्यस्य आर्यस्य वा अप्रकृतस्य अहार्यस्य शेषाद्रेः प्रकृतस्य च श्लेषः । उपपादितेष्वेतेष्वेकत्रैव कविसंरम्भस्यावस्थापयितुमशक्यतया एतेषां संदेहसंकरः । अर्यः स्वामी एकोऽधिपतिरित्यर्थः 'अर्यस्स्वामिवैश्ययोः' इति निपातनात् 'ऋ गतौ' इत्यस्माद्धातोर्यत् । आर्यः प्राज्ञः आचार्य इत्यर्थः उक्तादेव धातोः 'ऋहलोर्ण्यत्' इति ण्यत् । इदं 'अर्यस्स्वामि' इत्युक्तसूत्रस्य प्रत्युदाहरणम् । हेत्यव्ययं गांभीर्यचिन्तनप्रयुक्तविस्मये । 'विस्मये च जुगुप्सायां ह,' इति शेषः । अर्यपक्षे स्वामिपक्षे उक्त एवार्थोऽनुसंधेयः । आर्यपक्षे तु क्षोभं गमितोऽपि 'इमा रामास्सरथास्सतूर्याः' इत्युक्तदिशा क्षोदिष्ठफलप्रदर्शनादिभिरितरैः प्रलोभितोऽपि विकृतिलवमपि तदासङ्गकृतचित्तविकारलेशमपि नैति । 'तवैव वाहास्तव नृत्तगीते' इत्यादिवत्तत्सर्वं प्रत्याख्याय 'वरस्तु मे वरणीयस्सएव' इत्युक्तरीत्या अस्खलितचित्तवृत्तिरेव भवतीति भावः । श्रीधाम्नः विद्यानिधेः स्थिराशयस्य स्थिरे मोक्षे आशयः अभिप्रायः यस्य तस्य श्रीस्थिरशब्दयोः कोशस्तु प्रागुक्त एव । अस्य अहार्यस्य अर्यस्य आर्यस्य च गाम्भीर्यं गदितुं क इष्टामित्यर्थः ॥

यथावा—

**मरकतमणिरेकोऽयं स्फुरतितरां सकललोकविभवकृते । भाग्यगरीयांसोऽमुं भोग्यतमं प्राप्नुवन्ति नैवान्ये ॥ २१६१ ॥**

अत्र भगवानेव मरकतमणितयाऽध्यवसीयत इति रूपकातिशयोक्तिः, आहोस्वित् अयमिति विषयं भगवन्तं निर्दिश्य तस्मिन्मरकतमणित्वारोपाद्रूपकं, अथवा भगवतो मरकतमणित्वेन संभावनाद्वस्तूत्प्रेक्षा गम्या, उत अप्रस्तुतमरकतवृत्तान्तेन प्रस्तुतश्रीनिवासवृत्तान्तप्रतीतेरप्रस्तुतप्रशंसा, किंवा मरकतमणित्वेनाध्यवसितस्य श्रीनिवासस्य सकललोकविभवकृते स्फुरतीति लोकसिद्धगारुत्मतापेक्षया विशेषस्य गम्यमानत्वाद्व्यतिरेकः, आहो श्रीनिवासस्यैव भङ्ग्यन्तरेण वर्णनात्पर्यायोक्तमिति भूयसामलंकाराणां संदेहसंकरः ॥

यथावा —

त्वदपाङ्गप्रत्यूषे विदळितदुरितौघसंतमसदोषे ।
उरगगिरिनाथ विसरति परितो विकसति मदन्तरङ्गाब्जम् ॥ २१६२ ॥

अत्र त्वदपाङ्ग प्रत्यूष इव, अघयूथं संतमसमिव अन्तरङ्गं अब्जमिवेत्युपमाया वा, त्वदपाङ्ग एव प्रत्यूषः । अघयूथमेव संतमसं अन्तरङ्गमेवाब्जमिति रूपकस्य वा साधकबाधकप्रमाणाभावेनानिश्चयात्संदेहेन संकरः । साधकबाधकप्रमाणे न्यायदोषरूपे । यत्र न्यायदोषलक्षणसाधकबाधकप्रमाणयोरन्यतरस्यावतारः तत्रैकतरस्य निश्चयान्न संदेहः । न्यायश्च क्वचिदुपमायास्साधकः । रूपकस्य तु न साधको नाप्यत्यन्तप्रतिकूलः । क्वचित्तु रूपकस्य साधकः । उपमायास्तु न साधको नाप्यत्यन्तप्रतिकूल एव, दोषोऽपि क्वचिदुपमाया बाधकः रूपकस्य तु तटस्थः । क्वचित्तु रूपकस्य बाधकः उपमायास्तटस्थः । एवमलंकारान्तरयोरपि न्यायदोषावूहनीयौ ॥

तत्रोपमायास्साधको रूपकंप्रति तटस्थो न्यायो यथा—

श्रियमस्माकं तनु तामित्याश्रयतां य अदधीत नु ताम्। गमयन्विपदं तनुतां पदकमलममुष्य संपदं तनुताम् ॥ २१६३ ॥

अस्माकं तां श्रियं मुक्तिसंपदं तनु कुरु इति आश्रयतां जनानां यः श्रीनिवासः विपदं भवमयीं आपदं तनुतां कृशतां गमयन् सन् तां तत्प्रार्थितां श्रियं आदधीत नु कुर्वीत च। नु इत्येतदव्ययं पूर्वोक्तविपत्तनूकरणसमुच्चये। 'प्रत्युक्तावुपमाने च विषादोत्प्रेक्षयोरपि। नु पादपूरणे ज्ञेयो जिज्ञासायां समुच्चये' इति शेषः। अमुष्य भगवतः पदकमलं संपदं सर्वप्रकारां श्रियं तनुतां कुरुताम्। अत्र संपदं तनुतामिति मुख्यतया प्रतिपाद्यमानसर्वप्रकारश्रीप्रदानरूपार्थः भगवत्पद एवानुकूल्यमश्नुत इति पदं कमलमिवेत्युपमायास्साधकः। पदमेव कमलमिति रूपकस्य तु नाञ्जस्येन, कमले विवक्षितसंपत्प्रदानस्य मुख्यतयाऽनवगतेः। ननु तर्हि रूपकबाधिकैव किं न स्यादुपमेति शङ्क्यं, कमलेऽपि सौरभादिरूपमुख्यसंपत्प्रदानसंभवात्। अतो न रूपकबाधकत्वं, किंतु तटस्थतैव ॥

रूपकसाधक उपमांप्रति तटस्थो यथा—

साधुगतिप्रतिरोधकमाधुन्वानाऽखिलं तमःप्रसरम्। माधवमुखामृतांशोराधत्तां नयनसंमदं ज्योत्स्ना ॥ २१६४ ॥

साधु यथास्यात्तथा गतेः संचरणस्य अन्यत्र सन्मार्गगमनस्य अर्चिरादिगतेर्वा प्रतिरोधकम्। अन्यत्सुगमम्। अत्र मुख-

मेवामृतांशुरिति रूपके ज्योत्स्नापदं साधकप्रमाणं मुख्यतयाऽवगम्यमानो ज्योत्स्नापदार्थः अमृतांशोरेवानुकूल्यमश्नुत इति मुखामृतांशोरिति रूपकसाधकः। मुखं अमृतांशुरिवेत्युपमायास्तु नाञ्जस्येन साधकः, मुखे मुख्यतया जोत्स्नापदार्थस्य चन्द्रिकारूपस्यानवगमात्। न च तर्हि रूपकमुपमाबाधकमेव किं न स्यादिति वाच्यं, यथा अमृतांशावनुकूलः न तथा मुखे। किंतूपचारेणानुकूल्यस्य कथंचित्संभवान्नोपमाप्रतिकूलता। किंतु ताटस्थ्यमेवेति ध्येयम्॥

उपमाबाधकाद्रूपकपरिग्रहो यथा—

शरदुदितशिशिरकिरणस्फुरणजुषा विशदयन्वृषाद्रिमणिः। कमलाक्षो नस्स्वान्तं कटाक्षसुधया विलिम्पति निशान्तम्॥ २१६५॥

नः अस्माकं स्वान्तं निशान्तं भवनमिति व्यस्तरूपकम्। विशदयन्निति हेत्वर्थे शता। हेतुरिह फलम। शरदुदितेत्यादि कटाक्षसुधयेत्यस्य विशेषणम्। अत्र कटाक्षस्सुधेवेत्युपमायां उक्तव्यस्तरूपकमेव न बाधकं, किंतु शरदुदितेत्यादिसामान्यधर्मप्रयोगोऽपि बाधक एव। न तु तटस्थः 'उपमितं व्याघ्रादिभिः' इत्यादिना तदप्रयोग एव समासविधानादिति प्राञ्चः। वयं तु क्वचित्सामान्यधर्मप्रयोगोऽपि नोपमाबाधक इति ब्रूमः॥

यथा—

स्ववशानुचरं रुचिरं सपद्मकं देवकुञ्जरं सुकरम्। नागागमसविहारं योगाद्विन्देय धीरगम्भीरम्॥

स्वा स्वकीया या वशा करिणी 'वशा वन्ध्याऽसुता योषा स्त्रीगवीकारिणीषु च। त्रिष्वायत्ते क्लिबमायात्तत्वे चेच्छाप्रभुत्व-

योः' इति मेदिनी। तस्याः अनुचरं सहायम्। पक्षे स्ववशेनैव स्वेच्छयैव अनुचरः। 'यत्र कामगमो वशी' इत्युक्तरीत्या सकललोकचारी स्वतन्त्र इत्यर्थः। तं तथोक्तं, पद्मकेन बिन्दुजालकेन सह वर्तत इति सपद्मकः तम्। पक्षे पद्मया श्रिया सह वर्तमानं, शैषिके कपि 'आपोऽन्यतरस्याम्' इति वैकल्पिको ह्रस्वः। सुकरं शोभनशुण्डादण्डं रमणीयपाणिं च। नागानां गजानां आगमेन प्राप्त्या सविहारं नागागामे फणिशैले सविहारं च। धीरगम्भीरं देवकुञ्जरं देवः कुञ्जर इवेति विग्रहः देवश्रेष्ठं श्रीनिवासं योगात् युक्तेः सन्नाहादुपायाद्वा पक्षे ध्यानात् विन्देय 'योगस्सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः॥

यथावा—

**अतिवृद्धिमदामोदप्रदानतो विवशयन्सदालिवरान्। दैवतनागः फणिगिरिवनचारी सकलभान्वितो जयतु॥ २१६७॥**

अतिवृद्धिमतः आमोदस्य आनन्दस्य पक्षे अतिशयिता वृद्धिर्यस्य स तथा यो मदामोदः तस्य दानपरिमळस्य प्रदानतः सदाळिवरान् सतां ब्रह्मविदां आळेः पङ्क्तेः ये वराः श्रेष्ठाः तान्। पक्षे सदा अळिवरान् भ्रमरश्रेष्ठान् विवशयन्, सकला संपूर्णा भा दीप्तिः 'तस्य भासा सर्वमिदं विभाति' इत्याद्युक्ता तया अन्वितः। पक्षे सः कलभैः त्रिंशद्वर्षगजविशेषैः अन्वितः दैवतनागः देवश्रेष्ठः भगवान् जयतु। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः। अत्र पद्यद्वयेऽपि देवकुञ्जरं दैवतनाग इत्यत्र उपमितसमासाश्रयेण सामान्यधर्मप्रयोगो नोपमाबाधकः। 'बृन्दारककुञ्जरैः पूज्यमानम्' इति सामान्यधर्म-

प्रयोगेऽपि समासविधानात् व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थत्वादस्य वचनस्य। तस्मादिह उपमारूपकयोस्संदेह एव युक्तः॥

रूपकबाधकादुपमापरिग्रहो यथा—

नमदमरमकुटपटलीघटितमणीकिरणपुञ्जपिञ्जरितम्। भव्यं तनोति जगतां दिव्यं फणिशैलनाथपदपद्मम्॥ २१६८॥

अत्र नमदमरेत्यादि विशेषणं पद्मे कथंचिदप्यसंभवीति पदमेव पद्ममिति रूपकस्य बाधकं न तु तटस्थम्॥

एवं—

वृषभूभृति विबुधानामावासे पारिजात इव लसति। जगदामोदविधात्री जयति श्रीमञ्जरी मुरं द्विषति॥ २१६९॥

विबुधानां विदुषां देवानां वा आवासे निवासभूते वृषभूभृति शेषाद्रौ। पक्षे वृषा इन्द्रः भूभृत् राजा यस्य तस्मिंस्तथोक्ते। विबुधानामावासे त्रिदशालये पारिजात इव लसति प्रकाशमाने मुरं द्विषति श्रीनिवासे 'द्विषश्शतुर्वा' इति द्वितीया। जगतां आमोदस्य आनन्दस्य परिमळस्य च विधात्री। शेषषष्ठ्यास्समासः। श्रीः लक्ष्मीरेव मञ्जरी वल्लरी जयति। अत्र श्रीमञ्जर्गीत्यत्र रूपकमेवाभ्युपेत्यं, जगदामोदविधात्रीति सामान्यधर्मोपादानात्तस्य चोपमाबाधकत्वात्। न च पारिजात इवेत्युपमोपक्रमानानुरूप्यमिति वाच्यम्, सत्यपि बाधके उपक्रम एवानुरोद्धव्य इतीदं न वेदानुशासनम्, नापि धर्मानुशासनं न वा राजशासनम्। यत्र तु न

बाधकं, यथा अत्रैव पद्ये तृतीयचरणे जगदामोदविधातरि' इति कृते प्रकामं भवतु तत्रोपक्रमानुरोधादुपमितसमास एव ॥

एवं—

वृषभूभृति विबुधानामावासे श्रीनिवासकल्पतरौ । जगदामोदविधातरि जयति श्रीमञ्जरी महोदारे ॥ २१७० ॥

इति पूर्वोदाहृतपद्यस्यैव प्रकारान्तरेण प्रणयने श्रीमञ्जरीत्यत्र सामान्यधर्माप्रयोगेऽपि नोपमासमासो युक्तः । किंतु श्रीनिवासपारिजात इत्यत्र जगदामोदेत्यादिसामान्यधर्मप्रयोगबलाद्रूपकसमासे स्थिते तदनुरोधस्यैवोचितत्वात् । अन्यथा प्रथममभेदप्रधानतया प्रकृष्टं रूपकमवलम्ब्य पश्चाद्भेदाभेदप्रधानतया ततोऽपकृष्टाया उपमाया अवलम्बने पतत्प्रकर्षदोषोऽपि स्यात् ॥

यथावा—

मणिवरपरिरब्धाया वक्षस्स्थल्याः फणीन्द्रशिखरिमणेः । मौक्तिकमाला विलसति ललिता स्वेदोदबिन्दुमालेव ॥ २१७१ ॥

अत्र स्वेदोदबिन्दुमालेवेत्युत्प्रेक्षा न तूपमा, तथा सति मणिवरपरिरब्धाया इति वक्षस्स्थलीविशेषणस्य नैरर्थक्यापातात् । मौक्तिकमालायास्स्वेदबिन्दुमालोपमाया उक्तविशेषणनैरपेक्ष्येणैव सिद्धेः । अतो मणिवरेत्यादि वक्षस्स्थलीविशेषणमुपमाबाधकम् ॥

अभिन्नपदबोध्यास्स्युर्नानालंकृतयो यदि ।
तदैकवाचकानुप्रवेशसंकर इष्यते ॥

अर्थयोश्शब्दयोश्शब्दार्थयोर्वाऽप्येकवाचके ।
अनुप्रवेशतस्सोऽयं त्रिविधः परिकीर्तितः ॥

अभिन्नपदबोध्यनानालंकारत्वमेकवाचकानुप्रवेशसंकरः । तत्र च अर्थालंकारयोश्शब्दालंकारयोर्वा एकस्मिन् वाचके अनुप्रवेशेन त्रैविध्यम् । अर्थालंकारयोरेव एकवाचकानुप्रवेश इति दीक्षिताः । शब्दालंकारयोरपि स इति सर्वस्वकारः । शब्दार्थालंकारयोरेवेति काव्यप्रकाशकारः ॥

तत्राद्यो यथा—

त्वदितरदैवतभजनाद्यदि विन्देतामृतं जनो जातु । उदमन्थादपि शौरे नूनं विन्देत स खलु नवनीतम् ॥ २१७२ ॥

उदकस्य मन्थः 'मन्थौदन' इत्यादिना उदकशब्दस्य वैकल्पिक उदादेशः । अत्र प्रतिपाद्यमानोऽर्थस्तुल्यवाक्यार्थैक्यारोपलक्षणनिदर्शनारूपः । किंचित्तर्कणमन्यत्तर्कणसाधनमित्युक्तसंभावनरूपश्चेत्यनयोरर्थालंकारयोरेकानुपूर्वीबोधितत्वादेकवाचकानुप्रवेशसंकरः ॥

यथावा—

सुरपुङ्गवे समस्तस्तत्पुरुषे भजति गौरवं स्वान्ते । धत्ते सुशब्दतामथ योऽनेवंस्यात्कथं नु स सुशब्दः ॥ २१७३ ॥

सुरपुङ्गवे देवसार्वभौमे । तत्पुरुषे इत्यत्र तदिति भिन्नं पदं गौरवविशेषणम् । पुरुषे श्रीमति नारायणे समस्त सर्वोऽपि लोकः

स्वान्ते मनसि तत् अनिर्वचनीयं गौरवं भक्तिमिति यावत्। भजति अथ सुशब्दतां शोभनश्शब्दः कीर्तिर्यस्य सः तस्य भावं 'शब्दोऽक्षरयशोगीतव्योमवाक्यध्वनिष्वपि' इति रत्नमाला ॥

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ।
यावत्सुशब्दो भवति तावत्स्वर्गे महीयते ॥

इति भारतप्रयोगश्च । भगवति गौरवभागुत्तमकीर्तिमान् भवतीत्यर्थः । यः पुमान् अनेवंस्यात् भगवति गौरवं न तनुयात् सः कथंनु सुशब्दः सुकीर्तिः भवेत्। भगवदभक्तस्य कथं सुकीर्तिलाभस्स्यादित्यर्थः। अन्यत्र तत्पुरुषे तत्पुरुषसमासविवक्षायामिति यावत्। सुरपुंगवे सुरपुंगवशब्दे गौः अवं इति छेदः। समस्तः समासं प्राप्तः गौः गोशब्दः स्वान्ते स्वस्य चरमावयवभूते ओकारे अवं अवादेशं भजति। 'गोरतद्धितलुकि' इति गोऽन्ततत्पुरुषाट्टचि चरमावयवस्य ओकारस्य 'एचोऽयवायाव.' इत्यवादेशो भवतीत्यर्थः। अथ एवमवादेशानन्तरमेव सुशब्दतां साधुशब्दत्वं धत्ते । तत्पुरुषे गोशब्दस्य कृतसमासान्तस्यैव साधुत्वात्। यः तत्पुरुषे समस्तः गोशब्दः उत्तरपदभूतः अनेवंस्यात् समासान्तटजभावेन अवादेशं न प्राप्नुयात् सः कथं सुशब्दः साधुशब्दस्स्यात्। उक्तसमासान्तप्रत्ययस्य नित्यतया तदभावे तस्य साधुता कथं स्यादिति भावः। अत्र सौशब्द्यभाक्त्वस्य भगवद्भक्तिभाक्त्वरूपवाक्यार्थहेतुकत्वादेकं काव्यलिङ्गम्। अप्रस्तुतभक्तजनसौशब्द्यभाक्त्वरूपकार्यप्रशंसया तत्कारणभूतभगवद्भक्तिरूपकारणस्य शुभप्रदानोत्कर्षप्रतीतेरेका कार्यनिबन्धनाऽप्रस्तुतप्रशंसा । एवमप्रस्तुतानेवंविधासौशब्द्यभाक्त्वरूपकार्यप्रशंसया तत्कारणभूतभगवद्गौरवरूपकारण-

स्यानर्थदानोत्कर्षप्रतीतेरन्या चाप्रस्तुतप्रशंसा। प्रकृताप्रकृतश्लेषश्चेत्येतेऽर्थालंकारा एकवाचकानुप्रविष्टतया संकीर्यन्ते॥

यथावा—

हरिगुणमसृणा कृतिरियमनादृता चेत्खलैः किमेतस्याः। लावण्यघना ललना जनुषान्धैर्निन्द्यते यदि किमस्याः॥ २१७४॥

जनुषान्ध इत्यत्र तृतीयाया अलुक् 'पुंसाऽनुजो जनुषान्ध इति च' इति निपातनात्। अत्र सर्वं पद्यं दृष्टान्तालंकाररूपम्। पूर्वोत्तरार्धे प्रत्येकमन्यदोषेणान्यदोषानुदयलक्षणावज्ञालंकाररूपे। तेन एकावाचकानुप्रवेशसंकीर्णे॥

यथावा—

भगवन् स दैवनिहतप्रकृतिर्द्वेष्टा तवेडितः क्व नु वा। नित्यमुदात्तप्रकृतिस्तवाश्रिता नेडितः क्व वा दृष्टः॥ २१७५॥

सः दुष्कृतातिशयस्य दुर्वचत्वात्स इति निर्देशः। तव द्वेष्टा जनः दैवेन निहता नाशिता प्रकृतिः स्वाभाविकभगवच्छेषताद्याकारो यस्य तथोक्तस्सन् क्वा ईडितः स्तुतः स्यात् सर्वत्र निन्दित एव स्यादिति भावः। नित्यं तव आश्रिता पूजयिता उदात्तप्रकृतिः श्लाघ्यस्वभावः क्वा नेडितः सर्वत्र सर्वैस्स्तुत एव स्यादिति भावः। पक्षे द्वेष्टा द्वेष्टत्याकारकदशब्दः सदैव नित्यमेव निहता अनुदात्ता प्रकृतिः तृच्प्रकृतिः द्विषधातुरूपा यस्य स तथोक्तः। द्विषधातोरनुदात्तेषु परिगणितत्वादिति भावः। अतएव क्वा इडितः इडागमेन संबद्धः 'एकाच उपदेशोऽनुदात्तात्' इतीण्निषे-

थादिति भावः । अश्विता अश्वितेत्याकारद्दशब्दस्तु नित्यं उदात्त-प्रकृतिः उदात्तभूता अश्वधातुरूपा प्रकृतिर्यस्य स तथा अतएव क्त्वा इडितो न इडागमविशिष्टो न स्यात् उदात्तत्वात् 'आर्धधातुकस्येड्वलादेः' इतीडागमं प्राप्त एव भवेदिति भावः । अत्र विशिष्टो वाक्यार्थस्समासोक्तिरूपः काव्यलिङ्गरूपाभ्यां वाक्यार्थाभ्यामेकवाचकानुप्रवेशसंकीर्णः ॥

यथावा—

**शेषगिरीश्वर भवतो वशगौ खगभुजगतल्लजौ यस्मात् । भजतो नित्यसमासं मन्ये तदविग्रहावेतौ ॥ २१७६ ॥**

हे शेषगिरीश्वर श्रीनिवास! पक्षे शेषगिरि व्याकरणे ईश्वर समर्थेति कस्यचिद्विदुषस्संबोधनम् । 'स्वामीश्वर' इत्यादिना सप्तमी । प्रशस्तौ खगभुजगौ खगभुजगतल्लजौ 'प्रशंसावचनैश्च' इति समासः । तार्क्ष्यशेषावित्यर्थः । पक्षे खगतल्लजः भुजगतल्लज इत्येतौ शब्दावित्यर्थः । यस्माद्धेतोः नित्यसमासं 'आस उपवेशने' भावे घञ् । समश्चासावासश्चेति विग्रहः । तुल्यावस्थानं सहावस्थितिमित्यर्थः । पक्षे नित्यं समस्ततां भजतः । 'कृष्णसर्पवाप्यश्वादिवदेते नित्यसमासाः' इति 'मतल्लिका मचर्चिका' इत्यत्र सुधाकारादयः । नतु तस्मात् एतौ खगतल्लजभुजगतल्लजशब्दौ अविग्रहौ वृत्त्यर्थावबोधकवाक्यविरहितौ । यद्वा अस्वपदविग्रहौ मन्ये । अन्यथा नित्यसमासं न प्राप्नुत इति भावः । 'अविग्रहो नित्यसमासः अस्वपदविग्रहो वा । वृत्त्यर्थावबोधकवाक्यं विग्रहः' इति शाब्दिकाः । अत्र श्लेषानुमानयोरेकवाचकानुप्रवेशः ॥

यथावा—

**नक्षत्रपथोल्लङ्घी नवघनराज्याभिषेकमभिगमि-**

तः । उत्तुङ्गशृङ्गसंगत उचितं भूभृद्वरोऽयमहिशैलः ॥ २१७७ ॥

नक्षत्रपथं अन्तरिक्षं उल्लङ्घत इति तथोक्तः । अन्यत्र क्षत्रधर्मानतिवर्तीत्यर्थः । नवया घनराज्या जलदश्रेण्या अभिषेकं अभिगमितः । अन्यत्र नवं प्रत्यग्रं घनं सान्द्रं यत् राज्यं तस्मिन् आभिषेकं अभिगमितः । उत्तुङ्गैः शृङ्गैः शिखरैः सानुभिर्वा उत्तुङ्गेन शृङ्गेण प्राधान्येन प्रभुत्वेन वा संगतः संबन्द्धः । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके । विषाणोत्कर्षयोः' इति मेदिनी । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरश्च । भूभृद्वरः राजवरेण्यः गिरिश्रेष्ठश्च । अत्र काव्यलिङ्गसमालंकारयोश्श्लेषानुप्राणितयोरेकवाचकानुप्रवेशः ॥

यथावा—

स्वनयनजयिभिर्हरिधृतवैदूर्यैर्निर्जितोऽथ मार्जारः । मारो यदि जातु स्यात्तदाऽपि हरिनीलविग्रहाजितस्स्यात् ॥ २१७८ ॥

मार्जारः बिडालः मार्जारशब्दश्च स्वनयनजयिभिः निजलोचनरुचिविजित्वरैरिति यावत् हरिधृतैः भगवता भूषणतया विधृतैः वैदूर्यैः वालवायजमणिभिः । विदूरात्प्रभवन्ति वैदूर्याणीति विग्रहः । 'प्रभवति' इत्यधिकारे 'विदूराञ्ञ्यः' इति ञ्यः । 'वैदूर्यं वालवायजम्' इति विश्वः । अत्र विदूरशब्दो वालवायस्यादेशः पर्यायो वा तत्रोपचरितो वा । तेन वालवायाद्गिरेरसौ प्रभवति न विदूरान्नगरात् तत्र तु संस्क्रियत इत्याक्षेपः प्रत्युक्तः । यदुक्तं—

वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥

इति । वक्तव्यान्तरं तु लक्ष्मीसहस्रसौन्दर्यस्तबकव्याख्यायां 'वैदूर्यवीक्षाभयोद्गच्छत्' इत्यत्र प्रपञ्चितमस्माभिः । निर्जितः पराकृत. स्वनयनरुचिपराभूत्या स्वयमपि पराभूत इति भावः। शब्दपक्षे निर्जितः अत्र नि इत्युपसर्गे इदन्तः न तु रेफान्तः । निगतः र्जा इत्याकारको वर्णो यस्य सः निर्जाः । निर्जाशब्दात्तत्करोतीति णिजन्तात्कर्मणि क्तः । शब्दार्थयोस्तादात्म्यसाम्राज्यान्मार्जारशब्दस्य वैदूर्यनिर्जितत्वमिति ध्येयम् । अथ यदि जातु मारस्स्यात् विद्वेषिमारकोऽपि स्यात् विक्रान्तशिरोमणिर्वैरनिर्यातनपटुरपि स्यादिति भावः । कामोऽपि यदि स्यादित्यप्यर्थः । मार्जारशब्दे र्जावर्णोत्सारणे मार इति स निष्पद्येतेति शब्दपक्षेऽर्थः । 'जातुयदोर्लिङ्, यदायद्योरुपसंख्यानम्' इति जातु यदिशब्दयोगे अनवक्लृप्तौ द्योत्यायां लिङ् । अनवक्लृप्तिरसंभावना । असंभावनीयमेवैतदिति भावः । तदाऽपि हरिनीलैः भगवद्भूतेन्द्रनीलैः विग्रहे युद्धे जितस्स्यात् । पूर्वं वैदूर्यैर्विजितस्य रूपान्तरपरिग्रहेऽपीन्द्रनीलैर्जितत्वं स्यादित्युभयथाऽपि हरिधृतरत्नपराभूततैव संभवेदिति भावः । मारस्य श्यामलत्वेन हरिनीलविग्रहजितत्वमिति बोध्यम् । भगवद्दिव्यमूर्तिजित इति तदर्थः । अत्र संभावनविषमयोरेकवाचकानुप्रवेशः । श्लेषोत्तम्भितत्वं च पूर्ववदेव ॥

यथावा—

**चिदचिद्वरावुभावपि भवतो जगतीश्वरौ न संदेहः । स्त्रीपुंसरूपमात्रे भिन्नौ ननु दिव्यदंपती किंतु ॥ २१७९ ॥**

दिव्यदंपती लक्ष्मीनारायणौ उभौ द्वावपि युवामिति भावः। चिदचिद्वरौ स्वभावान्यथाभावस्वरूपान्यथाभावलक्षणविकाराविरहेण चेतनाचेतनापेक्षया श्रेष्ठौ तद्विलक्षणाविति यावत्। अत एव जगत्याः जगतः ईश्वरौ। न संदेह उभयाधिष्ठानत्वादैश्वर्यस्य नात्र संदेग्धव्यमिति भावः। एवमुभयोस्तौल्यमुक्तम्। वैलक्षण्यमाह—किंतु स्त्रीपुंसरूपमात्रे स्त्रीपुरुषरूपमात्रे भिन्नौ ननु तावन्मात्र एव भिदुरौ न तु जगदीश्वरत्वे इति भावः। अत्र—

त्वं यादृशोऽसि कमलामपि तादृशीं ते
दारान्वदन्ति युवयोर्न तु भेदगन्धः।
मायाविभक्तयुवतीतनुमेकमेव
त्वां मातरं च पितरं च युवानमाहुः॥

इति श्रीविष्णुवैभवाधिकारैरुक्तमनुसंधेयम्।

अन्यत्र ननु दिव्यदंपती हे लक्ष्मीनारायणाविति संबोधनम्। जगति लोके ईश्वरौ ईश्वरशब्दौ चिदचिद्वरौ चित् चकारेत्कः अचित् चकारेत्काभिन्नः टकारेत्क इति यावत्। चिदचितौ वरौ वरप्रत्ययौ ययोस्तौ 'ईश ऐश्वर्ये' इत्यस्माद्धातोः 'स्थेशभासे' इत्यादिना वरच्प्रत्ययेन 'अशू व्याप्तौ' इति धातोः 'अश्नोतेराशुकर्मणि वरट् च' इति वरट्प्रत्ययेन च निष्पन्नाविति भावः। किंतु स्त्रीपुंसरूपमात्रे स्त्रीलिङ्गपुलिङ्गरूपमात्रे भिन्नौ। स्त्रीलिङ्गत्वे वरचा निष्पन्नस्य ईश्वरशब्दस्य टापि ईश्वरेति वरटा निष्पन्नस्य तु 'टिड्ढ' इति ङीपि ईश्वरीति रूपम्। पुलिङ्गत्वे तु उभयथाऽपीश्वर इत्येव रूपमिति तयोर्भेद इति भावः। अत्र प्रकृताप्रकृतश्लेषव्यतिरेकयोरेकवाचकानुप्रवेशसंकरः॥

यथावा—

**राजीव ननु रमाक्ष्णा निराकृतो जीवमात्रशिष्टोऽसि । ज्याश्लिष्टोऽवाग्रस्त्वं स्वल्पप्राणात्मनस्स्थितिस्त्वियती ॥ २१८० ॥**

ननु राजीव हे मत्स्य हे हरिणेति वा । पक्षे हे राजीवेति शब्दस्यैव संबोधनम् । 'राजीवं नलिने ना तु भेदे हरिणमीनयोः' इति मेदिनी । त्वं रमायाः अक्ष्णा निराकृतः तिरस्कृतः मत्स्यहरिणयोर्ललनानयनोपमानतायाः कविसमयसम्मतत्वेन निराकृतत्वोक्तिः । यथोक्तमलंकारशेखरे त्रयोदशमरीच्यां—

मृगतन्नेत्रपाथोजतत्पत्रझषखञ्जनैः ।
नेत्रं चकोरतन्नेत्रकेतकाळिस्मराशुगैः ॥

इति सदृशत्वेन कविभिर्वर्णनीयमित्यर्थः । प्रयोगश्च—'सदृशो वनवृद्धानां कमलानां त्वदीक्षणे, इति । तत्रैव पञ्चदशमरीच्यां—

भृतकाद्यैश्च भृत्याद्यैर्न्यक्कारार्थक्रियापदैः ।
संदेहतत्तद्वाक्याद्यैस्साद्दश्यं प्रतिपाद्यते ॥

इति च संदेहतः 'किमिन्दुः किं पद्मं' इत्याद्यैः तत्तद्वाक्याद्यैः 'तस्य पुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति' इत्याद्यैः साद्दश्यं प्रतिपाद्यत इति तदर्थः ।

शब्दपक्षे निराकृतः नीत्येष इदन्त उपसर्गः निर्वर्तितः रा इत्याकारको वर्णो यस्य स तथोक्तः कृतः । रा इत्यस्य स्त्रीप्रत्ययान्तत्वाभावान्नोपसर्जनह्रस्वः । जीवमात्रं प्राणधारणमात्रं शिष्टं यस्य स तथोक्तः । 'जीवोऽसुधारणम्' इत्यमरः । अप्राप्ते विधिर्नियमिते समये दुर्मोचत्वात्प्राणानां तद्धारणमात्रं कुर्वन्निति भावः । पक्षे रावर्णोद्वासने राजीवशब्दो जीवेति परिशिष्ट इत्यर्थः । अतएव

अवाग्रः अवनतः 'अवाग्रेऽवनतानतम्' इत्यमरः। अवाङ्मुख इति यावत्। ज्या भूमिः श्लिष्टा आलिङ्गिता येन स तथोक्तः असि। भूमाववाङ्मुखतया निपातितस्ततः उत्थातुमक्षम इति भावः। पक्षे जी इत्याकारकवर्णेन आश्लिष्टः युक्त इत्यर्थः वाग्र इति छेदः। वेत्याकारकं वर्णे अग्रे यस्य स तथोक्तः। जीवेति वर्णद्वयमात्रपरिशिष्टस्य ताद्विध्यादिति भावः। निराकृतोऽयं राजीवः कुतस्तत्प्रतीकारक्षमो नाभूदित्यत्राह—स्वल्पेति स्वल्पप्राणः अल्पशक्तिः आत्मा देहो यस्य स तथोक्तः तस्य। पक्षे राजीवेति शब्दोऽल्पप्राणवर्णात्मक इत्यर्थः। तस्य 'वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः' इत्युक्तेः। स्थितिस्तु इयती एतावती अल्पप्राणस्य वैरिभिर्निराकृतत्वेऽपि प्रतीकाराक्षमतया तूष्णीं भूमाववाङ्मुखतया शयनमित्येतावत्येवावस्थितिरिति भावः। अन्यत्र राजीवेत्यस्याल्पप्राणात्मकस्य शब्दस्य स्थितिरेतावतीत्यर्थः। अत्राप्रस्तुतस्य राजीवस्य निराकरणादिकार्यवर्णनेन तत्कारणस्य प्रस्तुतस्य रमानयनस्य लोकोत्तरथाळथळ्यचाञ्चल्यादिप्रतीतेः कार्यनिबन्धनाप्रस्तुतप्रशंसा। मीनहरिणयोः राजीवशब्दस्य चाप्रकृतानां श्लेषः। निराकृतत्वस्य जीवमात्रपरिशिष्टतां प्रति तस्याश्च ज्याश्लिष्टतादिं प्रति हेतुत्वात्काव्यलिङ्गं सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासश्चेत्येतानि एकवाचकानुप्रविष्टानि॥

यथावा—

जेतुं त्वद्वक्षोजावरिभावात्के विभिन्नमपि नालम्। आस्ताम्ब नारिकेलं क्लीबाल्पप्राणमयगतिस्त्वियती॥ २१८१॥

हे अम्ब! नारिकेलं नारिकेलफलम्। क्लीबनिर्देशो निष्पौरुष-

त्वद्योतनाय । 'त्रिहीनं प्रसवे सर्वम्' इति क्लीबता। अरिभावात् शत्रुभावात् के शिरसि विभिन्नमपि विदीर्णशीर्षमपीति लोकोक्तिः। त्वद्वक्षोजौ जेतुं नालं असमर्थे आस्त। वक्षोजाविति पुल्लिङ्गद्विवचननिर्देशेन तयोर्वीरपुरुषद्वयत्वं प्रतीयते । एकेन क्लीबेन द्वौ वीरपुरुषौ जेतुमशक्याविति भावः । पक्षे नारिकेलमिति पदं अरिभावात् अविद्यमानरिवर्णत्वात् के विभिन्नमपि के इत्याकारककवर्णौ विभिन्नौ यस्मिंस्तत् । के इत्याकारककवर्णभ्रंशं प्रापितमिति यावत् । अपिशब्दस्समुच्चये । नालं नालमित्यवशिष्टवर्णद्वयं आस्तेत्यर्थः । क्लीबस्य षण्डस्य अल्पप्राणमयस्य अल्पशक्तिमतः गतिः स्थितिः इयती परपराभवानर्हतैवेति भावः । इतरत्र क्लीबस्य नपुंसकालिङ्गस्य अल्पप्राणवर्णात्मकस्य स्थितिरित्यर्थः । अत्र विषमार्थान्तरन्यासयोरेकवाचकानुप्रवेशः ॥

यथावा—

**नाके स्थितिमत्क्वचन व्यञ्जनपरिवृत्तितोऽप्यमुक्तार्थम् । श्रीकुचलक्ष्मीस्तेनं परिपाके पतति नारिकेळमधः ॥ २१८२ ॥**

श्रीकुचलक्ष्मीस्तेनं नारिकेळं नाके स्वर्गे क्वचन कस्मिंश्चिद्ज्ञातप्रदेशे व्यञ्जनपरिवृत्तिः स्वचिह्नविनिमयेन वेषान्तरेणेति यावत् । स्थितिमदपि 'व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽक्षरे' इति रत्नमाला। अमुक्तार्थं अपरित्यक्तस्वमुषितार्थकम् । अनेन पतनहेतुदोषातिशय उक्तः । गर्हितार्जितार्थपरित्यागे तु "शासनाद्वा विमोक्षाद्वा स्तेनस्स्तेयाद्विमुच्यते । यद्गर्हितेनार्जयन्ति जप्येन तपसैव च । तस्योत्सर्गेण शुद्ध्यन्ति" इत्युक्तरीत्या दोषातिशयो न स्यादिति भावः । अतएव परिपाके स्वकृतदुष्कर्मपरिणामसमये अधः पतति अधो-

गतिं विन्दतीत्यर्थः। पक्षे नारिकेलं नारिकेलमिति पदं नाकेस्थिमत् ना के इति वर्णद्वयाविकृतिस्थितिशालि। क्वचन अवशिष्टाक्षरयोरित्यर्थः। व्यञ्जनयोः हलोः परिवृत्तितः रि ल इत्यक्षरस्थरेफलकारयोर्व्यत्ययादपीति यावत्। न तु तन्निष्ठयोरिकाराकाररूपस्वरयोरपीत्यर्थः। तयोर्यथास्थानमेव स्थितत्वादिति भावः। अमुक्तार्थं अपरित्यक्तस्वाभिधेयमित्यर्थः। उक्तरीत्या नारिकेळशब्दस्य नाळिकेरमिति रूपान्तराभासावपि तुल्यार्थकताया एव दर्शनादिति भावः। अत्र नारिकेळाधःपतनस्य श्रीकुचलक्ष्मीस्तेनमित्यादिपदार्थैस्समर्थनात्काव्यलिङ्गं अप्रस्तुतनारिकेळाधःपतनकार्यप्रशंसाया तत्कारणीभूतश्रीकुचसौन्दर्यभूमावगते कार्यनिबन्धनाप्रस्तुतप्रशंसा चैकवाचकानुप्रवेशेन संकीर्यते॥

यथावा—

**अहिगिरिविभुना विहितं प्रत्ययमिह कश्चिदातिशायनिकम्। प्राप्तोऽजादिश्लाघ्यं ज्यादेशे ज्येष्ठतां प्रशस्य इयात्॥ २१८३॥**

कश्चित् प्रशस्यः प्रशंसार्हः पुमान भाग्यवानिति यावत्। पक्षे प्रशस्यशब्दः आतिशायनिकं अतिशायनप्रयोजकं प्रकर्षप्रयोजकमित्यर्थः। "प्रयोजनम्" इत्यनेन ठक्। इह प्रयोजनशब्देन हेतुर्विवक्षितः। प्रयोजनं फलं कारणं च" इति व्याख्यानात्। पक्षे आतिशायनार्थकं 'आतिशायने तमबिष्ठनौ' इति सूत्रेणातिशयविशिष्टार्थवृत्तेर्विहितामित्यर्थः। अतिपूर्वकाच्छेतेर्ल्युट्। अतिशायनमेवातिशायनं अस्मादेव निपातनाद्दीर्घः न तु सौत्रः। तेन लोकेऽपि दीर्घस्साधुः 'अबाधकान्यपि निपातनानि भवन्ति। तेन ह्रस्वोऽपि साधुः' इति व्याख्यातारः। अतएव अजादिभिः ब्रह्मरुद्रादिभिरपि

श्लाघ्यं पक्षे अच् अज्रूपो य आदिः प्रथमवर्णः तेन श्लाघ्यं इष्ठनमिति यावत्। अतिशायने तमबिष्ठनोरुभयोर्विधानात्कः प्रत्ययोऽत्र ग्राह्य इति संदेहो मा भूदितीदं विशेषणमिति ध्येयम्। अहिगिरिविभुना श्रीनिवासेन। अन्यत्र अहिगिरि पातञ्जलभाष्ये विभुना तत्त्वावधारणपटुना विहितं प्रत्ययं स्मृतिसंतानरूपं ज्ञानं 'स नो देवश्शुभया स्मृत्या संयुनक्तु' इति श्रुतेः। 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते, इति स्मृतेश्चेति भावः। शब्दपक्षे प्रत्ययं शाब्दिकसंकेतितं प्रत्ययं प्राप्तस्सन्। ज्यादेशे भूप्रदेशे 'क्षोणिः ज्या काश्यपी क्षितिः' इत्यमरः। ज्येष्ठतां अतिशयितप्रशस्यतां इयात् प्राप्नुयात्। प्रथममेवानभिसंहितफलकर्मानुष्ठानादिप्राप्तनैर्मल्यतया प्रशस्यः पुमान् भगवदनुग्रहलब्धस्वच्छतमप्रत्ययत्वे अतिमात्रं प्रशस्यो भवेदिति भावः। शब्दपक्षे प्रशस्यशब्दः अतिशायनिकमिष्ठन्प्रत्ययं लब्ध्वा ज्यादेशे 'प्रशस्यस्य श्रः। ज्य च' इत्यनेन ज्येत्यादेशे ज्येष्ठतां ज्येष्ठ इत्याकारकं रूपं इयात् प्राप्नुयात् इत्यर्थः। अत्र प्रशंसनीयपुरुषस्य प्रकृतस्य प्रशस्यशब्दस्याप्रकृतस्य च श्लेषः। ज्येष्ठतावाप्तेः पूर्ववाक्यार्थहेतुकत्वात्काव्यलिङ्गं चेत्येतदुभयमेकवाचकानुप्रविष्टम्॥

यथावा—

**विधिमन्तरङ्गमपि ते विलोडयत्येव नित्यमपवादः। किमुत परमच्युताखिलगीर्वाणपदानुशासनविधातुः॥ २१८४॥**

हे अच्युत! अखिलगीर्वाणपदानां चतुर्मुखाद्यखिलत्रिदशस्थानानां अनुशासनविधातुः प्रशासनविधायिनः 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति श्रुतेः

'शास्ता विष्णुरशेषस्य' इत्युक्तेश्च । ते तव अपवादः आज्ञा त्वत्कर्तृकं शासनं अपवादः निन्देति वा । त्वत्कर्मकं निन्दनमित्यर्थः । अपवादौ तु निन्दाज्ञे" इत्यमरः । अन्तरङ्गं आत्मजतया अतिमात्रप्रत्यासन्नं 'पुत्रो वै हृदयम् । आत्मा वै पुत्रनामासि' इत्यादिश्रुतयोऽत्रानुसंधेयाः । विधिं चतुर्मुखमपि नित्यं विलोडयति कम्पयति । एतच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्ब्रह्मादयोऽपि कम्पन्त इति भावः । 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतम्' इत्यादिश्रुतिभ्यः । परं अन्यं मरुत्तरणिपावकत्रिदशनाथकालादिकं किमुत विलोडयतीति किमु वक्तव्यमित्यर्थः । आत्मजस्यैव शासनान्निन्दनाद्वा कम्पने अन्येषां का कथेति भावः । अन्यत्र अखिलानां गीर्वाणपदानां संस्कृतशब्दानामनुशासनं शिक्षणं तद्विधातुः 'अथ शब्दानुशासनम्' इति प्रतिज्ञाय महाभाष्यं विधातुरित्यर्थः । ते त्वत्संबन्धी त्वन्निर्णीत इति यावत् । अपवादः अपवादशास्त्रं नित्यं अन्तरङ्गमपि अन्तरङ्गं च विधिं शास्त्रं विलोडयति बाधते । परं परशास्त्रं किमुत बाधत इति किमु वक्तव्यमित्यर्थः । अन्तरङ्गबाधकस्यापवादस्य स्वबाध्यबाध्यबाधकत्वं किमाश्चर्यमिति भावः । यत्परिभाष्यते— 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति । अत्र वेदान्तशास्त्रीयेऽर्थे शब्दशास्त्रीयव्यवहारारोपात्समासोक्तिः कैमुत्येनार्थसंसिद्धिरूपकाव्यार्थापत्तिश्चेत्युभयमेकवाचकानुप्रविष्टम् ॥

यथावा—

**त्वयि विन्यस्तात्मभरो नीलमणीमौळिरवरवर्णोऽपि । त्वत्तो विन्दत्युच्चैश्श्रियं श्रियःकान्त दुर्लभामितरैः ॥ २१८५ ॥**

हे श्रियःकान्त! नीलमणीमौलिः इन्द्रनीलाकिरीटः अवरव-र्णोऽपि त्वत्तो न्यूनश्यामलिमाऽपि। पक्षे शूद्रोऽपि 'शूद्राश्चावरवर्णाश्च' इत्यमरः। त्वयि विन्यस्तः आत्मनः स्वस्य भरः भारो येन स तथोक्तः त्वया मूर्ध्ना धृतत्वादिति भावः। पक्षे त्वय्यर्पितात्मरक्षाभर इत्यर्थः॥

अनन्योपायशक्तस्य प्राप्येच्छोरधिकारिता।
प्रपत्तौ सर्ववर्णस्य सात्विकत्वादियोगिनः।
सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा॥

इत्यादिभिः प्रपत्तेस्सर्वाधिकारिकत्वोक्तेः। त्वत्तः उच्चैः पूर्वापेक्षयाऽभ्यर्हितां। पक्षे ब्रह्मादिलोकापेक्षयाऽप्युत्कर्षशालिनीं इतरैः त्वद्विधृताभरणान्तरैः दुर्लभां भगवद्दिव्यविग्रहसुषमानवलम्बितया लब्धुमशक्यां, अन्यत्र प्रपन्नेतरैर्दुरापां 'प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदम्' इत्याद्युक्तेरिति भावः। श्रियं श्यामलिमरूपां अन्यत्र निश्श्रेयससंपदं विन्दति॥

अत्र प्रस्तुते भगवद्धृतेन्द्रनीलमकुटे वर्णनीये विशेषणसाम्यबलादप्रस्तुतावरवर्णप्रपन्नवृत्तान्तः प्रतीयत इति समासोक्तिः। अवरवर्णस्याप्युच्चैश्श्रियः प्राप्तेः त्वयि विन्यस्तात्मभर इति पदार्थहेतुकत्वात्काव्यलिङ्गम्। प्राप्तिसङ्गस्य स्वनीलिम्नो भगवद्दिव्यविग्रहसंनिधिवशेनोत्कर्षवर्णनादनुगुणालङ्कारश्चेत्येतान्येकवाचकानुप्रवेशेन संकीर्यन्ते॥

यथावा—

न त्यक्ष्याम्यच्युतमिति शपथस्सततं विशम्सुघटितश्चेत्। अयमेव भवति सुपथो विपथोऽन्यो योहि विघटिता भविता॥ २१८६ ॥

अच्युतः आश्रितरक्षणव्रतच्युतिविरही भगवान्। तं श्रीनिवासं न त्यक्ष्याम्येवेति सर्वं वाक्यं सावधारणमिति न्यायात्। विशः मनुजस्य 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः। शपथः प्रतिज्ञा सुघटितश्चेत् सुदृढो यदि—

स त्वं प्रहर वा मा वा मयि वज्रं पुरंदर।
नाहमुत्सृज्य गोविन्दमन्यमाराधयामि भोः॥

इति विष्णुधर्मे अम्बरीषोक्तरीत्या भगवदैकान्त्यद्रढीयान् यदीति भावः। अयमेव सुपथः शोभनमार्गः भवति। अन्यः अस्मादितरः विपथः विमार्ग एव। यश्शपथः विघटितः शिथिलो भविता ऐकान्त्यात्प्रच्युतो भवितेति भावः॥

एष निष्कण्टकः पन्था यत्र संपूज्यते हरिः।
कुपथं तं विजनीयाद्गोविन्दरहितागमम्॥

इत्यादिकमिह प्रत्यभिज्ञाप्यते। सुपथः विपथः इत्युभयत्रापि न पथिशब्देन समासः 'न पूजनात्' इति समासान्तनिषेधात्। 'पथस्संख्याव्ययादेः' इति क्लीबताप्रसंगाच्च। किंतु 'पथे गतौ' इत्यस्मात्पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति। तेन सह सु वि इत्यनयोस्समासः। तथाच त्रिकाण्डशेषः 'वाटः पथश्च मार्गस्स्यात्' इति। तेन प्रकृते न काऽप्यनुपपत्तिः 'व्यध्वो विपथकापथौ' इति रभसश्चाह। अन्यत्र शपथः शपथशब्दः विशः विगतशकारस्सन् सुघटितः सु इत्याकारकवर्णेन घटितश्चेत् अयमेव शपथशब्द एव सुपथशब्दो भवति। अन्यः विपथः यः विशाकारस्सन् विघटितः वि इत्याकारकवर्णेन युक्तस्स्यात्। अत्र प्रकृताप्रकृतश्लेषः सुपथत्वविपथत्वयोः पूर्वोत्तरवाक्यार्थाभ्यां समर्थनात्काव्यलिङ्गद्वयं परिसंख्या चैकवाचकानुप्रवेशेन संकीर्यन्ते॥

यथावा—

**अरिरीरितोऽत्रभवताऽऽकारमथ प्रक्रियादशाविधुरः। संवृतमेत्यान्तस्थास्वरवान् भूत्वाऽन्ततो विसृष्टोऽभूत् ॥ २१८७ ॥**

हे भगवन् अत्र अरिः वैरी भवता ईरितः क्षिप्तः निरस्तस्सन्नित्यर्थः। 'विद्धाक्षिप्तेरितास्समाः' इत्यमरः। अतएव अथ अनन्तरं प्रक्रियादशया राज्याधिकारावस्थया विधुरः विश्लिष्टः 'प्रक्रिया त्वधिकारस्स्यात्। दशाऽवस्था' इति चामरः। भवन्निरस्तस्य कथमिव राज्याधिकारभ्रंशो न स्यादिति भावः। संवृतं गुप्तं आकारं आकृतिं एत्य प्राप्य राज्याधिकारभ्रंशप्रयुक्तत्रपाभूम्ना गूढं क्वापि निलीन इति भवः। अन्तः तिष्ठतीत्यन्तस्थाः। स्थाधातोः क्विप्। 'शंस्था' इति महाभाष्यप्रयोगात्। यद्वा विच्। अत्र वक्तव्यं सर्वं लक्ष्मीसहस्ररत्नप्रकाशिकायां 'अन्तस्थोष्मोद्धारात्' इति पद्यविवरणावसरे प्रपञ्चितमस्माभिः। ईदृशो यस्स्वरो ध्वनिः सोऽस्यास्तीत्यन्तस्थास्वरवान् भूत्वा लज्जाभयाभ्यां निमग्नध्वनिर्भूत्वेत्यर्थः। 'स्वरो नासासमीरणे। उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान्' इति मेदिनी। अन्ततः विसृष्टः परित्यक्तः अभूत्। निष्पौरुषतया विक्रान्तगोष्ठीतो बहिष्कृतोऽभूदिति भावः॥

अन्यत्र—अत्रभवतेति समस्तं पदम्। अत्रभवता पूज्येन विदुषेति यावत्। ईरितः उक्तः प्रक्रियादशया संधिरूपप्रक्रियावस्थया विधुरः हीनः अरिः अरिशब्दः अरिरीति केवलारिशब्दप्रयोगावसरे अकारस्य अकारान्तरसंधेरदर्शनादिति भावः। अस्मिन् पक्षे भवताकारमित्यत्र भवता अकारमिति छेदः।

संवृतं संवृतप्रयत्नवन्तं अकारं ह्रस्वाकारं 'ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्' इत्युक्तेः प्राच्य प्रक्रियादशायां ह्रस्वस्याकारस्य विवृतप्रयत्नकत्वेन केवलारिशब्दप्रयोगे प्रक्रियादशाभावादकारस्य संवृतप्रयत्नकत्वमेवेति भावः। "एतच्च सूत्रकारेण ज्ञापितम्। तथाहि 'अ अ' इति। विवृतमनूद्य संवृतोऽनेन विधीयते। अस्य चाष्टाध्यायीं संपूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव। तथाच सूत्रं 'पूर्वत्रासिद्धम्' अधिकारोऽयं, तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा। त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्" इति। सर्वमिदं कौमुदीग्रन्थे व्यक्तम्। अस्मिन् पक्षे अथेत्येतदत्रान्वेति। अथ अकारोच्चारणानन्तरं अन्तस्थास्वरवान् अन्तस्थाः आदन्तोऽयं अन्तस्थाभिश्च संयुतम्' इति पाणिनीयशिक्षादिप्रयोगात् अरिशब्दे अन्तस्थासंज्ञितो वर्णो रेफः। अथ स्वरः रेफोत्तरवर्ती इकारः। 'यरलवा अन्तस्थाः। अचस्स्वराः' इत्यनुशासनात्। तद्वान् भूत्वा अन्ततः अवसाने विसृष्टः विसर्गवानभूत् अरिशब्दस्य ह्रस्वाकाररेफेकारविसर्गघटितत्वात्तथोक्तिरिति ध्येयम्। अत्राप्रकृतस्यारिशब्दार्थस्य अप्रकृतस्यारिशब्दस्य च श्लेषः। आद्यकक्ष्यायां अप्रस्तुतपराभूतवैरिवृत्तान्तेन प्रस्तुतभगवत्पराक्रमोत्कर्षः प्रतीत इति कार्यनिबन्धनाप्रस्तुतप्रशंसा। भगवान्निरस्ततया प्रक्रियादशावैधुर्यस्य तस्य च संवृताकारत्वादेश्च समर्थनात्काव्यलिङ्गमाला चैकवाचकानुप्रवेशेन सकीर्यन्ते॥

यथावा—

एकोऽयमनुपसर्जनभावाद्भगवानमध्यमोऽदोऽन्यः। अपि कः परस्तदेष हि सर्वादौ गण्यते बुधवरेण्यैः॥ २१८८ ॥

अयं भगवान् श्रीनिवासः एक एव अनुपसर्जनभावात् उपसर्जनमप्रधानं 'अप्रधानोपसर्ज्जने' इत्यमरः। तदन्यदनुपसर्जनं तस्य भावात् प्राधान्यादित्यर्थः। अमध्यमः 'तस्य लोकप्रधानस्य जगन्नाथस्य भूपते' इत्युक्तरीत्या सकललोकप्रधानतया सर्वोत्तम इत्यभिप्रायः। अदोऽन्यः अमुष्माद्भगवत इतरः। परोऽपि उत्कृष्टोपि कः? नैवेत्यर्थः। अमुष्मादन्यस्य उत्कर्षसंभावनाऽपि का नामेति भावः। अपिरत्र संभावनायाम्। बुधवरेण्यैः ब्रह्मवितुत्तमैः स एष हि अयं भगवानेव 'हि हेतावधारणे' इत्यमरः। सर्वादौ सर्वेषां ब्रह्मादीनामपि आदौ अग्रे गण्यते। जगज्जन्मस्थेमप्रळयकारणत्वेन कीर्त्यते। अन्यत्र एकादिशब्दाश्शब्दपराः एकः अयं अमध्यमः मध्यमवर्णविधुरः भगवान् भवानित्यर्थः। अदः अन्यः अपिशब्दो भिन्नक्रमः। कः एकः तत् एषोऽपि शब्दः अनुपसर्जनभावात् अन्योपसर्जनत्वाभावाद्धेतोः बुधवरेण्यैः वैयाकरणैः सर्वादौ सर्वादिगणे गण्यते। एक इत्यादीनां प्रत्येकं गण्यत इत्यनेनान्वयः। 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः महासंज्ञाकरणेन तदनुगुणानामेव गणे संनिवेशात्' इत्युक्तेरनुपसर्जनीभूतानामेव सर्वादीनां तद्गणे पाठादिति तथोक्तिः। एकेदंभवददोऽन्यकिंपरतदेतच्छब्दाः क्रमेणात्रपद्ये सर्वादिगणपठिता एवोपानिबद्धा इति ध्येयम्। अत्र प्रकृताप्रकृतगोचरश्श्लेषः। प्रकृतार्थकक्ष्यायां भगवतस्सर्वादिगण्यतायाः पूर्ववाक्यार्थेन समर्थनात्काव्यलिङ्गं सर्वादिगणप्रसिद्धसहपाठानामेकादिशब्दानां न्यसनाद्रत्नावळी चैकवाचकानुप्रवेशेन संकीर्यन्ते। प्रसिद्धक्रमविपर्यासेऽपि रत्नावळी भवत्येवेति निरूपितमधस्तात्तदलंकारनिरूपणावसरे॥

सर्वादौ नाथ भवानस्मादस्मिंत्समुल्लसति ज-

गति। परिदृश्यतामनीदृक्पर इतरस्सम इतोऽस्ति को नाम ॥ २१८९ ॥

हे नाथ! भवान् सर्वादौ सर्वस्य जगतः आदौ समुल्लसति प्रकाशते। सर्वजगत्कारणभूत इत्यर्थः। अस्मात् एतस्मात् त्वत्तः समुल्लसतीत्यावृत्त्या योजनीयम्। समुल्लसति प्रादुर्भावं प्राप्ते इत्यर्थः। अस्मिन् जगति भुवने अनीदृक् अनेवंविधः त्वामिव न जगत्कारणमित्यर्थः। इतः अस्मात्त्वत्तः परः उत्कृष्टः समस्तुल्यो वा इतरः कोनाम अस्ति? परिदृश्यतां पर्यालोच्यतामित्यर्थः। सर्वजगत्कारणभूतस्य तव कार्यभूते अस्मिन् ब्रह्मादिस्तम्बपर्यन्ते भुवने ईदृशजगत्कारणताविधुरः त्वत्कार्यभूतः कोऽन्यस्त्वत्तोऽप्युत्कृष्टस्समो वा स्यादिति भावः। 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः॥

अन्यत्र हे नाथ! भवान् भवच्छब्दः सर्वादौ सर्वादिगणे अस्मात् अविद्यमानः ङसिस्थानिकः स्मादित्यादेशो यस्य स तथोक्तः। अस्मिन् अविद्यमानः ङिस्थानिकः स्मिन्नित्यादेशो यस्य स तथोक्तश्च समुल्लसति। भवच्छब्दस्य सर्वनामगणपठितत्वेऽपि हलन्ततया अदन्तनिमित्तकौ 'ङसिङ्योः स्मात्स्मिनौ' इति विहितौ स्मात्स्मिन्नादेशौ न भवत इति भावः। इतः अस्मिन् सर्वनामगणे सार्वविभक्तिकस्तसिः। परः परशब्दः इतरः इतरशब्दः समः समशब्दः कः किंशब्दश्च। अनीदृशः भवच्छब्द इव स्मात्स्मिन्नादेशविधुरो न भवतीत्यर्थः। उक्तानामेतेषां सर्वनामगणपठितानां परादिशब्दानामजन्ततया स्मात्स्मिन्नादेशयोरवश्यंभावादिति भावः। अत्र प्रकृताप्रकृतश्लेषः वर्ण्यस्य भगवत उपमाऽनिष्पत्तिवचनरूपप्रदीपभेदश्चेत्यनयोरेकवाचकानुप्रवेशसंकरः॥

यथावा—

**त्वं सर्वनामवाच्यस्सर्वाद्यन्तस्थितो यदसि विश्वम्। त्वदधर इतरो योऽच्युत नेममिहत्यं ब्रुवे तथा कमपि ॥ २११० ॥**

हे अच्युत! त्वं सर्वनामवाच्यः सर्वैर्नामभिः ब्रह्मादिनामभिः वाच्यः असि। तत्र हेतुमाह—यत् यस्मात्कारणात् सर्वस्य जगतः आदावन्ते च स्थितः। अन्तस्थित इत्यत्र अन्ते-मध्येऽपि स्थित इति च योजनीयम्। अत एव विश्वं असि। सर्वजगच्छरीरकोऽसि। 'यतो वा इमानि भूतानि' इत्यादिश्रुत्युक्तप्रक्रियया जगज्जन्मस्थितिप्रलयनिदानतया सर्वशरीरकत्वाच्छरीरवाचिनां शब्दानां शरीरिपर्यन्ततया ब्रह्मादिसर्वशब्दवाच्योऽसीत्यर्थः। 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति' इत्युपक्रम्य 'नारायणात्समुत्पद्यन्ते नारायणे प्रवर्तन्ते नारायणे प्रलीयन्ते' इत्यन्ता 'ब्रह्मा नारायणः शिवश्च नारायणः' इत्युपक्रम्य 'नारायण एवेदं सर्वम्' इत्यन्ता च श्रुतिरर्थतोऽनुसंहिता एवं जगद्ब्रह्मणोः कार्यकारणत्वनिबन्धनसामानाधिकरण्यप्रतिपादिकाः 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यादयः श्रुतयोऽपीहानुसन्धेयाः। यः इतरः त्वदधरः त्वत्तोऽपि न्यूनः। इहत्यं इहेत्यव्ययात् 'अमेहक्कतसित्रेभ्य एव' इति नियमितः 'अव्ययात्त्यप्' इति त्यप्। त्वत्कार्यभूतेऽस्मिन् जगत्युत्पन्नं इमं पूर्वोक्तं कमपि ब्रह्माणमपि तथा न ब्रुवे त्वामिव सर्वकारणतया सर्वशरीरकतया च सर्वशब्दवाच्यं सन्तं न वच्मि। तस्य सर्वस्याप्यनेवंभूतत्वादिति भावः। पक्षे विश्वं विश्वशब्दः त्वत् त्वच्छब्दः अधरः अधरशब्दः इतरः इतरशब्दः यः यच्छ-

ब्दश्च सर्वनामवाच्यः सर्वनामसंज्ञकत्वेनोक्त इत्यर्थः। तत्र हेतुमाह—यत् यस्मात् सर्वादिगणस्यान्ते मध्ये स्थितः 'सर्वादीनि सर्वनामानि' इत्यनुशासनादिति भावः। इह अस्मिन् सर्वादिगणे नेमं नेमशब्दं त्यं त्यच्छब्दं च ब्रुवे पठामि। तथा कमपि किंशब्दमपि सर्वाद्यन्तस्थितं ब्रुवे इति योजना। किंशब्दस्य सर्वादिगणावसाने पठितत्वात्। समासोक्तिप्रतीपभेदयोरेकवाचकानुप्रवेशसंकरः॥

यथावा—

**आदौ सर्वं व्यदधात्तदनु च तद्ब्रह्म विश्वमवति समम्। अन्तस्स्वं परमवरं चादधदिदमन्यदन्ततः किं स्यात्॥ २११॥**

तद्ब्रह्म आदौ अग्रे सर्वं व्यदधात् अस्राक्षीत्। तदनु सर्जनातन्तरं समं मया श्रिया सहितं तद्ब्रह्म विश्वं अवति रक्षति॥

लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया।
रक्षकस्सर्वसिद्धान्ते वेदान्तेष्वपि गीयते॥

इत्युक्तेः। अन्ततः प्रळयावसरे परं ब्रह्मादिकमुत्कृष्टं अवरं तदितरमपकृष्टं च इदं विश्वं अन्तस्स्वं स्वस्मिन्नित्यर्थः आदधत् न्यस्यत् अन्यत् किं स्यात् सर्जनावनकर्तृ ब्रह्मव्यतिरिक्तं संहर्तृ वस्तु किमितरत्स्यात्। तस्यैव 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिभिर्जगज्जन्मस्थेमप्रळयहेतुताप्रतिपादनादिति भावः। अत्र "कस्योदरे हरविरञ्चिमुखः प्रपञ्चः को रक्षतीममजनिष्ट च कस्य नाभेः" इत्यादिकमपि स्मर्तव्यम्॥

पक्षे—तद्ब्रह्म आदौ सर्वादिगणस्यारम्भे सर्वं सर्वशब्दं व्यदधात् विधत्ते स्म। तदनु सर्वशब्दन्यासानन्तरमेव विश्वं विश्वशब्दं च अवति रक्षति न्यस्यतीति भावः। अन्तः विश्व-

किंशब्दयोरन्तराळे समं स्वं परं अवरं अन्यश्च समस्वपरावरान्यशब्दान् नात्र क्रमाविवक्षा। आदधत् न्यदधात्। दधातेः परस्मैपदिनो लङ्। अन्ततः गणावसाने किं किंशब्दः स्यात् तेन न्यस्तो भवेत्। सर्वादिगणे आदौ सर्वविश्वशब्दयोः अन्तराळे समपरावरान्यशब्दानामवसाने किंशब्दस्य च दर्शनादिति भावः। अत्र परब्रह्माणि प्रस्तुते अप्रस्तुतस्य शाब्दिकमुनेर्वृत्तान्तः प्रतीयत इति समासोक्तिः। श्रुत्युक्तस्य सृष्ट्यादेः शब्दनयसिद्धसर्वादिगणप्रक्रियायाश्च क्रमेण न्यसनाद्रत्नावळी च श्लेषसंकीर्णे एकवाचकानुप्रविष्टे इति द्रष्टव्यम्॥

यथावा—

भवदुभयान्यतरस्य स्वरूपमिह सर्वमुखगणे गणनीयम्। भविता श्रीसख न तथा जात्वपि चरमाल्पकतिपयान्यतमस्य॥ २१९२॥

हे श्रीसख! इदं च वक्ष्यमाणार्थोपस्कारकम्। भवदुभयान्यतरस्य श्रीश्च भवांश्च भवन्तौ 'त्यदादीनि सर्वैर्नित्यम्' इति भवच्छब्दैकशेषः। भवद्रूपं यदुभयं मिथुनं तदन्यतरस्य श्रियाः भवतश्चेति भावः। स्वरूपं सर्वकारणत्वसर्वशेषित्वादिरूपं इह लोके सर्वेषां जनानां मुखगणे वदनसमूहे गणनीयं सर्वैरपि सर्वत्र कण्ठरवेण प्रतिपाद्यमिति भावः। चरमे अर्वाक्तनाः अल्पे निहीना ये कतिपयाः चतुर्मुखादयोऽपीति भावः। तेष्वन्यतमस्य यस्यकस्यापीति भावः। स्वरूपं तथा सर्वमुखगणगणनीयं न भविता। सर्वेषामप्यतथात्वादिति भावः॥

पक्षे—भवांश्च उभयश्चान्यतरश्च एतेषां समाहारः तस्य भवदुभयान्यतरस्य। एतेषां शब्दानां स्वरूपं इह शब्दशास्त्रे

सर्वमुखगणे सर्वादिगणे गणनीयं, तेषां तत्र पठितत्वात्। चरमाल्पकतिपयान्यतमस्य चरमाल्पकतिपयान्यतमशब्दानां पूर्ववत्समाहारः। स्वरूपं तथा भवदादिशब्दवत्सर्वादिगणपठितं जात्वपि न भविता। तेषां तत्रापठिततया 'प्रथमचरम, इति सूत्रेण जस्येव तेषां पृथक्सर्वनामताविधानादिति भावः। अत्र प्रकृताप्रकृतश्लेषपरिसंख्यापरिकराङ्कुराणामेकवाचकानुप्रवेशः॥

यथावा—

**ननु सर्वनामताभाग्व्यवस्थितो दक्षिणस्सपूर्वश्च। देवोत्तरो यथाऽयं परोऽवरोऽप्यव्यवस्थितो न तथा॥ २११३ ॥**

पूर्वः सर्वजगत्कारणभूतः 'सदेव सोम्येदमग्र आसीत्। पूर्वमेवाहमिहासम्। कार्याणां कारणं पूर्वम्' इत्यादिप्रमाणात्। दक्षिणः 'तदैक्षत बहु स्याम्' इत्याद्युक्तप्रक्रियया स्वसंकल्पमात्रानुगुणजगत्सर्जनादिचातुर्यशाली। महोदार इत्यप्युपस्कार्यम्। व्यवस्थितः 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इत्याद्युक्तरीत्या सर्वजगत्यन्तः प्रविश्य नियन्ता। अन्तरङ्गैरपि दोषदर्शकैरक्षुभितचित्ततया स्थिरप्रतिज्ञ इत्यप्युपस्कार्यम्॥

द्यौः पतेत्पृथिवी शीर्येद्धिमवान् शकलीभवेत्।
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत्॥

इति तेनैवोक्तत्वात्। सोयं देवोत्तरः देवश्रेष्ठो भगवान् यथा सर्वनामताभाक् सर्वशब्दवाच्यो भवति। अव्यवस्थितः जगत्कारणत्वान्तःप्रविश्यनियन्तृत्वादिव्यवस्थाविधुर इत्यर्थः। चञ्चलचित्ततया प्रतिज्ञातार्थानिर्वहणाक्षम इत्यप्युपस्कार्यम्। अवरः भगवदपेक्षया न्यूनः परः अन्यः ब्रह्मरुद्रादिरपि न तथा ननु।

सर्वजगत्कारणत्वादिनिबन्धनां सर्वनामवाच्यतां न भजते खलिवाति भावः ॥

पक्षे—हे देव! सोऽयं बुद्धिस्थः दक्षिणः दक्षिणशब्दः पूर्वः पूर्वशब्दः उत्तरः उत्तरशब्दः परः परशब्दः अवरः अवरशब्दश्च व्यवस्थितः व्यवस्थां प्राप्तस्सन् व्यवस्था च 'स्वाभिधेयापेक्षावधिनियमः' इत्याहुः। यथा सर्वनामताभाक् सर्वनामसंज्ञां प्राप्तः अव्यवस्थितः व्यवस्थामप्राप्तः पूर्वोक्तः दक्षिणादिशब्दः न तथा सर्वनामसंज्ञाभाङ्न भवतीत्यर्थः। 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति व्यवस्थायामेव तेषां सर्वनामताभाक्त्वस्य व्यवस्थाहेतुकत्वादतथात्वस्याव्यवस्थितताहेतुकत्वाच्च काव्यलिङ्गद्वयं प्रकृताप्रकृतश्लेषेणैकवाचकानुप्रविष्टम् ॥

यथावा—

**स्वकरेण तवाङ्घ्रिरुचिं जिहीर्षुरभ्येत्य पुरत एव तया। निर्वासितोऽम्ब धूतो वासरकर एष धूसरकरोऽभूत् ॥ २११४ ॥**

हे अम्ब! एष वासरकरः भानुः स्वकरेण निजेन हस्तेन किरणेन च। तव अङ्घ्रिरुचिं चरणश्रियं न तु पाणिश्रियं जिहीर्षुः अभ्येत्य अभिमुखमागत्य अभ्यमित्रीणो भूत्वेति भावः। तया रुच्या श्रियेति भावः। पुरत एव स्वावासाद्गृहादेव नगरादेव वा 'अगारे नगरे पुरम्' इत्यमरः। निर्वासितः प्रसिद्धं हि महापराधिनां निष्कासनम्। अतएव धूतः पुनरपि कीदृशो दण्डस्स्याद्वेति कम्पितस्सन्। यद्वा पुरत एव देहादेव निर्वासितः संहृत इत्यर्थः। धूतः देहान्तरं प्राप्यापि प्राग्भववास-

नया कम्पित इत्यर्थः। 'पुरं नपुंसकं गेहे देहे' इति मेदिनी। धूसराः ईषत्पाण्डवः कराः यस्य स तथा अभूत् अतिमात्रमन्द्युतिरासीदिति भावः। श्वित्रिपाणिरभूदिति च गम्यते॥

पक्षे वासरकरशब्दः पुरत एव अग्रभाग एव वासितः वाकारेण संबद्धः स न भवतीति निर्वासितः। निश्चल इत्यादाविव निश्शब्दो नञ्समानार्थकः। अविद्यमानवाकार इत्यर्थः। धूतः वाकारस्थान एव धू इति वर्णेन ऊतः धूसरकर इति निरपद्यतेति वस्तुस्थितिः। अत्र पुरत इत्यादिश्लेषभित्तिकाभेदाध्यवसायोपजीवितं वासरकरस्य धूसरकरत्वरूपानिष्टावाप्तिलक्षणविषमम्। अप्रस्तुतवासरकरकर्तृकश्रीचरणरुचिचौर्यादिकार्येण तत्कारणीभूतायाश्श्रीचरणरुचेः कोऽप्यतिशयो द्योत्यत इति कार्यनिबन्धनाऽप्रस्तुतप्रशंसा च काव्यलिङ्गेन सह एकवाचकानुप्रविष्टे॥

यथावा—

**तावकगिर्यपवाहितमब्जेक्षण पापनाशनं बत तीर्थम्। द्रमिडा एव न केवलमभिदधते पावनाशनं सर्वेऽपि॥ २११५॥**

हे अब्जेक्षण! तावकगिरेः शेषाद्रेः अपवाहितं प्रवाहितं पावनाशनं तन्नामानं तीर्थं द्रमिडा एव द्रमिडदेशजा एव केवलं पावनाशनं तीर्थमिति नाभिदधते। अपितु सर्वे सर्वदेशजा अपि जनाः अभिदधते। बतेत्याश्चर्ये। द्रमिडानां अनादिपकारस्य वकारतयोच्चारणस्यागस्त्यव्याकरणशिक्षिततया पावनाशनमित्युक्तिर्युक्तैव। अन्यदेशजन्यानां तथोच्चारणमाश्चर्यावहमेवेति भावः। पवनाशनस्य गिरिरूपधरस्य शेषस्य संब-

न्धि पावनाशनमिति वा पवनाशनानां ऋषीणां संबन्धीति वा पावनं अशनं प्राशनं यस्येति वा विरोधः परिहार्यः। अतएव निरुक्त्यलंकारः। पक्षे नावकगिरि त्वदीयवाचि अपवाहितं अपं अविद्यमानपकारं वाहितं पकारस्थान एव वकारेण आहितं पापनाशनशब्दं पावनाशनमित्यभिदधते सर्वदेश्या अपीत्यर्थः। अत्र तुल्ययोगितानिरुक्त्योरेकवाचकानुप्रवेशः॥

यथावा—

त्वदनुगृहीतः पुरुषो निगृहीतश्च त्वया बत मुरारे। सहमहिषीकोऽधिवसत्यर्यमशुभ्रं सुभूरिपर्यङ्कम् ॥ २११६ ॥

हे मुरारे! त्वया अनुगृहीतः निगृहीतश्च पुमान् सहमहिषीकस्सन् आर्यमा भानुरिव शुभ्रं उद्दीप्र 'शुभ्रमुद्दीप्रशुक्लयोः' इत्यमरः। 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्रशुक्लयोः त्रिषु' इति मेदिनी च। सुभूरिपर्यङ्कं शोभनसुवर्णमञ्चं अधिवसति कृताभिषेकाभिर्देवीभिस्सह महीयांसं विभवमनुभवति महाराजो भवतीति भावः 'भूरिर्ना वासुदेव च हरे च परमेष्ठिनि। नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः' इति मेदिनी। त्वयाऽनुगृहीत ईदृशो भवतीति युक्तम्। निगृहीतोऽप्येवंविधो भवतीत्याश्चर्यं बतेत्यनेन सूच्यते। परिहारस्तु—महिषीभिस्सैरिभीभिस्सह वर्तत इति तथोक्तस्सन्। अर्यमशुभ्रं इत्यत्र अर्यं अशुभ्रमिति छेदः। अशुभ्रं कलुषं सुभूरि अतिमात्रस्फीतं अर्यं यवर्णविधुरं पर्यङ्कं पङ्कमित्यर्थः। अधिवसति महिषजन्म विन्दतीति भावः। अत्र तुल्ययोगितायाः श्लेषोज्जीवितायाः तथाविधसमविभावनालंकारयोश्चैकवाचकानुप्रवेशलक्षणस्संकरः॥

यथावा—

त्वत्पदनतेषु येषां गौरवमाभाति गरतयैव सदा। विन्दन्ते ते मन्दा मुकुन्द तद्रौरवं पदं नियतम् ॥ २११७ ॥

हे मुकुन्द! त्वत्पदनतेषु त्वच्चरणशरणकृत्सु विषये गौरवं बहुमतिः येषां जनानां गरतयैव विषत्वेनैव आभाति द्वेष्यं भवतीति यावत्। मन्दाः अभाग्याः ते जनाः रौरवं नरकविशेषरूपं तत् दुरन्तदुरितसन्ततिफलभूतदुःखसहस्रानुभावकं पदं स्थानं विन्दन्ते। भगवत्पदन्यस्तभरमहाभागवतावमन्तारो महान्तमेव निरयं प्रपद्यन्त इति निर्गळितोऽर्थः। अन्यत्र येषां जनानां गौरवमिति पदं गरतया गस्य गकारस्य रतया रेफवर्णत्वेन आभाति ते अमन्दा इति छेदः कुशला इत्यर्थः। ते जनाः तत्पदं गौरवपद रौरवमिति जानन्तीति यावत्। उक्तरीत्या गौरवशब्दस्य रौरवत्वावाप्तेरिति भावः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गं प्रकृताप्रकृतश्लेषः भागवतमाहिमगुणेन तदनादरजन्यदोषोदयलक्षण उल्लासालंकारश्चैकवाचकानुप्रविष्टानि ॥

यथावा—

भगवन् सदातन त्वां न तदासेति प्रतीपदृग्ब्रूताम् । संबोधयामहे तं पुरुषं त्वादृत्य तेन का हानिः ॥ २११८ ॥

हे भगवन् हे सदातन! पुराणपुरुषेत्यर्थः। प्रतीपदृक् शास्त्रसिद्धार्थप्रत्यनीकदर्शी जनः त्वां सदातनमिति भावः। न तदासेति तदा सृष्टेः प्राक्काले नास नासीत् इति ब्रूतां 'नासदा-

सीन्नो सदासीत्तदानीम्' इति श्रुतिशकलमात्रापातप्रतीयमानार्थ-परितुष्टतया सर्वज्ञंमन्योऽनृजुधीरेवं ब्रूताम्, तत्स्वभावस्थितिरेव तादृशीति भावः। आसेति तिङन्तप्रतिरूपकमव्ययम्। पक्षे सदा-तनेति वर्णानुपूर्वविपरीतं पश्यतो जनस्य नतदासेति भासत इति प्रतीपदृशस्तथोक्तिर्भवतुनामेत्यर्थः। तं एवं विरुद्धार्थद्रष्टारं विपरीतानुपूर्वीदर्शिनं च पुरुषं तु आहत्य संबोधयामेह मैवं वादीरिति सान्त्वयित्वा सम्यक्पश्येत्यावेदयामहे शास्त्रार्थम्॥

अज्ञानाय तु यो ज्ञानं दद्याद्धर्मोपदेशनम्।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम्॥

इत्यज्ञाय ज्ञानदानस्य महाफलत्वश्रवणादिति भावः। तेन तादृशप्रतीपवचनेन का हानिः? एवं बोधितोऽप्ययं प्रतीपवादितां न त्यजतिचेत्तद्वचनेन तव न काऽपि हानिर्भवेत् प्रत्युत तस्यैवेति भावः। यद्वा तं सदातनत्वेन प्रसिद्धं अत एव पुरुषं 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्' इति निर्वचन-गोचरं कालापरिच्छिन्नमित्यर्थः। इदमुपलक्षणं देशवस्तुपरिच्छेद-राहित्यस्यापि। त्वा आहत्येति छेदः। त्वा त्वां तेन नतदासेत्यनेन संबोधयामहे। नताः प्रणताः दासाः 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः' इत्याद्युक्तरीत्या दासभूताः ब्रह्मेशानादयः यस्येति विगृह्य संबुध्यन्तेन तेन पदेन आमन्त्रयामहे इति भावः। तेनेत्यावर्त्यते। तेन प्रतीपवचनेन का हानिः तव न काऽपि हानिः प्रत्युत सर्वेश्वरत्वमेवोक्तं स्यादिति भावः। अत्र प्रतीप-दर्शिकथितवचनस्यार्थान्तरपरिकल्पनलक्षणवक्रोक्त्यलंकारेण तादृशवचनरूपदोषेण हानिरूपदोषानुदयवर्णनात्मकोल्लासालंकार एकवाचकानुप्रविष्टतया संकीर्णः॥

यथावा—

विपरीतदृक्सनातन नतनासेत्याह चेद्ब्रवीतु त्वाम् । कस्सुदृगनवधिककृपोन्नसमाचष्टेऽच्युतावनाटं त्वाम् ॥ २११ ॥

हे सनातन पुराणपुरुष! विपरीतदृक् यथावस्थितविरुद्धग्राही पुमान् त्वां सामुद्रिकोक्तमहापुरुषलक्षणसर्वस्वशालिनमिति भावः। नता निम्ना नासा यस्य स नतनासः तस्य संबुद्धिः हे नतनास इत्याहचेत् ब्रवीतु कामं ब्रूतां कोऽस्य निरोद्धा न हि विपरीतदृशस्सुदृग्भिर्यथावदुक्तमप्यर्थमुपाददत इति भावः। पक्षे यवन इव प्रतिलोमवर्णदर्शी सनातनेति शब्दं नतनासेति ब्रूतामित्यर्थश्चमत्कारातिशयाय। सुदृक् सम्यग्द्रष्टा कः पुमान् हे निरवधिककृप हे अच्युत! उन्नसं 'शुचिस्मितं कोमलगण्डमुन्नसम्' इत्युक्तरीत्या उन्नतनासिकं त्वां अवनाटं नतनासिकं आचष्टे। न कश्चिदपि सुदृक्तथा ब्रूयादिति भावः। 'अवात्कुटारच्च' इति पूर्वसूत्रात् अनुवृत्तादवशब्दात् 'नते नासिकायास्संज्ञायां टीटच् नाटच् भ्रटचः' इति नाटच्प्रत्ययः। नासिकाया नतं अवनाटं तद्योगान्नासिका अवनाटा। पुरुषोऽवनाटः। 'अवटीटोऽवनाटश्चावभ्रटो नतनासिके' इत्यमरः। यद्वा नासयति न स्थापयतीति नासः आसर्णिजन्तात् पचाद्यच् नशब्देन समासः। नतानां नासः नतनासः प्रणतजननिश्शेषयितेत्यर्थः। तस्य संबुद्धिः हे नतनास! इति ब्रवीतु अनवधिककृपया उन्नः आर्द्रः तस्य संबुद्धिः हे अनवधिककृपोन्न! 'समुन्नमुत्तं च' इत्यमरः। हे अच्युत त्वां एवं परमकारुणिकमिति भाव। अवनाटयतीत्यवनाटः तथोक्तं 'नट अवस्कन्दने' चुरादिः। अवस्कन्दनं हिंसनं तस्मात् पचाद्यच्। समाचष्टे

वदति परमकरुणाकरं त्वां न कोऽपि सुहृत् हिंसकं ब्रवीतीति भावः। अत्र विपरीतहक्त्वस्य नतनासेत्युक्तिं प्रति सुहृत्त्वस्यावनात् इत्यनुक्तिं प्रति च हेतुत्वात्काव्यलिङ्गद्वयम्। विपरीतहग्गतदुरुक्तिदोषेण भगवतोऽवनात्स्वरूपदोषानुदयलक्षणावज्ञालंकारश्चैकवाचकानुप्रविष्टे॥

यथावा—

मायूरं शेखरितं नन्दकिशोर त्वयेति माद्यत्वात्। भूत्वा मुखे सकेकं केयूरीभूय भूषयति बाहुम्॥ २२००॥

हे नन्दकिशोर! मयूरस्यावयवो मायूरं 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्यवयवरूपार्थे वैकारिकोऽण्। मयूरपिच्छमित्यर्थः। इदं कर्तृ त्वया शेखरितं शेखरवत्कृतं अलंकृतमित्यर्थः। यद्वा शेखरः कृतं शेखरितं परां काष्ठामुत्कर्षस्य प्रापितमित्यर्थः। अवतंसतया धृतमिति तु तत्त्वम्। इति हेतोः माद्यत्वात् माद्यतो भाव माद्यत्वं तस्मात् माद्यतेश्शत्रन्ताद्भावे त्वप्रत्ययः। माद्यत्वं च निष्कृष्यमाणं मदसंबन्ध एव 'कृत्तद्धितसमासेषु संम्बन्धाभिधानं त्वतलौ' इति शाब्दिकोक्तेः। हर्षातिरेकप्रयुक्तमदादित्यर्थः। माः माकारः आद्यो यस्य तत् माद्यं तस्य भावः माद्यत्वं तस्मात् तकारस्य 'अनचि च' इति द्वित्वं। मायूरशब्दस्य तथात्वादिति भावः। ल्यब्लोपे पञ्चमी। माकाराद्यत्वं विहायेत्यर्थः। शब्दार्थयोस्तादात्म्यम्। मुखे वदने सकेकं केकया मयूरवाण्या सह सर्तत इति सकेकं स्वावयविभूतमयूरवत् स्वयमपि मदपारवश्यात्केकाकारवं (वितन्वादित्यातिशयोक्तिः। अन्यत्र

मुखे मावर्णविघटिते आदिभागे सकेकं केवर्णेन सहवर्तेत इति तथोक्तमित्यर्थः। 'शेषाद्विभाषा' इति कप्। भूत्वा केयूरीभूय अङ्गदं संपद्यमानं भूत्वा उक्तरीत्या केयूरपदं भूत्वेति चार्थः। बाहुं तव भुजं भूषयति। स्वशेखरीकरणप्रत्युपचिकीर्षया बहुमानयतीति भावः। अलंकरोतीति वस्तुस्थितिः। केयूरस्य मयूरपिञ्छतादात्म्यसंभावनया तस्य मरकतमणिमयत्वं द्योत्यते। अत्र भगवन्मयूरपिञ्छयोः परस्परोपकारवर्णनादन्योन्यालंकारः उत्प्रेक्षया एकवाचकानुप्रविष्टः॥

यथावा—

**मालूरं तव कुचयुगजिगीषु तेनान्तरेवं गमितलयम्। मायूरं भूत्वाऽथ त्वन्मौळिविलासि नन्दसुतललने ॥ २२०१ ॥**

मालूरं बिल्वफलं मालूरमिति पदं च। तव कुचयुगजिगीषु सत् अतएव तेन कुचयुगेन। अन्तरेव केनाप्यविज्ञातमेवेति भावः। गमितलयं प्रापितप्रलयं सत् अथ अनन्तरं मायूरं मयूरबर्हं भूत्वा। पक्षे अन्तः मध्यभाग एव गमितः उत्सारितः लः लकारो येन तादृशो यः यकारः यस्य तत्तथाभूतं मालूरपदं मध्यस्थलकारोत्सारणेन तत्रैव यकारेण संगमितं सत् मायूरमिति निष्पन्नमित्यर्थः। त्वन्मौळौ विलासि विलसनशीलं भवति। वैरनिर्यातनाय साक्षात्प्रतिपक्षभूतायास्तव शिरोऽधिरोहतीति भावः। नन्दसुतललने इति संबोधनं मायूरपिञ्छं तस्येव तवाऽपि शेखरीभवतीत्यभिप्रायगर्भम्। त्वन्मौळिः तव धम्मिल्ल इव विलासीति तु तत्त्वम्। 'मौळिः किरीटे धम्मिल्ले चूडायामनपुंसकम्' इति मेदिनी। बर्हत्वावस्थां प्राप्य त्वत्कब-

रीसाम्यमभजतेति भावः। अत्र विषमप्रत्यनीकपरिकराङ्कुराणा-मेकवाचकानुप्रवेशः॥

यथावा—

निर्भासिलता त्वत्तनुधुताऽथ तत्परिभवेच्छ-याऽवनितनये। स्याद्वाऽलङ्काविष्टा भ्रष्टा स्वार्था-द्भवेत्तु निर्भासिकता ॥ २२०२ ॥

हे अवनितनये जनकनन्दिनि! इदं च वक्ष्यमाणार्थानुगुण्याय। निर्भासिनी अतिशयेन भासनशीला च सा लता च निर्भा-सिलता। त्वत्तन्वा तावकमूर्त्या धुता तिरस्कृतेति यावत्। अथ तस्याः त्वत्तन्वाः परिभवेच्छया लङ्काविष्टा स्याद्वा त्वत्पराभ-वाय एकाक्ष्येककर्णादिवदियमपि लङ्कां प्रविशतु वा। ताव-ताऽपि निर्भाः विगतभाः सिकता वालुका सती स्वार्थात् स्वा-भीप्सितत्वत्तनुपराभवरूपात्प्रयोजनाद्भ्रष्टा भवेत्। अनवाप्तमनो-रथा प्राप्तानिष्टा च भवेदित्यर्थः॥

पक्षे निर्भासिलताशब्दः अलं अविद्यमानलकारं यथास्या-त्तथा काविष्टा तत्रैव प्रवेशितककारा सती निर्भासिकतेति नि ष्पन्ना स्वार्थात् स्वाभिधेयात् प्रकाशमानलतात्वरूपात् भ्रष्टा भवेत् निर्भासिलतेत्यानुपूर्व्या यादृशार्थः प्रत्याय्यते निर्भासिकते-त्यानुपूर्व्याः तादृशार्थप्रत्यायनायोगादिति भावः। अत्राप्रस्तुत-प्रशंसाविषमौ एकवाचकानुप्रविष्टौ॥

यथावा—

त्वत्पदनखरुचिमोषणकृतरुचिरपशादतया फ-णिगिरीन्दो। विशदमयूखोऽपि परं विमयूखो भवति नात्र संदेहः॥ २२०३ ॥

हे फणिगिरीन्दो! विशदमयूखः स्वच्छांशुरपि त्वत्पदनखरुचेः मोषणे चौर्ये कृतरुचिः प्ररूढाभिलाषः अतएव अपशादतया जाल्मतया 'निहीनोऽपशदो जाल्मः' इत्यमरः। परं विमयूखः विगळिततेजाः 'मयूखस्त्विट्करज्वालासु' इत्यमरः। भवति। पक्षे विशदमयूखशब्दः अपशदतया अपगतौ शदौ शकारदकारौ यस्य स तथोक्तः तस्य भावस्तत्ता तया विमयूख इति निष्पद्यत इत्यर्थः। अत्र विरोधाभासविषमातिशयोक्तीनामेकवाचकानुप्रविष्टता॥

यथावा—

भारतरसाऽखिलाऽच्युत भावत्कैः क्काप्यवस्थितैर्विमला। प्रतिलोमवर्णभागपि ऋक्षै रात्रीव सारतरभैव॥ २२०४॥

हे अच्युत! अखिलाऽपि भारतरसा भारतवर्षभूमिः प्रतिलोमवर्णं 'ब्राह्मण्यां क्षत्रियाज्जातः' इत्याद्युक्तविधं संकीर्णवर्णं भजतीति तथोक्ताऽपि तमःप्रचुरतया नीलवर्णभागपीति च। क्काप्यवस्थितैरपि 'क्कचित्क्कचिन्महाभाग' इत्युक्तरीत्या क्कचित्क्कचिदवस्थितैरपीत्यर्थः। भावत्कैः भवदीयैः ऋक्षैः नक्षत्रैः रात्रीव विमला निर्दोषा स्वच्छा च सती सारतरा श्रेष्ठतरा भा दीप्तिः यस्यास्सा तथोक्तैव भवति। पक्षे अखिला समग्रवर्णा भारतरसा भारतरसेति शब्दव्यक्तिः प्रतिलोमवर्णभागपि प्रतिकूलाक्षरा सती सारतरभेत्येव निष्पद्यत इत्यर्थः। अत्र प्रतिलोमवर्णभाक्त्वरूपप्रतिबन्धकसद्भावेऽपि सारतरभात्वरूपकार्योदयलक्षणविभावनाविशेषस्य उपमायाश्च एकवाचकानुप्रवेशः॥

यथावा—

सकलजगदधिपतिं त्वां वृषगिरिपतिरिति वदन्तु नाम जनाः। विष्णुस्स पर्वतानामधिपतिरिति कथमनादिवाग्ब्रूते ॥ २२०५ ॥

जनाः पामरा इत्यर्थः। 'जनो लोके महर्लोकात्परलोकेऽपि पामरे' इति विश्वः। अत्र निरङ्कुशनिखिलजगदैश्वर्यस्य भगवतश्श्रीनिवासस्य यत्किञ्चित्परिच्छिन्नशैलमात्राधीश्वरत्वं श्रुत्या प्रतिपादितमप्यनुपादेयमेवेति तत्प्रतिक्षेपाय 'विष्णुः पर्वतानामधिपतिः' इति श्रुतेरुपन्यासाच्छब्दप्रमाणालंकारः पूर्वोक्तरार्थप्रतिपाद्यसमविषमालंकाराभ्यामेकवाचकानुप्रविष्ट ॥

विपुलभवाम्भोनिधिशुक्तिरोहिताश्चोद्धृतास्ततः काले। मुक्तत्वाद्दिव्यगुणास्सन्मणयोऽच्युत भवन्ति तेऽग्रसराः ॥ २२०६ ॥

हे अच्युत! विपुलः यो भवाम्भोनिधिः संसारसागरः तस्य शुक् तत्सम्बन्धिनी शोकः इदमुपलक्षणमशनायापिपासाद्यूर्मीणाम्। तया तिरोहिताः आच्छादितस्वाभाविकस्वस्वरूपा इति यावत्। अन्यत्र विपुलं यथा तथा भवः विद्यमानः यः अम्भोनिधिः तस्य याः शुक्तयः मुक्तास्फोटाः तासु रोहिताः स्वातिवर्षजलबिन्दुभिः प्रादुर्भाविता इत्यर्थः। चशब्दो भिन्नक्रमः। ततः काल 'विधिपरिणतिभेदाद्वीक्षितस्तेन काले' इत्युक्तप्रक्रियया याद्दच्छिकादिसुकृतपरिपाकावसरे। अन्यत्र—

नद्यां तत्र स्वातिगेऽर्के शुक्तिस्था वर्षबिन्दवः।
षड्भिर्मासैर्घनीभूता जायन्त शुद्धमौक्तिकाः ॥

इत्युक्ते परिपाकसमये नद्यां ताम्रपर्ण्यां तत्र सागरसंगमप्रदेशे इति तदर्थः । उद्धृताः दयानिधिभिराचार्यैरुपायानुष्ठानादिना उज्जीविताः इतरत्र शिल्पिभिरुदञ्चिता इत्यर्थः । इदं कृतसुषिरत्वस्य.प्युपलक्षणम् । मुक्तत्वात् प्रकृतिबन्धवियुक्तत्वात् । पक्षे मौक्तिकत्वात् मुक्तायाः भावः मुक्तत्वं 'त्वे च' इति त्वप्रत्यये परे आपो ह्रस्वः । दिव्याः गुणाः येषां ते तथोक्ताः आविर्भूतापहतपाप्मत्वादिब्राह्मगुणाः रमणीयसुवर्णतन्तुप्रोताश्चेत्यर्थः । सन्मणयः ब्रह्मविच्छ्रेष्ठाः रमणीयरत्नानि च ते तव अग्रसराः पुरोवर्तिनः श्रेष्ठहाराश्च भवन्ति । अत्र प्रकृताप्रकृतयोर्विद्वद्रत्नयोश्श्लेषः । उक्तानां विपुलभवाम्भोनिधिशुक्तिरोहितत्वादीनामर्थानां क्रमिकत्वाद्रत्नावळी चैकवाक्यानुप्रविष्टे ॥

यथावा—

**रुचिमदतस्सौदामनि वल्गस्यभ्रे रमाप्रभाभिहता । पतिताऽधश्शीर्षे त्वं निमदासौ स्या यदा तदाऽवैषि ॥ २२०७ ॥**

सुदाम्ना अद्रिणा एकदिक् सौदामनी । तडित् 'तेनैकदिक्' इति प्राग्दीव्यतीये एकदिगित्यर्थे अण् 'अन्' इति प्रकृतिभावः । तस्यास्संबुद्धिः हे सौदामनि! शुचिमदतः ममैव द्युतिर्लोकोत्तरेति गर्वात् अभ्रे अन्तरिक्षे वल्गसीति लोकोक्तिः । जलधरे स्फुरसीति तत्त्वम् । रमाप्रभया अभिहता अतएव अधश्शीर्षे पतिता सती । असौ एवं वल्गन्ती त्वं निमदा निश्शब्दपूर्वकोऽयं बहुव्रीहिः निवात इत्यादिवत् । निर्गळितरुचिमदस्वगर्वेत्यर्थः । यदा स्याः तदा अवैषीति लोकोक्तिः । उद्बलगनफलं तदा जानासि किमिदानीं जानासीति भावः । पक्षे सौदामनीति

संबुद्ध्यन्तहशब्दः विलोमत्वे निमदासी इति निष्पद्यत इत्यर्थ-श्चमत्काराय। अत्र अप्रस्तुतसौदामनीगर्वशान्तिप्रशंसया तत्का-रणभूतरमाप्रभायास्ततोऽतिमात्रोज्ज्वलत्वं प्रतीयत इति कार्य-निबन्धना अप्रस्तुतप्रशंसा। रमाप्रभाभिहतेत्यस्याधश्शीर्षपतनं प्रति हेतुत्वात्काव्यलिङ्गं लोकोक्तिश्च एकवाचकानुप्रवेशेन सं-कीर्यन्ते ॥

यथावा—

देवि त्वदपाङ्गजितस्तं जेतुं यदि शिवत्वमेवे-यात्। तदपि न जेतुं प्रभवेच्छिलीमुखोऽपि तु व-लीमुखत्वमियात् ॥ २२०८ ॥

हे देवि! शिलीमुखः रोलम्बः कलम्बो वा 'अळिबाणौ-शिलीमुखौ' इत्यमरः। तव अपाङ्गेन लोचनाञ्चलेन त्वत्सुते-नानङ्गेनेत्यपि गम्यते। 'अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽ-पिच' इति। शिवत्वमेव त्रिलोचनत्वमेव इयात्प्राप्नुयाद्यदि तदपि तदाऽपि जेतुं न प्रभवेत्। अपितु वलीमुखत्वं कपित्वमेव इयात्। शिलीमुखशब्दः शिवत्वं शिवर्णस्य वकारत्वं शिव-र्णापनयनेन तत्रैव वर्णवत्त्वमेयाद्यादि वलीमुख इति निष्पद्ये-तेति वास्तवार्थः। शब्दार्थतादात्म्यवैभवं न प्रस्मर्तव्यम्। अत्र विषमाप्रस्तुतप्रशंसयोरेकवाचकानुप्रवेशः ॥

यथावा—

तावकगुणानुवादी तामरसदळाक्ष तदपवादी च। भवमयपारावारे भविता सुखगो महाप्लवश्चि-त्रम् ॥ २२०९ ॥

तदपवादी तावकगुणानां तदनुरागिणां वा निन्दकः भवमये संसाररूपे पारावारे सुखगः महाप्लवो भवितेति चित्रम्। त्वद्गुणानुवादी सुखगः गुणानुवादजनितानन्दशाली महाप्लवः भविता महोडुपवदुत्तारको भवितेत्यर्थः। तदपवादी तु भविता असुखग इति छेदः। भवमयपारावारे महान् आप्लवः आप्लवनं यस्य स तथोक्तः नित्यनिमग्न इत्यर्थ। अतएव असुखगः असुखप्राप्ता। यद्वा महान् प्लवः चण्डालः 'चण्डालप्लवमातङ्ग-दिवाकीर्तिजनङ्गमाः' इत्यमरः। भगवद्गुणानिन्दनं तव नेदं फलमलमितिः भावः। अतएव असुखगः उक्तोऽर्थः कृतयोर्गी महान् प्लवः मद्गुकारण्डवादिवत्कश्चित्प्लवनामा शोभनः खगः सुखगः स न भवतीत्यसुखगः अशोभनः पक्षी भविता। अत्र रूपक-काव्यलिङ्गतुल्ययोगितानामेकवाचकानुप्रवेशः॥

यथावा—

**अरविन्दं रविमन्तर्दधतां भवतात्ततस्तथानन्दम्।**
**तदपि भजत्सद्रवितां हरिनयनं स्यात्तवाम्ब न तु नयनम्॥ २२१०॥**

हे अम्ब! अरविन्दं पद्मं अन्तः मनसि रविं भानुं दधतां धत्ताम्। 'दध धारणे' इति भौवादिकाद्धातोर्लोट्। त्वन्नयनतावाप्त्यै उपास्तामिति भावः। ततः तस्मादुपासनात् तथानन्दं तथा आनन्दो यस्य तत्तथोक्तं। तल्लाभौपयिकहर्षपरिपूर्णं भवतात् भवतु। तदपि तथाऽपि सत् साधु प्रशस्तं वा यथातथा रवितां भानुता भजत् सेवमानं सत् यथाक्रतुनयेन रविमुपासीनस्य तद्भाव-भाविताया अवश्यंभावः। हरिनयनं एतावताऽपि प्रयासेन भगवन्न-

यनमेव भवेत् तस्य भानुनयनतया लोकवेदविदितत्वादिति भावः। न तु तव नयनम्। सौम्यसुन्दरमहोदारदयातरङ्गितं सकलतापमोचनं भवत्या लोचनं न स्यादिति भाव। पक्षे अरविन्दं अरविन्दमितिपदं अन्तः स्वाभ्यन्तरे रवि रेफयुक्तविवर्णं दधताम्। तस्य पदस्य मध्ये उक्तवर्णयोश्श्रवणात्। तथा तद्वत् अनन्दमिति छेदः। अश्च न्दश्च अन्दौ अविद्यमानौ अन्दौ यस्य तत्तथोक्तं अकारन्दकाराभ्यां रहितं भवतात्। तदपि सद्भविता सन्तौ विद्यमानौ रवीति वर्णौ यस्य तत्तथोक्तं तत्तां भजत् अन्यवर्णयोरपाये रवीतिवर्णयोरेवावशेषणादिति भावः। अत्र समविषमसंभावनादीनामेकवाचकानुप्रविष्टता द्रष्टव्या॥

यथावा—

**अपि हरिमणिमुखमणयस्त्वद्रुचिसाम्येप्सवस्तयाऽपास्ताः। अधरितशिरोऽपि तेष्विदमरं मरतकं हरे भवेत्कतमम्॥ २२११॥**

हे हरे! हरिमणिः इन्द्रनीलमणिरेव मुखं येषां ते मणयः महानीलाद्याः 'इन्द्रनीलमहानीलमणिप्रवरवेदिकम्' इत्यादौ नीलरत्नानां बहुविधत्वप्रसिद्धेः। ये मणयः पुल्लिङ्गेन पुमांसो बहुवचनेन बहव इति च गम्यते। त्वद्रुचिसाम्येप्सवः अत एव तया त्वद्रुच्या स्त्रिया एकयैवेति भावः। अपास्ताः उज्ज्वलश्यामलिमानस्त एव निरस्ता इति भावः। तेषु मध्ये इदं मरतकं इदमित्यनेन इन्द्रनीलाद्यपेक्षया मन्दतमनीलिमाति द्योत्यते। अरं अतिमात्रं अधरितशिरोऽपीति लोकोक्तिः कतमं भवेत्? इन्द्रनीलादिष्वपीदं कः पदार्थः तेष्वपि गणयितुमनर्हं क्लीबं च कथं नाम त्वद्रुचिसाम्यसौभाग्यमियादिति भावः। पक्षे मरतकं अधरशीर्षमपि अरं

रेफरहितं सत् कतममिति सिध्यतीत्यर्थान्तरं विच्छित्तिविशेषाय। विषमकाव्यार्थापत्त्यप्रस्तुतप्रशंसानामेकवाचकानुप्रवेशः ॥

यथावा—

**मरकतकमेत्वमरतामवाक्छिरोऽप्यस्तु तर्हि कतकं सत्। काजलमेव विमलयेदच्युत सन्मानसं न वपुरिव ते ॥ २२१२ ॥**

हे अच्युत! मरकतं गारुत्मतं अमरतां देवत्वमेव एतु त्वाद्दिव्यविग्रहसाम्येप्सया देवत्वमेव लभताम्। न केवलमेतावदेव, अवाक्छिरोऽप्यस्तु अधःकृतशीर्षमपि भवत्विति लोकोक्तिः। तर्हि तथाऽपि कतकं कतकफलमेव स्यात्। देवत्वेऽपि स्वाभीष्टानवाप्तेरधश्शीर्षं तप्त्वाऽपि कतकरूपमेव भवेदित्युत्कटानिष्टप्राप्तिरेवोक्ता। तदाऽपि कतकरूपेऽपि काजलं ईषज्जलमेव प्रसादयेत्। तव वपुरिव दिव्यविग्रह इव सन्मानसं सतां मन एव सन्मानसं अतिगभीरं मानससरः न विमलयेत् यथा मानसमतिगभीरमपि तव दिव्यमङ्गळविग्रहः प्रसादयेत् न तथा मरकतकमुपदर्शितरीत्या महता यत्नेनापि न प्रसादयेत्। किंतु अत्यल्पकुत्सितजलमेवेति निर्गळितोऽर्थः। अनेन मरकतकस्य सर्वात्मना भगवद्विग्रहसाम्यदवीयस्त्वमुक्तम्। वस्तुतस्तु मरकतकामिति पदं अमरत्वं मकाररेफराहित्यं प्राप्य कतकमित्यवशिष्टं बिपर्यासेऽपि कतकतयैवावास्थतमित्यर्थः। अत्र प्रतीपविषमव्यतिरेकाणामेकवाचकानुप्रवेशोऽनुसंधेयः ॥

यथावा—

**जनिसंततिः प्रयाता बह्वी मुग्धा गता मुधाभा-**

वम् । तव कृपयाऽच्युत मा भून्निजजनिरेषाऽपि वा प्रतीपगतिः ॥ २२१३ ॥

हे अच्युत! बह्वी जनिसंततिः जन्मपरंपरा ममेति शेषः। मुग्धा भगवन्मायया मोहं प्राप्ता अतएव मुधाभावं अनाराधितत्वच्चरणारविन्दतया व्यर्थत्वमिति भावः। प्रयाता प्राप्ता। एषा निजजनिरपि वा एतन्मम जन्म वा तव कृपया प्रतीपगतिः 'अनृतेन हि प्रत्यूढाः' इति श्रुत्युक्तरीत्या भगवन्मायया प्रातिकूल्यं प्रापिता मा भूत् अविदितपरावरतत्त्वयाथात्म्या अननुष्ठितत्वत्प्राप्त्युपाया मा विनङ्क्षीदिति भावः। अत्र—

वृथैव भवतो याता भूयसी जन्मसंततिः।
तस्यामन्यतमं जन्म संचिन्त्य शरणं व्रज ॥ इति,
संसारचक्रमारोप्य बलिभिः कर्मरज्जुभिः।
कालेनाकृष्यमाणस्य जङ्गमस्थावरात्मनः॥
अहो मे महती याता भूयसी जन्मसंततिः।
अनाराधितगोविन्दचरणाम्भोरुहद्वया ॥
अनास्वादितसत्कर्मज्ञानभक्तिसुधारसा।
अदृष्टानन्तसंसारसागरोत्तरणप्लवा ॥

इत्यादिना चोक्तोऽर्थोऽनुसन्धेयः।

पक्षे मुग्धेति शब्दव्यक्तिः अगतामुधाभावमिति समस्तं पदम्। अगतया अविद्यमानगकारतया गकारे अकार उच्चारणार्थः। ग् इति हलमात्रलोपेनेत्यर्थः। मुधाभावं मुधाशब्दत्वं प्रयातेति योजना। किंच निजजनिरिति शब्दव्यक्तिः प्रतीपगतिर्मा भूत् प्रातिलोम्येन पठिताऽपि पूर्वानुपूर्व्यैवावतिष्ठत इति

भावः। 'माङि लुङ्' इत्यस्य सर्वलकारापवादत्वाल्लुङर्थे लुङ्। अत्र शान्तरसस्य मुधैव जनिसंततिः प्रयातेत्यनेन सूचितो निर्वेदस्संचारी भावोऽङ्गमिति प्रेयोऽलंकारः। पूर्वार्धोदितायाः जनिसंततिवृथाभवनाचिन्ताया उत्तरार्धप्रतिपादितनिजजनिप्रतीपतानिषेधप्रार्थनं प्रति हेतुत्वात्काव्यलिङ्गं चैकवाचकानुप्रवेशेसंकीर्णे ॥

यथावा—

**आदौ व्याध्युषितमथो बहुलभ्रष्टं कुतोऽलमुपरि पतेत्। यदि विजिगीषु भुजं ते व्यालकुलं व्याकुलं भवेन्नूनम् ॥ २२१४ ॥**

हे हरे! आदौ प्रथममेव व्याधिः उषितो यस्मिन् व्याधिग्रस्तामित्यर्थः। अथो अनन्तरं बहुलं भ्रष्टं अधःपतितं शक्तिविरहादिति भावः। व्यालकुलं भुजङ्गयूथं कर्तृ न त्वेको व्याळः। ते तव भुजं विजिगीषु यदि कुतः कस्माद्धेतोः अलं समर्थं सत् उपरि पतेत् द्वंद्वयुद्धार्थमिति भावः। किंतु व्याकुलं भवेत् जेतुमक्षमत्वादिति भावः। अन्यत्र व्यालकुलं व्यालकुलमिति पदं आदौ व्या इत्याकारकवर्णः अध्युषितो यस्मिन् अथो अनन्तरं बहु यथातथा लभ्रष्टं भ्रष्टलवर्णमित्यर्थः। अथ कुतः कुवर्णात् उपरि अनन्तरं लं लकारं पतेत् गच्छेत् यदि पततिस्सकर्मकः। 'द्वितीया श्रितातीतपतित' इति समासविधानात्। 'नरकं पतितः, दिवं गच्छ सुवः पत, पत भूमिमवाक्छिराः' इत्यादिप्रयोगाच्च। व्याकुलं भवेत् व्यालकुलपदं भ्रष्टप्रथमलकारमात्रं व्याकुलमिति निष्पद्येतेत्यर्थः। अस्मिन् पक्षे तुशब्दोऽवधारणे। काव्यलिङ्गविषमयोरेकवाचकानुप्रविष्टत्वमत्र द्रष्टव्यम् ॥

यथावा—

**दरसंयोगं प्राप्तो जनस्त्वदीयो भवत्यमृतदोग्धा। युक्तमिदं त्वद्विमुखोऽपीदृग्भवतीति नाथ चित्रमिदम् ॥ २२१५ ॥**

हे नाथ! त्वदीयो जनः दरसंयोगं अल्पकालसंसर्गं प्राप्तोऽपि अमृतदोग्धा निश्श्रेयसमार्गोपदेष्टा भवति।

अहन्यहनि धर्मस्य योनिस्साधुसमागमः।
मोहजालस्य योनिर्हि मूढैरेव समागमः॥

इत्यादिकमिहानुसंधेयम्। इदं युक्तम्। त्वद्विमुखोऽपि ईदृक् दरसंयोगं प्राप्तोऽमृतदोग्धा भवतीति चित्रम्। दकारेरफरूपसंयोगं प्राप्तः अमृतदोग्धा अमृतद्रोग्धेति वस्तुस्थितिः। समतुल्ययोगितयोरेकवाचकानुप्रवेशः॥

यथावा—

**त्वं ननु भवसि वदान्यस्सुधातिशिशिरः पृदाकुशैलेन्दो। विपरीतलक्षणादिह वदान्यमन्यं तु दावमिव मन्ये ॥ २२१६ ॥**

हे पृदाकुशैलेन्दो! त्वं ननु त्वमेव 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। सुधेव अतिशिशिरः अतिवेलकृपाशीतल इत्यर्थः। इन्दुपक्षे सुधया अतिशिशिर इति। वदान्यः 'प्रियवाग्दानशीलश्च वदान्यः परिकीर्तितः' 'य आत्मदा बलदा' इति श्रुतात्मपर्यन्तसर्वस्वदाता त्वदन्यो महावदान्यः क इति भावः। यथाचोच्यते श्रीविष्णुधर्मे—

तस्मात्त्वमपि विप्रेन्द्र नारायणपरो भव ।
तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः ॥

इति । अन्यं त्वदितरं वदान्यं वदान्यंमन्यं त्विति भावः । विपरीतलक्षणात् सुधातिशिशिरत्वादिलक्षणविप्रतीपात्तापकरत्वादिलक्षणात् दावं वनहुताशनमिव मन्ये । दुरुपसर्पं दूरतस्त्याज्यं च जानामीति भावः । यद्वा अन्यं विपरीतलक्षणात् विरोधिलक्षणातः सा च जहत्स्वार्थलक्षणैव । यया स्वाभिधेयविपरीतार्थो लक्ष्यते । यथा 'उपकृतं बहुनाम' इत्यादौ वदान्यं अवदान्यमित्यर्थः । दावं मन्ये उक्त एवार्थः । पक्षे अन्यं न्यवर्णशून्यं वदान्यं वदान्यशब्दं विपरीतं विलोमं यथास्यात्तथा लक्षणात् वीक्षणात् दावं मन्ये दावशब्दं जाने । वदान्यशब्दो न्यवर्णविधुरो वदा इत्यवशिष्टः विलोमतया पठितो दाव इति निष्पद्यते । अस्मिन् पक्षे इवशब्दो वाक्यालंकारे । अत्र भगवत्तदितरयोर्वदान्यत्वे प्राप्ते भगवत्येव तन्नियमनात्परिसंख्या तयोरेवेन्दुत्वदावतुल्यत्वरूपवैलक्षण्यसद्भावाद्व्यतिरेकश्च उपमाभ्यामेकवाचकानुप्रविष्टौ ॥

यथावा—

सललिततमवलरिपुमणिफलकासु नरा विशालशालासु । कुरुविन्ददीपरुचिरास्वरविन्दाक्ष त्वदीक्षिता भान्ति ॥ २२१७ ॥

अत्र प्रतिपाद्यमानोऽर्थस्समृद्धिमद्वस्तुवर्णनात्मकतया उदात्तालंकाररूपः । असंबन्धे संबन्धकथनात्मकतया अतिशयोक्तिरूपश्च । न च सर्वत्र उदात्तस्यासंबन्धे संबन्धकथनरूपत्वं निर्णीत-

मिति न विविक्तालंकारद्वयसमावेशोऽस्तीति वाच्यम्, दिव्यलोकस्थितसंपत्समृद्धिवर्णनादिष्वतिशयोक्त्यसंस्पृष्टस्य उदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयकातिशयोक्तिवर्णनेषूदात्तासंसृष्टाया अतिशयोक्तेश्चान्योन्यविविक्तत्वेन विभ्रमात् । तयोश्चेहार्थवशप्राप्तसमावेशयोर्नाङ्गाङ्गिभावलक्षणस्संकरः, एकेनान्यस्यानुत्थितेः । स्वातन्त्र्यपारतन्त्र्यविशेषावगतेश्च । नापि समप्राधान्यं, यैश्शब्दैरिह समृद्धिमद्वस्तु प्रतिपाद्यते तैरेव तस्यैव वस्तुनोऽसंबन्धे सबन्धरूपस्य प्रतिपाद्यमानतया विभिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात् । नापि संदेहसंकरः, एकालंकारकोट्यां तदन्यालंकारकोटिप्रतिक्षेपाभावात् । तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणस्संकरः । एवमुक्तसमृद्धेर्भगवत्कटाक्षितताहेतुकत्वात्काव्यलिङ्गं चोक्तसंकरैकवाचकानुप्रविष्टमिति विच्छित्तिविशेषश्च ॥

अत्र समप्राधान्याभाववर्णनं च कुवलयानन्दकृतामनुरोधेन । रसिकरञ्जनीकारस्तु 'इदं चिन्त्यं । समप्राधान्यसंकरमभ्युपगच्छतो भिन्नशब्दव्यवस्थितार्थभेदस्समप्राधान्यप्रयोजकः । आग्नेयादावुत्पत्तिविधिभेदतत्त्वेऽपि 'सप्तदश प्राजापत्यान्पशूनालभते' इत्यादौ विधिभेदाभावेऽपि समप्राधान्यव्यवस्थितेः । तद्वदत्रापि प्रतिपादकशब्दभेदाभावेऽपि प्राधान्यसंभवात् । इतोऽपि न समप्राधान्यसंकरसंभवः, एकवाचकानुप्रवेशसंकरस्य निर्विषयतापत्तेः । तत्रानुप्रविष्टयोरलंकारयोरेकजातीयचमत्कारप्रयोजकतया समप्राधान्यस्यैवोपपत्तेः' इत्यभाणीदित्यलम् ॥

द्वितीयश्शब्दार्थयोरेकवाचकानुप्रवेशसंकरस्समप्राधान्यनिरूपणावसर एवोदाहृतः । तृतीयश्शब्दार्थयोरेकवाचकानुप्रवेशसंकरो यथा—

शब्दार्थयोरेकवाचकानुप्रवेशसंकरो यथा—

**ननु भजति प्रत्यय इह तान्तोऽपि जहाति नैव बत सत्त्वम् । त्वदभक्तिभृत्यसत्वं स्वयमेत्य ददाति तस्य तान्तत्वम् ॥ २२१८ ॥**

हे भगवन्! इह लोके भजति त्वां सेवमाने पुंसि प्रत्ययः ज्ञानं 'प्रत्ययोऽधीनविश्वासधीरन्ध्राचारहेतुषु । ख्यातौ सनादौ शपथे' इति रत्नमाला। तान्तोऽपि कदाचिदाध्यात्मिकादितापरूपकारणवशात् स्वयं ग्लानोऽपि सत्त्वं सत्त्वगुणं प्राशस्त्यं वा नैव जहाति। त्वद्भक्तस्य ज्ञानं ग्लानिदशायामपि सत्त्वगुणसमृद्धिं प्रशस्ततां वा न विसृजतीत्यर्थः। अत्र ज्ञानशब्देन —

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने।
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥

इत्युक्तं ब्रह्मविषयकपरोक्षापरोक्षरूपोभयविधज्ञानं विवक्षितम्। भगवद्भक्तज्ञानस्य व्यतिरेकमाह—त्वदिति। त्वदभक्तिभृति त्वयि भक्तिमबिभ्राणे जने तु प्रत्यय इतीहाप्यनुषज्यते। प्रत्ययो ज्ञानं स्वयं आत्मना असत्त्वं सत्त्वगुणाभावं अप्रशस्तत्वं वा एत्य प्राप्य तस्य अभक्तिभृतः तान्तत्वं ग्लानिं ददाति। त्वदभक्तनिष्ठं सामान्यशास्त्रादिज्ञानं त्वद्भक्तिविधुरतया स्वयं सत्त्वगुणानाधायकं अप्रशस्तं वा संपद्यमानं स्वाश्रयमेव निःश्रेयसरूपपरमपुरुषार्थालाभेन ग्लपयतीति भावः। अन्यत्र भजति त्वदभक्तिभृतीत्येतदुभयमपि शब्दपरम्। भजति भजतीत्याकारके शब्दे प्रत्ययः शतृप्रत्ययः तान्तः तकारान्तः भवति। अपिशब्दो भिन्नक्रमस्समु-

श्रये। सत्त्वं सत्संज्ञावत्त्वमपि नैव विजहाति। 'तौ सत्' इति शतृशानचोस्सत्संज्ञाविधानादिति भावः। त्वद्भक्तिभृति त्वद्भक्तिभृच्छब्दे प्रत्यय इत्यस्यात्राप्यनुषङ्गः। प्रत्ययः क्विप्प्रत्ययः स्वयं असत्त्वं सत्संज्ञाभावं शतुरिव क्विपस्सत्संज्ञाया अविधानादिति भावः। यद्वा असत्त्वं अविद्यमानत्वं एत्य क्विपस्सर्वस्यापि 'लशक्वतद्धिते। उपदेशेऽजनुनासिक इत्। हलन्त्यम्' इति ककारेकारपकाराणामित्संज्ञायां 'तस्य लोपः' इत्यनेन वकारस्य 'वेरपृक्तस्य' इत्यनेन च लोपविधानादिति भावः। तस्य त्वद्भक्तिभृच्छब्दस्य तान्तत्वं तकारान्तत्वं ददाति। क्विपः पित्कृत्वात्। 'ह्रस्वस्य पिति कृति तुक्' इति भृ इत्यस्य तुगागमे तकारान्तत्वं भवतीति भावः। क्विन्निमित्तकत्वात्तुगागमस्य तान्ततायास्तद्दत्तत्वोक्तिः। अत्र प्रकृताप्रकृतयोर्ज्ञानप्रत्यययोश्श्लेषः। प्रकृतार्थकक्ष्यायां ज्ञानस्य ग्लानतारूपकारणसत्त्वेऽपि सत्त्वपरित्यागरूपकार्यानुदयस्य वर्णनाद्विशेषोक्तिः पूर्वार्धे। उत्तरार्धे तु सामान्यज्ञानस्य भगवद्भक्तत्यभरणरूपकारणानुगुणासत्त्वप्राप्त्यादिकार्यवर्णनात्समालंकारः॥

महावाक्यार्थस्तु—भगवद्भक्ताभक्तगतप्रत्यययोर्वैलक्षण्यवर्णनात्मकव्यतिरेकरूपः। अप्रकृतार्थकक्ष्यायां तु शतृप्रत्ययस्य तान्तत्वसत्त्वप्राप्त्योः क्विप्प्रत्ययस्यासत्त्वप्राप्तितान्ततांप्रदानयोश्चानुरूपयोर्वर्णनात्समालंकारद्वयं चेत्येतेऽर्थालंकाराः तकारपौनरुक्त्यलक्षणवृत्त्यनुप्रासश्चेत्येतेषामेकस्मिन्नेव वाचकेऽनुप्रवेश इत्येकवाचकवाचकानुप्रवेशसंकरः॥

न च शब्दालंकारस्य पदावाच्यतया एकस्मिन् वाचके वाच्यतयाऽनुप्रवेशाभावात्कथं तस्यैकवाचकानुप्रवेश इति वाच्यं,

एकवाचकाश्रितत्वमात्रस्यैव तत्रैकवाचकानुप्रवेशशब्दार्थत्वात् । न चैवमर्थालंकारस्य वाचकवृत्तिताविरहात्कथमेकवाचकानुप्रवेशविषयतेति वाच्यम् , तस्यापि वाच्यतासंबन्धेन तदुपपत्तेरित्याहुः ॥

यथावा—

**भवति खलु सत्पदविदामिह सद्गतिरादरे क्रियायोगे। अथ सत्क्रिया समस्ताऽप्यसद्गतिरनादरे क्रियायोगे ॥ २२१९ ॥**

सत्पदविदां सदिति यत्पदं वस्तु ब्रह्मरूपं वस्त्वित्यर्थः। 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इत्युक्तेः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। यद्वा ब्रह्मस्वरूपमित्यर्थः। 'तद्विष्णोः परमं पदम्' इत्यत्र 'पद्यत इति पदं स्वरूपम्' इति व्याख्यानात्। तत् विदन्तीति तथोक्ताः। तेषां कर्तरि षष्ठी। परब्रह्मोपासकानामित्यर्थः। वेदनोपासनध्यानादिशब्दानामैकार्थ्यस्य 'आवृत्तिरसकृदुपदेशात्' इत्यादौ भाष्ये स्थापितत्वात् क्रियायोगे कर्मयोगे अनभिसंहितफलकर्मानुष्ठाने आदरे सति सद्गतिः शरीरावसाने अर्चिरादिमार्गगमनं भवति खलु। खलुश्शास्त्रीयप्रसिद्धौ ॥

विद्यां चाविद्यां च यस्तद्वेदोभयग्ं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥
'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'।
इयाज सोऽपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥

'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमेवाभिसंपद्यन्ते' इत्यादिप्रमाणानुरोधेन ब्रह्मविदामपि विद्यासहकारित्वेना-

श्रमानुगुणकर्मानुष्ठानादरस्यावश्यंभावात्तस्य सद्गतिसाधनत्वा-द्विति भावः। अथ अर्चिरादिमार्गप्राप्त्यव्यवहितमेव समस्ता सर्वाऽपि सत्क्रिया अर्चिराद्यातिवाहिकक्रियमाणस्संमानः भवती-त्यनुषज्यते। वैपरीत्येऽनिष्टमाह—असद्गतिरित्यादिना। क्रिया-योगे उक्तविधकर्मानुष्ठाने अनादरे सति असद्गतिर्भवति। ब्रह्म-विदामप्याश्रमकर्मलोपे दूषितान्तःकरणतया विद्योत्पत्तेरेवासंभ-वादसद्गतिर्भवतीति भावः। यद्वा सतः परब्रह्मणश्श्रीनिवासस्य पदे चरणौ विन्दन्ति प्राप्नुवन्तीति तथोक्तानां विन्दतेः क्विप्। प्रप-न्नानामित्यर्थः। संबन्धसामान्ये षष्ठी। क्रियायोगे कैंकर्यलाभे आदरे सति सद्गतिः जनानामिति शेषः। अनादरे असद्गति-रेव भवति। भगवत्प्रपन्नजनविषयककैंकर्यादरतदभावाभ्यां भग-वदनुग्रहलाभतदभावौ भवत इति भावः। अत्र—

सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्।
न संशयोऽस्ति तद्भक्तपरिचर्यारतात्मनाम्॥
अनादृतसुतं गेही पुरुषं नाभिनन्दति।
तथाऽनार्चिततद्भक्तं भगवान्नाभिनन्दति॥

इत्यादिकमनुसन्धेयम्॥

अन्यत्र—सत् प्रशस्तं यत् पदं शब्दशास्त्रं तद्विदां व्या-करणवेत्तृणामित्यर्थः। आदरे आदररूपार्थे विवक्षिते क्रियायोगे क्रियाशब्दसंबन्धे सत् गतिः इति छेदः। सत् सदित्याकारक-मव्ययं गतिः गतिसंज्ञकं भवतीत्यर्थः। अथ समस्ता सदि-त्यनेन समासं प्राप्ता। क्रियेति विशेष्यकटाक्षेण स्त्रीत्वम्। क्रिया सत्क्रिया भवति सत्क्रियेति निष्पद्यते। अनादरे अनादररूपार्थे विवक्षिते क्रियाशब्दयोगे। असत् गतिरिति छेदः। असत् अस-

दित्याकारकमव्ययं गतिः गतिसंज्ञकं भवति। अथ समस्ता असत्क्रिया भवतीत्यप्युपस्कार्यं। 'गतिश्च' इत्यनुवर्तमाने 'आदरानादरयोस्सदसती' इत्यादरानादररूपार्थयोर्विवक्षितयोस्सदसतोरव्यययोर्गतिसंज्ञायां 'कुगतिप्रादयः' इति गते स्समासविधानादिति भावः। अत्र प्रकृताप्रकृतश्लेषः। प्रकृतार्थकक्ष्यायां पूर्वोत्तरार्धगतं समालंकारद्वयं चेत्यर्थालंकारयोर्यमकस्य शब्दालंकारस्य चैकवाचकानुप्रवेशः॥

यथावा—

**यो वर्धिष्णुस्सोऽयं श्रयते वृषशैलमाप्तशैत्यागम्। योऽवर्धिष्णुस्सोऽयं श्रयते वृषशैलमाप्तशैत्यागम्॥ २२२०॥**

यः वर्धिष्णुः सोऽयं आप्तं शैत्यं यैस्ते अगाः वृक्षाः यस्मिंस्तं वृषशैलं श्रयते। द्वितीयार्धे यः अवर्धिष्णुःसोऽयं प्राप्तः शैत्यागः शै इत्याकारकवर्णस्य त्यागो येन सः वृषशैलं वृषलमित्यर्थः। 'वृषलाश्च जघन्यजाः' इत्यमरः। अत्र समस्यार्थालंकारस्य अर्थावृत्तिरूपयमकलक्षणशब्दालंकारस्य चैकवाचकानुप्रविष्टता॥

यथावा—

**यो भक्तस्तव मध्ये नाकस्थितिमान् सतां स मौळिर्भायात्। योऽभक्तस्तव मध्ये ना कस्थितिमान् सतां स मौळिर्भायात्॥ २२२१॥**

हे भगवन्! यः तव भक्तः मध्ये नाकस्य मध्येनाकं स्थितिमान् त्रिदिवे वसन्नित्यर्थः। सतां तत्र विद्यमानानां देवर्षिप्रभृतीनां मौळिः किरीट इव भायात्। इन्द्रत्वेन प्रकाशेतेत्यर्थः। यः

तव अभक्तः सोऽपि तद्वदेव भायादित्याश्चर्यम्। परिहारस्तु—मध्ये ना कस्थितिमान् इति छेदः। सः ना पुमान् 'पुरुषाः पूरुषा नरः' इत्यमरः। मध्ये अन्तराळे कस्थितिमान् कवर्णस्थितिमान् मौळिः मौकळिरित्यर्थः। शब्दार्थयोस्तादात्म्यम्। काक इव सतां भायात्। भगवद्भक्तो ब्रह्मविदां काकतुल्यतया दूरतस्त्याज्यो भवेदिति भावः। यद्वा सः तव भक्तः मध्येनाकं आकाशमध्ये 'आकाशे त्रिदिवे नाकः' इत्यमरः। परमे व्योम्नि वा। स्थितिमान् 'दिवि नक्षत्रभूतस्त्वम्' इत्युक्तरीत्या त्वत्कृपया प्राप्तज्योतिर्मयशरीर इति भावः। सतां नक्षत्राणां मुक्तानां वा मौळिर्भायात् तेषां मध्ये देदीप्यमानो भवेदितिभावः। त्वद्भक्तस्तु मौकळिः काक इव निस्तेजस्कः प्राकृतेष्वपि निहीनतयाऽवस्थितः भायात् प्रतिभायादित्यर्थः। 'मौकळिः पिकवर्धनः' इति काकपर्यायेष्वमरः। "मूकलो यमः तस्यापत्यं मौकळिः 'मूकलः प्रेतभर्ता स्यान्मूकलः काननेचरः' इति शब्दार्णवे" इति टीकासर्वस्वकारादयः। अत्र भगवद्भक्तत्वतदभक्तत्वयोर्विशेषणगत्या मौळित्वमौकळित्वे प्रति हेतुत्वात्काव्यलिङ्गद्वयं रूपकसंकीर्णं अर्थावृत्तिरूपकयमकेन सहैकवाचकानुप्रविष्टम्॥

यथावा—

**असकौ पीनो भूत्योपचितः पीताम्बरं श्रितो यस्स्यात्। असकौपीनो भूत्योपचितो हरिदम्बरं श्रितोऽपि स्यात्॥ २२२२॥**

यः पीताम्बरं श्रीनिवासं अनेन सर्वसंपत्समृद्धिः सूचिता। श्रितः स्यात् असकौ असौ जनः। अदश्शब्दस्य 'अव्ययसर्वा-

नाम्नामकच् प्राकृटेः' इत्यकाचि 'अदस औ सुलोपश्च' इत्यदस औकारोऽन्तादेशस्सौपरे सुलोपश्च। तदोस्सस्सौ' इति दस्य सः। भूत्या वस्त्राभरणान्नपानादिसंपदा उपचितः समृद्धः अतएव पीनः पुष्टाङ्गः स्यादित्येतदत्रापि संबध्यते। हरिदम्बरं हरितवर्णवसनं दिगम्बरं शिवमिति वास्तवार्थः। 'हरित् क्लीबं तृणे नाश्वे वर्णे त्रिषु दिशि स्त्रियाम्' इति रत्नमाला। श्रितोऽपि जनः भूत्या उपचितः पीनस्स्यादित्याश्चर्यम्। वस्तुतस्तु भूत्या भस्मना उपचितः दिग्धः कौपीनेन सह वर्तेत इति सकौपीनः स न भवतीत्यसकौपीनः स्यात्। यथाक्रतुनयेन दिगम्बरमुपासीनो दिगम्बर एव स्यात् तत्सारूप्यं भजेदिति भावः। 'भूतिर्मातङ्गशृङ्गारे जन्मसंपत्तिभस्मसु। दिग्धवृद्धावुपचितौ' इति च रत्नमाला। 'भूतिर्भस्मनि संपत्तौ, भवेदुपचितं दिग्धे समृद्धे वाच्यलिङ्गकः' इति मेदिनी च। अत्र शब्दार्थालंकारयोर्यमकसमालंकारयोरेकवाचकानुप्रवेशः॥

यथावा—

**प्राकृतदैवतभजनान्मन्ये प्राप्स्यस्यरे नरेश्वरताम्। मुग्ध तथैव यतेथा मन्ये प्राप्स्यस्यरेनरेश्वरताम्॥ २२२३॥**

इदं सकलफलप्रदं भगवन्तं श्रीनिवासमुपेक्ष्य प्राकृतदैवतोपासनेनाधिराज्यं प्रेप्सुं कंचिन्मुग्धं प्रति कस्यचित्प्रौढमतेः परिहासवचनम्। अरे मुग्ध! त्वं प्राकृतदेवतानां भगवद्व्यतिरिक्तदेवतानां भजनात् उपासनात् नरेश्वरतां सार्वभौमतां प्राप्स्यसि मन्ये प्राप्स्यामीति मन्यस इत्यर्थः। 'एहि मन्ये ओदनं भोक्ष्यसे' इत्यादाविव परिहासद्योतनायायं पुरुषव्यत्ययः। तथाच सूत्रम्—'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति। "मन्यधा-

तुरुपपदं यस्य तस्मिन् धातौ प्रकृतिभूते मध्यमस्स्यात्। मन्यतेस्तूत्तमस्स्यात्स चैकार्थवाचकस्स्यात्" इति तदर्थः। तथैव यतेथाः। अरे मुग्ध! पुनस्संबोधनं परिहासातिशयं द्योतयति। नरेश्वरतां प्राप्स्यसि लप्स्यसे इति मन्ये अहं जानामीत्यर्थः। हार्दोऽभिप्रायस्तु—अरेनरेश्वरतामिति समस्तं पदम्। अरेः रेवर्णविधुरा या नरेश्वरता नश्वरतेत्यर्थः। तां प्राप्स्यसि भगवत्यौदासीन्येन दुर्दैवता यदि भजेथाः तर्हि क नरेश्वरता लभ्येत। किंतु नश्वरतैवेति भावः। अत्र अरेनरेश्वरतामिति श्लेषः समालंकारविशेषस्याङ्गं, अयं च संकरः यमकेनैकवाचकानुप्रविष्टः॥

यथावा—

**ग्रस्तो जरादिभिस्त्वां विमायमेनं नमेयमाविर्भक्तिः। पुनरपि तव धाम्नि परे विराजमानं न मा जरा विशतु हरे॥ २२२४॥**

हे हरे! जरादिभिः आदिशब्देन गर्भजन्मादिकं गृह्यते। ग्रस्तः अहं विभ्रंशिता माया येन सः विमायः तं निश्शेषप्रकृतिबन्धविनिवर्तकमित्यर्थः। मायाशब्दः प्रकृतिवाची। 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः। एनं त्वां आविर्भक्तिः प्रादुर्भूतभक्तिस्सन् नमेयं शरणं व्रजेयम्। एवमुपायं प्रार्थ्य फलं प्रार्थ्यते। परे तव धाम्नि विराजमानं अकर्मवश्यतया प्रकाशमानं 'स स्वराड्भवति' इति श्रुतिरिहानुसंहिता। मा मां जरा जरोपलक्षितगर्भजन्मादिकं पुनरपि न विशतु। त्वय्यात्मनिक्षेपाबाधिकमेव हि प्रकृतिबन्धमूलकं गर्भजन्मजरामरणादिपरिवर्तनमिति भावः। अत्र पूर्वार्धवाक्यार्थहेतुकः उत्तरार्धवाक्यार्थ इति काव्य-

लिङ्गं द्वितीयतुरीयपादगतवर्णपञ्चकानुलोमप्रतिलोमाचित्ररूपश-
ब्दालंकारैकवाचकानुप्रविष्टमिति ध्येयम् ॥

यथावा—

श्रीस्पृहयालु दयालु ग्रहयालु जनस्य चरण-
पतयाळोः । श्रद्धालुरतन्द्राळुर्भद्रानिद्रालु तद्भजे
ब्रह्म ॥ २२२५ ॥

श्रद्धालुः अतन्द्रालुः अहं भद्रानिद्रालु जगन्मङ्गळविधानजाग-
रूकमित्यर्थः । अत्र श्रीस्पृहयालुत्वस्य दयालुत्वं प्रति तस्य च
चरणपतयालुग्रहयालुतां प्रति च हेतुत्वात्काव्यलिङ्गं मालारूपं
तच्च भजनं प्रति हेतुरिति काव्यलिङ्गान्तरं च वृत्त्यनुप्रासेन
सहैकवाचकानुप्रविष्टम् । 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य
आलुच्' इति सूत्रोदाहरणानि सर्वाण्यप्युपेक्षितक्रमाणि रत्ना-
वळीविशेषरीत्या निबद्धानीति विच्छित्तिविशेषोऽनुसंधेयः ॥

यथावा—

फणिगिरिमणिरमणि भवत्फणितिप्रणयो व्य-
तानि यदनेन । फाणितमभाणि तदयं खण्ड-
विकारो न कारणान्तरतः ॥ २२२६ ॥

हे फणिगिरिमणिरमणि! यत् यस्मात् अनेन खण्डविकारेण
भवत्याः फणितौ वाचि प्रणयः विश्वासः सख्यमिति यावत् ।
व्यतानि व्यरचि । तत् तस्मात् अयं खण्डविकारः खण्डशर्करा-
विशेषः फाणितशब्देन व्यवाह्रियत । न तु कारणान्तरतः । फणित्या
इदं फाणितं फणितिप्रणयवत्त्वात्तत्संबन्धीत्यगद्यतेत्यर्थः । फणिति-
शब्दात् 'तस्येदम्' इत्यणि 'यस्येति च' इतीकारलोपे आदि-

वृद्धौ फाणितमिति रूपं फाण्यते द्रवीभावं प्राप्यते इत्यादि-व्युत्पत्तिभिस्तु फाणितमिति नाभाणीत्यर्थः। अत्र फणिगिरि-मणीति रूपकातिशयोक्तिः फाणितमित्यभाणीति निरुक्तिः न कार-णान्तरत इत्यपह्नवश्चाप्रस्तुतप्रशंसया संकीर्णाः वृत्त्यनुप्रासेन सहैकवाचकानुप्रविष्टाः॥

उक्तानां पञ्चानामपि नरसिंहाकाराणामलंकाराणां क्वचिदेक-पद्ये मेळने चारुतातिशयः। यथा—

स्वाभा तरूपलालया सुरुचिरकुरुविन्दबृन्दपटु-कटका। हरिमणिना फणिनायकगिरिधरणी लसति कलिततिलका नु॥ २२२७॥

तरूपलालया तरूणामुपलानां च आलया पङ्क्त्या स्वाभा शोभनप्रकाशा। अन्यत्र स्वाभातरूपलालयेति समस्तं प्रथमैक-वचनान्तं पदम्। सुष्ठु आभातं प्रकाशमानं यद्रूपं—

आरोप्यावेध्यविक्षेप्यपरिहार्यैरभूषितम्।

यद्भूषितमिवाभाति तद्रूपमिति कथ्यते॥

इति लक्षितश्शोभाविशेषः। तेन लालया लालनीया। सुरु-चिराणि कुरुविन्दानां मुस्तानां पद्मरागाणां च बृन्दानि यस्मि-स्तत्तथोक्तं पटु अजर्झरं कटकं सानुभागो वलयश्च यस्यास्सा। 'कुरुविन्दाः पद्मरागहिंगुलादर्शमुस्तकाः' इति रत्नमाला। 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः। फणिनायकगिरे-धरणी हरिरेव हरिमणिः इन्द्रनीलः हरिरेव मणिरिति वा। तेन कलिततिलका नु रचिततिलकेव विलसति—

प्रत्युक्तावुपमाने च विषादोत्प्रेक्षयोरपि।

नु पादपूरणे क्षयो जिज्ञासायां समुच्चये॥

इति शेषः । अत्र स्वाभातरूपलाल्येत्यादिश्लेषस्य तन्मूलकातिशयोक्तेश्चाङ्गाङ्गिभावसंकरः । तया चोन्नह्यमाना हरिमणितिलकितत्वोत्प्रेक्षा फणिनायकगिरिधरण्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोन्नह्यत इत्युत्प्रेक्षासमासोक्त्योरुक्तश्लेषमूलकातिशयोक्त्युत्तम्भितत्वतौल्यात्परस्परापेक्षसौन्दर्यातिशयत्वैककालिकत्वयोरपि सद्भावात्समप्राधान्यम् । एतावत्येव कविसंरम्भे अयं संकरः । कलिततिलका नु इत्युपमायां चेत्संरम्भः तदा फणिनायकगिरिधरण्याः नायिकौपम्यस्य गम्यमानतया एकदेशविवर्त्युपमालंकारः । स श्लेषमूलातिशयोक्त्या अङ्गेन संकीर्यमाण इत्यनयोस्संदेहसंकरः । हरिमणिनेत्यत्र हारिरेव हरिमणिः हारिर्मणिरिवेत्युभयथाऽपि समाससंभवाद्रूपकोपमयोरन्योऽपि संदेहसंकरः । सुरुचिरकुरुविन्दबृन्दपटुकटकेत्यत्र श्लेषमूलातिशयोक्तेरनुप्रासस्य चैकवाचकानुप्रवेशसंकरः । एवं कलिततिलकेत्यत्र उत्प्रेक्षानुप्रासयोश्च हरिमणिनेति संदेहसंकरस्य पूर्वोत्तरार्धगतानुप्रासयोश्च संसृष्टिरिति पञ्चाप्यलंकारा अत्र मिळिता इति सुधीभिर्विभावनीयम् । अयं च पञ्चानामलंकाराणामेकत्र मेळनप्रकारः लक्ष्मीसहस्ररत्नप्रकाशिकाहंससंदेशरसास्वादिन्योश्च केषुचित्पद्येष्वस्माभिः प्रकाशितः ॥

क्वचित्संकराणामपि संकराद्विच्छित्तिविशेषः । यथा—

**अजिराचितहरिमणिघृणिमसृणान्वज्रांश्च्युतान्गृहे धनिनाम् । उञ्छन्ति जाम्बवधिया यद्बालास्सा रमाकटाक्षश्रीः ॥ २२२८ ॥**

धनिनां श्रीमतां गृहे जात्यभिप्रायकमेकवचनम् । च्युतान् अनादरान्द्गळितान् अजिरेषु अङ्गणेषु आचिताः भूमीसमतलतया

आतताः ये हरिमणयः फलकाकारा इति भावः। तेषां घृणिभिः किरणैः मसृणान् स्निग्धान् श्यामलानिति यावत्। वज्रान् हीरमणीन् बालाः क्रीडन्तो माणवकाः जम्ब्वा विकाराः जाम्बवानि जम्बूफलानीति धिया भ्रान्त्या 'जम्ब्वा वा' इति वैकारिकोऽण्। 'फले जम्ब्वा जम्बू स्त्री जम्बु जाम्बवम्' इत्यमरः। उञ्छन्ति एकैकश आददते इति यत् सा विधेयकटाक्षश्रीशब्दकटाक्षेण स्त्रीलिङ्गता। रमायाः श्रीनिवासदिव्यमाहिष्याः कटाक्षश्रीः कटाक्षलक्ष्मीरेव। अत्र तावत् श्रीमतां संपत्तिसमृद्धिवर्णनमुदात्तालंकारः। तन्मूलको हरिमणिघृणिमसृणानित्यत्र तद्गुणालंकारः, तत्रैव वक्ष्यमाणभ्रान्त्युपपादकपदार्थहेतुककाव्यलिङ्गालंकारश्चेति तयोरेकवाचकानुप्रवेशसंकरः। तन्मूलको जाम्बवाधियेत्यत्र भ्रान्तिमदलंकारः। ताभ्यां चोदात्तालंकारस्सुन्दरतां लम्भित इति तयोश्च तस्य चाङ्गाङ्गिभावेन संकरः। एवं श्रीमद्भवनसमृद्धेर्हेतुमतो रमाकटाक्षश्रियो हेतोश्चाभेदवर्णनं हेत्वलंकारः। स च रमाकटाक्षश्रियो निरवधिकोत्कर्षपर्यवसायी। एतावन्मात्रे चेत्संरम्भः कवेः तदा उपपादितोदात्तालंकारोपस्कृते हेत्वलंकारे विश्रमः। वर्णनीयाया रमायाः कटाक्षलक्ष्मीः कीदृशीति प्रश्नोत्तरतया निरवधिकैश्वर्यवितरणरूपाप्रस्तुतकार्यमुखेन तदीयकटाक्षलक्ष्मीप्रकर्षप्रशंसायां चेत्संरम्भः तदा कार्यनिबन्धनाप्रस्तुतप्रशंसालंकारे विश्रमः। कार्यस्यापि वर्णनीयतयाऽभिसंधौ तु प्रस्तुताङ्कुरे विश्रान्तिः। अत्र विशेषानध्यवसायात्संदेहसंकरः। किंच श्रीमद्भवनवैभववर्णनस्यासंबन्धे संबन्धकथनरूपतया अतिशयोक्तेरुदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः। निरवधिकौदार्योत्कर्षपर्यवसायिनो हेत्वलंकारस्याद्भुतातथ्यौदार्यवर्णनात्मिकयाऽत्युक्त्या सहैकवाचकानुप्रवेशसंकरः। तन्मूलकस्याप्रस्तुत-

प्रशंसालंकारस्य प्रस्तुताङ्कुरालंकारस्य वा श्रीमत्सम्पत्समृद्धिवर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः। वाचकशब्दस्य प्रतिपादकमात्रपरतया व्यञ्जकसाधारण्यस्य दीक्षितैरेवोक्तत्वात्। तथाचोदात्तातिशयोक्त्योः हेत्वत्युक्त्योः व्यङ्ग्योदात्ताप्रस्तुतप्रशंसाप्रस्तुताङ्कुरान्यतरयोरित्येतेषां त्रयाणामेकवाचकानुप्रवेशसंकराणां समप्राधान्यसंकरः। न ह्येतेषामन्योन्यमितरत्राङ्गत्वमस्ति। ननु संपत्समृद्धिवर्णनात्मकस्योदात्तस्यासंबन्धे संबन्धवर्णनरूपातिशयोक्तेश्चैकवाचकानुप्रवेशस्य हेत्वलंकारसौन्दर्याधायकत्वेनेतराङ्गतायां जागरूकायां कथं त्रयाणां समप्राधान्यसंकर इति वाच्यं, उदात्तालङ्कारस्यैव संपत्समृद्धिवर्णनात्मना हेत्वलंकारचारुताधायकतया अङ्गता। न तत्रातिशयोक्तिसंकरस्याप्युपयोग इति त्रयाणां समप्राधान्यस्योचितत्वात्। एवमत्र श्लोके चतुर्णामपि संकराणां यथायोग्यं संकरः। तथाहि—उदात्ततद्गुणयोरङ्गाङ्गिभावसंकरस्य भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसंकरस्य चाङ्गाङ्गिभावेन संकरः। तथा भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसंकरस्य उदात्ताङ्गकहेत्वलंकारादिसंदेहसंकरस्य चाङ्गाङ्गिभावसंकर इति कुशाग्रीयमतिभिरनुसंधेयम्। एवंजातीयकास्संकराः प्रागुपदर्शितेष्वर्थालंकारोदाहरणेषु उपदर्शयिष्यमाणेषु शब्दालंकारोदाहरणेषु च संभवन्तो मनीषिभिरलंकारशास्त्रनिष्णातैस्स्वयमेवोह्यन्त इति विस्तरभयाद्विश्रम्यते। ग्रन्थान्ते श्रीरिति निर्देशोऽत्यन्तमङ्गलार्थ इति सर्वं समञ्जसम्॥

इत्यलङ्कारमणिहारे सङ्करालङ्कारसर एकविंशत्युत्तरशततमः.

———

अथ शब्दालंकारसरः (१२२)

**इत्यर्थालंकृतयो यथामति निरूपिताः ।**

**निरूप्यन्तेऽथ दिङ्मात्रं शब्दालंकृतयः क्रमात् ॥**

यद्यपि प्रकाशकारादेभिरभ्यर्हितशब्दगत्वेनाभ्यर्हिता इति शब्दालंकारा अर्थालंकारेभ्यः पूर्वं निरूपिताः। काव्यानुशासनकारस्तु—"अलंकाराः खलु द्विविधाः शब्दालंकारा अर्थालंकाराश्च, तत्रतावदर्थमधिकृत्य शब्दः प्रवर्तते, अतः प्रथममर्थालंकारा एवोदाह्रियन्ते" इत्याह। अतएव दण्डिप्रभृतिभिः अर्थालंकाराः प्रकर्षातिशयादादौ शब्दालंकारास्तु जघन्यतयाऽनन्तरं च निरूपिताः। अतएवास्माभिः काव्यानुशासनकृदादिमतावलम्बनेनार्थालंकारनिरूपणानन्तरमेव शब्दालंकारा निरूप्यन्ते ॥

वर्णानुप्रासः—

**साम्यं व्यञ्जनमात्रस्य वर्णानुप्रास ईरितः ॥**

स्वरवैसादृश्येऽपि व्यञ्जनानां सादृश्यं यत् स वर्णानुप्रासः। व्यञ्जनसाम्यं यमकेऽप्यस्तीति तद्वारणाय मात्रपदम्। तेन स्वरव्यञ्जनसादृश्य एव यमकत्वस्य वक्ष्यमाणत्वान्न तत्रातिव्याप्तिः। स्वरव्यञ्जनसाम्यरूपलाटानुप्रासाव्याप्तिवारणाय वर्णपदं लक्ष्ये विशेषितम्। तथाच लाटानुप्रासस्य पदानुप्रासतया वर्णानुप्रासताविरहादलक्ष्यत्वेन न तत्राव्याप्तिर्दोषायेत्याहुः। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः। तदुक्तम्—'प्रकृष्टो वर्णविन्यासो रसाद्यनुगतो हि यः। सोऽनुप्रासः' इति ॥

**द्विधा भवेदयं छेकवृत्त्यनुप्रासभेदतः ॥**

अयं वर्णानुप्रासश्च छेकानुप्रासो वृत्त्यनुप्रासश्चेति द्विविधः। छेकाः विदग्धाः तदभिमतोऽनुप्रासश्छेकानुप्रासः। वृत्तिर्नाम निय-

तवर्णगतो रसविषयो व्यापारः रचनाविशेष इति यावत्। तदाश्रितोऽनुप्रास इत्याहुः॥

छेकानुप्रासः—

छेकानुप्रासमाहुर्यत्साम्यं व्यञ्जनयोस्सकृत्॥

यद्व्यञ्जनयोस्सकृत्साम्यं तं छेकानुप्रासमाहुः॥

यथावा—

सन्ततमन्तःकरणं दिव्यं भव्यं भुजङ्गगिरिसाङ्गि।
धाम श्याममभेयं विन्दतु कन्दर्पदर्पहररूपम्॥

अत्र पूर्वार्धे नकारतकारयोः ङकारगकारयोः वकारयकारयोः उत्तरार्धे नकारदकारयोः रेफपकारयोश्च सकृत्साम्यम्। इदं च—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुश्शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥

इतिच्छेकानुप्रासस्योदाहरणदानेन व्यवधानसहिष्णुव्यञ्जनद्वयसकृत्साम्यस्य छेकानुप्रासतामभ्युपगच्छतां प्रकाशकारादीनां मतेन। विद्यानाथादीनां मते तु इदं लक्षणम्—

द्वयोर्द्वयोर्व्यञ्जनयोर्युग्मयोर्या निरन्तरा।
आवृत्तिः क्रियते सोऽयं छेकानुप्रास ईर्यते॥

द्वयोर्द्वयोर्व्यञ्जनयोर्व्यञ्जनान्तराव्यवधानेनावृत्तिश्छेकानुप्रास इत्यर्थः। तेनाज्वर्णव्यवधानेऽपि न दोषः॥

यथावा—

देवादेव श्रेयो रामारामस्ववक्षसो ज्यायः। ध्येयो
हि योऽहिभूमीधरधरणीबालिकालिकाभरणम्॥

अत्र पादचतुष्टयेऽपि व्यञ्जनयुग्मानामव्यवधानेनावृत्तेश्छेकानुप्रासः ॥

वृत्त्यनुप्रासः—

उल्लङ्घ्य संख्यानियमं पौनरुक्त्यं भवेद्यदि ।
एकद्वित्र्यादिवर्णानां वृत्त्यनुप्रासमूचिरे ॥

अत्रैकस्य व्यञ्जनस्य सकृदावृत्तौ वैचित्र्यविरहात्सामर्थ्यादसकृदावृत्तिर्लभ्यते । द्वयोस्तु सकृदेव । अन्यथा छेकानुप्रासो भवेत् । व्यवधाने त्वसकृदावृत्तावपि न विरोधः । त्र्यादीनां सकृदसकृद्वा व्यवधानेनाव्यवधानेन वा आवृत्तिर्द्रष्टव्या । वृत्तिशब्देन वैदर्भ्यादयो विवक्षिताः । तदुपलक्षितोऽनुप्रासो वृत्त्यनुप्रास इत्याहुः ॥

यथा—

मुरघातुकमरतकवरविसृमररुचिनिचयमेचकीभूता । आलसति नीलचेलकनिचोलितेवाहिभूभृतो भूमिः ॥ २२३१ ॥

फणिधरणीधररमणी रमणीयमणीललन्तिकालतिका । उन्मीलति काऽपि महामहिममही देवता मुदे जगताम् ॥ २२३२ ॥

कोमलकमलजरुचिमदहररुचिमदुदारलोचने देवे । मुदिरमदरभसनिर्जयरभसि निजाङ्गेऽस्तु मम मनो लग्नम् ॥ २२३३ ॥

द्वितीये पद्ये महामहिम्नां मही भूमिः आधारभूतेत्यर्थः। काऽपि देवतेति योजना। तृतीये मदरभसो मदवेगः तस्य निर्जये रभसि उल्लासवदित्यर्थः। 'रभसो वेगहर्षयोः' इति विश्वः। अत्र पद्यत्रये यथायोगं एकद्वित्र्यादिवर्णानामावृत्तेर्वृत्त्यनुप्रासः। अत्र पूर्वत्र च स्वरसादृश्यमानुषङ्गिकम्। स्वरव्यञ्जनसादृश्यस्य यमकप्रयोजकत्वं वक्ष्यते॥

अथ लाटानुप्रासः—

तात्पर्यमात्रभिन्ना या शब्दार्थपुनरुक्तता।
सोऽयं शाब्दः काव्यविद्भिर्लाटानुप्रास ईर्यते॥

एवं वर्णगतमनुप्रासं प्रतिपाद्य वर्णसमुदायरूपशब्दगतमनुप्रासं निरूपयति—तात्पर्यमात्रेति। तात्पर्यमात्रभिन्नं शब्दार्थयोः पौनरुक्त्यं यत् सोऽयं शब्दो वर्णसमूहः तत्संबन्धी शाब्दः-लाटजनप्रियत्वाल्लाटानुप्रास इति काव्यविद्भिरीर्यते। अत्र शब्द, पौनरुक्त्यमात्रं यमकेऽप्यस्तीति तद्वारणायार्थपदम्। यमके चार्थभेदान्न तत्पौनरुक्त्यम्। शब्दार्थपौनरुक्त्यमात्रं कथितपदत्वादि-रूपदोषसाधारणमित्यतस्तात्पर्यमात्रभिन्नेति विशेषणमिति ध्येयम्।

वाक्यावृत्तौ पदावृत्तौ नामावृत्तौ च तत्त्रिधा॥

सः लाटानुप्रासः वाक्यपौनरुक्त्ये सुबन्तातिङन्तपदपौनरुक्त्ये नाम्नः प्रातिपदिकस्य पौनरुक्त्ये च त्रिविधो भवति। तत्राद्यो यथा—

त्वं चेत्प्रसीदसि हरे वर्णाश्रमधर्मचर्यया किं नः। यदि न प्रसीदसि त्वं वर्णाश्रमधर्मचर्यया किं नः॥ २२३४॥

अत्र प्रथमार्धे वर्णाश्रमधर्मचर्यायाः भगवत्प्रसादरूपफलनिष्पत्तौ सत्यामनादरः, द्वितीयार्धे तादृशफलनिष्पत्त्यभावे अनादर इति तात्पर्यभेदेन वाक्यावृत्तेर्लाटानुप्रासः ॥

यथावा—

**विषममृतं तस्य भवेद्यस्य मनो भवति माधवेऽस्खलितम् । विषममृतं तस्य भवेद्यस्य मनो भवति माधवे स्खलितम् ॥ २२३५ ॥**

**नृत्यति हृदि यस्य हरिः कलिः कृतं तस्य भवति हन्त युगम् । शौरिर्न यस्य चेतसि कलिः कृतं तस्य भवति हन्त युगम् ॥ २२३६ ॥**

अत्राद्ये पद्ये यस्य श्रीनिवासे चित्तमस्खलितं तस्य विषमप्यमृतं भवेत् प्रह्लादस्येव । यस्य चित्तं स्खलितं तस्य अमृतमपि विषं भवेदिति । द्वितीये श्रीनिवासध्यानबद्धादरस्य कलियुगमपि कृतयुगं तदन्यस्य कृतयुगमपि कलियुगमिति तात्पर्यभेदेन वाक्यावृत्तेर्लाटानुप्रासः ॥

कलिः कृतयुग तस्य कृतं तस्य कलिर्युगम् ।
हृदये यस्य गोविन्दो यस्य चेतसि नाच्युतः ॥

इति प्रमाणमत्र प्रत्यभिज्ञाप्यते । यद्यप्यत्र पद्यद्वयेऽपि पूर्वार्धयोर्विषकल्योरुद्देश्यत्वात्प्राथम्यं अमृतकृतयुगयोर्विधेयत्वाज्जघन्यत्वं च युक्तम् । उत्तरार्धे तु उद्देश्यविधेयव्युत्क्रमनिर्देशरूपाविमृष्टविधेयांशरूपो दोषः । तथाऽपि तदस्फुरणदशायां प्रतीतिस्थगनविरहात् ईदृशमपि प्रकाशकारादिभिः प्राचीनैरुदाहृतमित्यस्माभिरप्युदाहृतम् ॥

द्वितीयो यथा—

**तेषां चक्षुश्चक्षुस्तेषां जन्मैव जन्म मनुजानाम् । ये निध्यायन्त्यनिशं येऽनुध्यायन्ति फणिधरेशं तम् ॥ २२३७ ॥**

अत्र द्वितीयचक्षुर्जन्मशब्दयोरुत्कर्षलक्षणस्तात्पर्यभेदः । ननु 'इन्दुरिन्दुरिव श्रीमान्' इत्यादावनन्वयालंकारेऽपि शब्दार्थपौनरुक्त्यसंभवाल्लाटानुप्रासत्वमेव किं न स्यादिति चेत्सत्यं, यद्यप्यनन्वये अर्थपौनरुक्त्यमात्रं लक्षणं तथाऽपि निर्देशप्रतिनिर्देशयोरैकरूप्यविरहे पर्यायप्रक्रमभेदप्रसंगादानुषङ्गिकं शब्दपौनरुक्त्यम् । अत्र तूभयपौनरुक्त्यमप्यावश्यकमेवेति विषयभेदान्न कोऽपि विरोधः । तदुक्तं—

अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥

इति, इत्याहुः । नन्वेवमप्यनेनैव लाटानुप्रासेन सिद्धस्यैव चक्षुरादेस्तात्पर्यभेदेन चक्षुष्ट्वादिविधानाद्विध्यलंकारो माऽस्त्विति चेन्न । 'रामस्य गात्रमसि' इत्यादौ शब्दार्थपौनरुक्त्याभावस्थले विध्यलंकारस्यावश्यकत्वादत्राप्यर्थवशात्समावेशे अनयोरेकवाचकानुप्रवेशसंकरस्यैव वक्तुं युक्तत्वात् ॥

यथावा—

**तद्दैवतं हि दैवतमहिगिरिशिखरेऽस्ति यन्महोदारम् । मनुजस्स एव मनुजस्सकृदपि वा येन तत्स्मृतिं नीतम् ॥ २२३८ ॥**

समासैक्ये तद्भितायां स्यात्समासासमासयोः ।
नामावृत्तौ पुनस्त्रेधा लाटानुप्रास ईरितः ॥

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य चावृत्तौ लाटानुप्रासः पुनस्त्रिविधो निष्पद्यते ॥

यथा—

अमृतामृतकरशिशिरा शिशिरावनिधरधृतिर्दयासीमा । सीमा पुरातनगिरां सा मां परदेवताऽवतादनिशम् ॥ २२३१ ॥

दयाविषये असीमा अविद्यमानसीमा अतिवेलदयोर्मिळेत्यर्थः । दयायास्सीमा अवधिरिति वा । अमृतामृतेत्यत्र अमृतेति प्रातिपदिकस्यैकस्मिन् समासे शिशिरेत्यस्य भिन्ने समासे दयासीमासीमेत्यत्र समासासमासयोश्चावृत्तिः ॥

पञ्चप्रकार एवं च लाटानुप्रास ईरितः ॥

वाक्यावृत्तावेकः पदावृत्तावन्यः एकस्मिन् समासे नामावृत्तावितरः भिन्ने समासे नामावृत्तौ परः । समासासमासयोर्नामावृत्तावपर इति पञ्चविधो लाटानुप्रास उक्तः—

सितकरकररुचिरविभा विभाकराकारधरणिधरकीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥

इत्याद्युदाहरतां काव्यप्रकाशकारादीनामनुरोधेन ॥

अत्रेदं चिन्त्यम्—द्वयोरपि करशब्दयोर्वाच्य एव विश्रान्ततयाऽन्यपरत्वाविरहान्नास्ति तात्पर्यभेद, तस्यैव तज्जीवातुत्वात् ।

अतोऽनुप्रासमात्रत्वमेवास्य । न च केवलकरादिपदानां स्वार्थविश्रान्तावपि समासे उपसर्जनीभूतानां स्वार्थत्यागेन परार्थवृत्तेस्तात्पर्यान्तरपरत्वमस्त्येवेति वाच्यम्, लक्षणासामग्रीविरहात् । अत्राप्यन्यपदार्थप्रधानत्वात्करशब्दस्य गुणीभाव एव न तु मुख्यार्थबाधः, स्वार्थ एव विश्रान्तेः । न हि गुणीभावमुख्यार्थबाधयोरेकत्वं, सतो हि मुख्यार्थस्य किंचिदपेक्ष्य गुणीभावः । बाधस्तु स्वस्मिन्नेवाविश्रान्तिरित्यनयोर्महान् भेदः । नाप्यत्र लक्षणायां किंचित्प्रयोजनमित्येतत्पौनरुक्त्यमात्रम् । एतेन 'अत्राब्जपत्रनयने नयने निमीलय' इत्यत्र लाटानुप्रासं वदन् सर्वस्वकारोऽपि प्रत्युक्तः । अब्जपत्रशब्दस्याप्यपौनरुक्त्येन तस्य दुर्घटत्वादिति वदन्ति ॥

अथ यमकम्

**अनर्थका वा भिन्नार्थास्सार्थकानर्थकाश्च वा ।**
**क्रमादावर्तिता वर्णा यदि तद्यमकं भवेत् ॥**

यथा—

**सरसा सरसा सकलाविपुला विपुला फणीन्द्रभूमिभृतः । शौरेर्मोदं जनयति नयति नृणां दुरितमविरतं विरतिम् ॥ २२४० ॥**

अत्र सरसासरसासकलेत्यत्र रसासेत्यादीनामनर्थकानां वा विपुलाविपुलेत्यत्रार्थसंभवेन भिन्नार्थकानां वा जनयति नयतीत्यत्र क्वचित्सार्थकानां क्वचिदर्थविधुराणां वा वर्णानां क्रमाद्यत्पौनरुक्त्यं तद्यमकम् । अत्र सरसासरसासकलेत्यत्रावर्त्यमानानां रसासेतिवर्णानामर्थाभावेन भिन्नार्थकत्वस्य सार्थकानर्थकत्वस्य चाभावादव्याप्तिः, अत उक्तमनर्थका वेति । विपुलाविपुलेत्यत्रावर्त्यमानानां

विपुलेति वर्णानामनर्थकत्वस्य सार्थकानर्थकत्वस्य वा अभावाद-व्याप्तिरित्यत उक्तं भिन्नार्थका वेति । जनयति नयतीत्यत्र द्वितीय-नयतिशब्दस्य सार्थकत्वान्नानर्थकत्वं नापि भिन्नार्थकत्वं, प्रथम-नयतिशब्दस्यानर्थकत्वात् । अतस्तत्राऽव्याप्तिरित्यत उक्तं सार्थका-नर्थकाश्च वेति । कपिः पिक इत्यदौ भिन्नार्थकानां वर्णानामावृत्तेर्य-मकत्वप्रसङ्ग इत्यत उक्तं क्रमादिति । येन क्रमेण प्रथमं पठिताः तेनैव क्रमेणावर्तिता इत्यर्थान्न तत्रातिव्याप्तिः । वर्णा इति बहु-वचनमविवक्षितम् । तेन—

विजयीभव भववन्दित दितादितिजनिजातजा-
तभीतिविशेष । शेषभुज भुजगभूधरधरणीरमणी-
मणियमान मुरारे ॥ २२४१ ॥

इत्यत्र न यमकत्वक्षतिः । दितिजनीनां दैत्यानां जातं समूहः तस्माज्जातो यो भीतिविशेषः सः दितः छिन्नः येन सः तस्य संबुद्धिः 'दितं छितं वृक्णम्' इत्यमरः । न चैवं लक्षणाननुगम इति वाच्यं, उक्तविधात्रितयान्यतमविधावद्वर्णावृत्तिर्यमकमि-त्येके । एकार्थत्वभिन्नशब्दावृत्तिर्यमकम् । एकार्थकत्वभेदश्च निर-र्थकेषु भिन्नार्थकेषु सार्थकानर्थकेषु वर्णेष्वाविशिष्टमिति नाननुगम इत्यन्ये ॥

श्लोकार्धपादतद्भागावृत्त्या स्यात्तच्चतुर्विधम् ॥

तत् यमकं श्लोकावृत्तौ अर्धावृत्तौ पादावृत्तौ पादभागावृत्तौ च भवत् प्रथमं चतुर्विधं भवति ॥

तत्र श्लोकावृत्तिर्यथा—

उत्तुङ्गमध्यवनिकामन्दारोल्लासिसुविपुलक्रोड-

म् । तमचलमहिमाधारं सद्यो गोविन्दमादधत-
मिष्टम् ॥ २२४२ ॥

उत्तुङ्गमध्यवनि कामन्दारोल्लासिसुविपुलक्रोडम्।
तमचलमहिमाधारं सद्योगोऽविन्दमादधतमिष्टम्॥

उत्तुङ्गमध्यवनिकामन्दारोल्लासिसुविपुलक्रोडं तं अचलं अहिं आधारं सद्यः गोविन्दं आदधतं इष्टम् । उत्तुङ्गं अध्यवनि कामं दारोल्लासिसुविपुलोक्रोडं तं अचलमहिमाधारं सद्योगः अविन्दं आदधतं इष्टम्, इति पदच्छेदः । उन्नताः तुङ्गाः पुन्नागतरवः यस्यां तस्यां उत्तुङ्गायां 'पुन्नागे पुरुषस्तुङ्ग' इत्यमरः । मध्यवनिकायां मध्येऽरण्यमित्यर्थः । ये मन्दाराः पारिजाततरवः 'पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः' इत्यमरः । तेषु उल्लासी शोभना विपुला भूदेवी यस्य सः सुविपुलः भूदेव्या श्लिष्ट इत्यर्थः । ईदृशः क्रोडः आदिवराहो यस्मिंस्त तथोक्तं, आदिवराहस्य भगवतश्शेषाद्रावाविर्भूतत्वात् । 'क्रोडो भूदार इत्यपि' इति वराहपर्यायेष्वमरः । तं सुप्रसिद्धं अहिं अचलमित्यन्वयः । शेषाद्रिमित्यर्थः । शेषस्यैवाचलत्वेनावतीर्णतायाः पुराणप्रसिद्धतया अभेदेन निर्देशः । आधारं निवासस्थानं आदधतं कुर्वाणं तत्र निवसन्तमित्यर्थः । इष्टं निरतिशयप्रीतिविषयं 'प्रियो हि ज्ञानिनोऽत्यर्थं' इति गानात् । 'इषु इच्छायां' कर्मणि क्तः । इष्टं सर्वैः पूजितमिति वा । यजतेः क्तः—

इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु ।
सप्ततन्तौ पुमान् क्लीबे संस्कारे क्रतुकर्मणि ॥

इति मेदिनी । उत्तुङ्गं सर्वैर्गुणैरतिमात्रमुन्नतं । अध्यवनि भूमौ । विभक्त्यर्थेऽव्ययीभावः । अध्यवनि अहिमचलमाधारमादधतमित्यन्वयः । कामं पर्याप्तं यथास्यात्तथा दारैः सह-

धर्मिण्या लक्ष्म्या उल्लासि प्रकाशमानं सुविपुलं अतिविशालं क्रोडं भुजान्तरं यस्य तं लक्ष्मीसमाश्लिष्टविशालवक्षसमित्यर्थः। तं वेदान्तवेद्यजगत्कारणत्वादिकल्याणगुणगणतया प्रसिद्धं अचलस्य स्थिरस्य महिम्नः माहात्म्यस्य आधारं इष्टं आश्रिताभीप्सितं यज्वभिः कृतं यागं वा आदधतं पुष्णन्तं गोविन्दं श्रीनिवासं 'गोविन्देति यदाक्रन्दत्' इत्युक्तरीत्या भगवतस्तन्नाम्ना सौशील्यपराकाष्ठाद्योतकेनाह्वाने प्रीत्यतिशयस्य गम्यमानतया शेषाद्रौ प्रायेण गोविन्दनाम्न एव जनैः कीर्त्यमानतया गोविन्दशब्देन निर्देशः। सन् प्रशस्तः योगो ध्यानं यस्य स तथोक्तस्सन् सद्यः अविन्दं शरणमहणवम्। विन्दतेलङुत्तमैकवचनम्॥

अर्धावृत्तिर्यथा—

**शुभदामोऽदरभासुरजय मापाहिस्थिराधरामोदिन्। शुभ दामोदर भासुर जय मा पाहि स्थिराधरामोदिन्॥ २२४४॥**

शुभदामः अदरभासुरजय माप अहिस्थिराधरामोदिन् शुभ दामोदर भासुर जय मां पाहि स्थिराधरामोदिन्, इति पदच्छेदः। अदरभाः अनल्पतेजसः ये असुराः जयतीति जयः पचाद्यच्। तेषां जयः अनल्पविक्रमदैतेयजेतेत्यर्थः तस्य संबुद्धिः अदरभासुरजय! अहिस्थिराधरः शेषाद्रिः तस्मिन् आमोदिन् आनन्दिन्, शुभ 'मङ्गळानां च मङ्गळम्' इत्युक्तरीत्या मङ्गळरूप। दामोदर भासुर स्वप्रकाशस्वरूप। स्थिरायाः भूदेव्याः अधरेण अधररसेन आमोदिन्। यद्वा-स्थिराधर धराणिधर 'धरणिधराच्युत शङ्खचक्रपाणे, 'धराणिधर मे शिक्षय मनः' इत्या-

दिकमिह स्मर्तव्यम् । अतएव आमोदिन् अतिनिर्हारिपरिमळशालिन् । भूदेव्यास्स्वाभाविकगन्धवत्त्वेन नित्यतद्योगादिति भावः—

'विमर्दोत्थे परिमळो गन्धे जनमनोहरे ।

आमोदस्सोऽतिनिर्हारी'

इत्यमरः । यद्वा 'सर्वगन्धस्सर्वरसः' इति श्रवणात्सर्वदिव्यगन्धेत्यर्थः । माप श्रीपते! शुभा दामा वैजयन्ती यस्य स तथोक्तः त्वं जय । जिधातोर्लोण्मध्यमैकवचनम् । 'न पुंसि दाम संदानम्' इत्यमरः । दामशब्दस्य स्त्रीलिङ्गस्य 'मनः' इति ङीब्निषेधे 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् । ततो बहुव्रीहिः ^{पत}ेा मां पाहि पालय ॥

यथावा—

**वदनाभिभाविताब्जं परमञ्जनवेदगिरिशिरस्युदितम् । वद नाभिभाविताब्जं परमं जन वेदगिरि शिरस्युदितम् ॥ २२४५ ॥**

वदनाभिभाविताब्जं परं अञ्जनवेदगिरिशिरसि उदितं वद नाभिभाविताब्जं परमं जन वेदगिरि शिरसि उदितं इति च्छेदः । वदनेन अभिभावितः अभिभवं तिरस्कारं प्रापितः अब्जः चन्द्रो येन तम् । तिरस्कारे भगवतः प्रयोजककर्तृत्वं, वदनस्य प्रयोज्यकर्तृत्वम् । अञ्जनवेदगिरिशिरसि अञ्जनश्चासौ वेदश्च अञ्जनवेदः अञ्जनाख्यो वेदाख्यश्च यो गिरिः तस्य शिरसि शिखरे उदितं आविर्भूतम् । नाभिभाविताब्जं नाभौ भावितं उत्पादितं अब्जं पद्मं येन तम्, 'अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम्' इति श्रुतेः । वेदगिरि श्रुतिरूपायां वाचि शिरसि अन्ते वेदान्ते इत्यर्थः । उदितं उदीरितं । वदेः कर्मणि क्तः । 'तं त्वौपनिषदम्' इति श्रुतेः । हे जन! परं अतिशयितं यथास्यात्तथा परमं

अत्युत्तमं वद ब्रूहि। अञ्जनगिरावाविर्भूतं भगवन्तं विधातृजनिनिदानभूतनाभिकमलतया अखिलजगत्कारणं परं ब्रह्मेति वदेति जनान् प्रत्यावेदनम्॥

यथावा—

**प्रपदनतस्तव नान्येऽवाकलयन्ते मुदं ननूपायाः। प्रपदननस्तवनान्येवाकलयन्ते मुदं न नूपायाः॥ २२४६ ॥**

प्रपदनतः तव न अन्ये अवाकलयन्ते मुदं ननु उपायाः प्रपदनतः स्तवनानि एव अकलयं ते मुदं न नु उपायाः, इति पदच्छेदः। नन्वित्यामन्त्रेण। ननु भगवन्! प्रपदनतः शरणवरणात् आद्यादित्वात्सार्वविभक्तिकस्तसिः। अन्ये इतरे उपायाः यज्ञदानतपोऽनशनादिसाधनानि तव मुदं प्रीतिं नावाकलयन्ते नावाकलपयन्ते। अवाङ्पूर्वकात्कलयतेर्लट्। ते तव प्रपदे पादाग्रे 'पादाग्रं प्रपदम्' इत्यमरः। नतः शरणागतस्सन् स्तवनान्येव स्तुतीरेव अकलयं अरचयम्। कलयतेर्लङुत्तमैकवचनम्। मुदं प्रीतिं, तेन स्तवनेनेति भावः। नुशब्दः पृच्छायाम्। 'नु पृच्छायां विकल्पे च' इत्यमरः। नोपायाः नु नोपागच्छः किम्? उपाङ्पूर्वकादुपपूर्वकाद्वा यातेर्लण्मध्यमः। उपागत एवेति निर्धारयामि। स्तवप्रिय इति हि तव नामेति भावः। द्वितीयार्धे प्रपदनतः स्तवनानीत्यत्र 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति विसर्गलोपः। अकलयन्ते इत्यत्र 'वा पदान्तस्य इति वैकल्पिकोऽनुस्वारस्य परसवर्णः। अत्र—

इति वाग्भिः प्रशस्ताभिरयोनिर्विष्णुरीडितः।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः॥

इत्यादिप्रमाणान्यनुसंधेयानि । इमे श्लोकावृत्त्यर्धावृत्तियमके महायमकं समुद्गकमिति नामभ्यां रुद्रटादिभिर्व्यवाह्रियेताम् । यथोच्यते—

'अर्धे पुनरावृत्तं जनयति यमकं समुद्गकं नाम ।
श्लोकस्तु महायमकम्' इति ॥

यथावा—

लक्ष्मीश्चकास्ति भवतो नवतोयदसारभासिता-
दवितः । लक्ष्मीश्च काऽस्ति भवतोऽनवतो यद-
सारभासितादवितः ॥ २२४७ ॥

लक्ष्मीः चकास्ति भवतः नवतोयदसारभासितात् अवितः, इति पूर्वार्धे । उत्तरार्धे तु लक्ष्मीः च का अस्ति भवतः अनवतः यत् असारभासितात् अवितः इति च्छेदः । हे अवितः अवतेः रक्षणार्थकात्तृच् । हे रक्षक!

'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' ।

इत्युक्तेः । नवतोयदाः प्रावृषेण्यवारिदाः तेषु सारः श्रेष्ठः तस्य भा प्रभेव असितात् श्यामलात् । यद्वा नवतोयदस्य सारभा श्रेष्ठदीप्तिः सेव असितः तस्मात् । तस्या अप्यसितादिति वा । भवतः त्वत्तः लक्ष्मीः चकास्ति । नीलतोयदमध्यस्थाविद्युदिव प्राप्तपरभागतया भासत इति भाव । यद्वा भवतस्सकाशात् लक्ष्मीः संपत् जनानामिति शेषः । चकास्ति त्वत्त एव जगतां समृद्धिलाभ इति भावः । अनवतः आपत्सु अरक्षकात् संहर्तृतया अप्रीणयतश्च भवतः शर्वात् लक्ष्मीः श्रीरपि संपदिति वार्ताऽपीति भावः । का अस्ति जनानां तस्मात्काऽपि संपन्न सिध्यतीति भावः । कुत इत्यत आह—यदिति । यत् यस्मात्करणात् अयमित्यध्याहारः,

असारं निस्सारं अश्रेष्ठं वा भसितमेव भासितं वायसराक्षसादिवत् स्वार्थिकोऽण्। तस्मात् आवितः प्रीतः तृप्तो वा भवति। अवतेः प्रीत्यर्थकात्तृप्त्यर्थकाद्वा कर्तरि क्तः। रक्षणासमर्थात् भस्ममात्रसमृद्धिमत्तया तृप्तादस्माल्लक्ष्मीलाभस्सर्वरक्षकाच्छ्रीनिवासाद्भगवत इव जनानां कथं निष्पद्येतेति भावः॥

यथावा—

श्रीशोभितस्स दासं पदं श्रितं बहुकरोऽतिहीनमपि। श्रीशोऽभितस्सदा संपदं श्रितं बहु करोऽति हीनमपि॥ २२४८ ॥

श्रीशोभितः सः दासं पदं श्रितं बहुकरः अतिहीनं अपि श्रीशः अभितः सदा संपदं श्रितं बहु करोति हि इनं अपि इति पदच्छेदः। श्रिया षाड्गुण्यसंपदा शोभितः। बहवः कराः हस्ताः यस्य स तथोक्तः। स्वसंपदनुगुणपुरुषार्थचतुष्टयदानौपयिकपाणिचतुष्टय इति भावः। सः सर्वेश्वरत्वेन सकलोपानिषत्प्रसिद्धः श्रीशः भगवान् श्रीनिवासः अतिहीनमपि अतिदुर्गतमपीति यावत्। अपिर्विरोधे। पदं स्वचरणं श्रितं शरणं गतं दासं शेषभूतं चेतनं अभितः समन्ततः सर्वस्मिन् देशे इत्यर्थः। सदा सर्वस्मिन काले बहु विपुलं यथास्यात्तथा संपदं सपत्तिं श्रितं प्राप्तं करोति। नैतावदेव किंतु इन मपि प्रभुमपि करोति। 'इनस्सूर्ये प्रभौ' इत्यमरः। अत्र अपिस्समुच्चये। हिः प्रसिद्धौ॥

यथावा—

निजधाम्नि देवनेता पावियुक्तश्श्रीर्भवत्यनुग्रहतः। निजधाम्नि देवने तापावियुक्तश्रीर्भवत्यनुग्रहतः॥ २२४९ ॥

निजधाम्नि देवनेता पवियुक्तः श्रीः भवत्यनुग्रहतः। निज-धाम्नि देवने तापवियुक्तश्रीः भवति अनुग्रहतः। इति छेदः। निजं नित्यं धाम तेजः प्रणवो वा यस्यास्सा निजधाम्नी। तस्यास्संबुद्धि हे निजधाम्नि! 'अन उपधालोपिनोऽन्यतरस्याम्' इति वैकल्पिको ङीप्। 'स्वके नित्यं निजं त्रिषु' गृहगेहत्विट्प्र-भावा धामानि' इति चामरः। 'निजं स्वीये च नित्ये च' इति मेदिनी च। हे श्रीः भवत्या अनुग्रहः भवत्यनुग्रहः तस्मात् सार्व-विभक्तिकस्तसिः 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यका-रेष्टेः 'ठक्छसोश्च' इति वार्तिकारम्भेणानित्यताज्ञापनाद्भवतीश-ब्दस्य न पुंवद्भावः। एतच्च हंससंदेशरसास्वादिन्यां 'भवती-भागधेयेन जीवन्' इत्यत्र निपुणतरं प्रपञ्चितमस्माभिः। देवनेता इन्द्रः पविमुक्तः वज्रसाहितः 'कुलिशं भिदुरं पविः' इत्यमरः। एतेन शौर्यस्थैर्यं व्यञ्जितम्। अतएव अनुग्रहतः उग्रैः दैत्यादिभिः क्रूरैः हतः हिंसितो न भवतीति तथा। अतएव निजधाम्नि स्वस्थाने त्रिदिवे देवने क्रीडने द्योतने मोदने वा। तापवियुक्तश्रीः तापैः आध्यात्मिकादिभिः वियुक्ता श्रीस्संपत् यस्य स तथोक्तः भवति। अत्र विष्णुपुराणकथाऽनुसंधेया। इमान्यर्धावृत्तिरूपय-मकोदाहरणानि सर्वाण्यपि वक्ष्यमाणगोमूत्रिकाबन्धोदाहरणानि भविष्यन्ति॥

अथ पादावृत्तियमकविभागः

## आवृत्तावाद्यपादादेर्द्वितीयादौ भिदा नव॥

प्रथमपादस्य द्वितीयतृतीयचतुर्थपादेषु क्रमेणावृत्तौ त्रयो भेदाः। युगपदावृत्तौ त्वेक इति प्रथमपादावृत्तिनिबन्धनाश्चत्वारो भेदाः। तथा द्वितीयपादस्य तृतीयचतुर्थयोः क्रमेणावृत्तौ द्वौ

भेदौ' तृतीयपादस्य चतुर्थपादे आवृत्तावेक इति शुद्धाः पादावृत्तिनिबन्धना भेदास्सप्त। तथा प्रथमस्य द्वितीये तृतीयस्य चतुर्थे चावृत्तावेकः। तथा प्रथमस्य चतुर्थे द्वितीयस्य चतुर्थे द्वितीयस्य तृतीये चावृत्तावपर इति संकीर्णौ द्वौ भेदौ। आहत्य पादावृत्तिनिबन्धना भेदा नव संपद्यन्ते। इदमुपलक्षणम्। यथाहि प्रथमपादस्य द्वितीयादिपादेषु क्रमेण यौगपद्येन चावृत्तौ चत्वारो भेदा उक्ताः। तथा प्रथमस्य द्वितीयतृतीययोर्द्वितीयचतुर्थयोः तृतीयचतुर्थयोश्चावृत्तावन्येऽपि त्रयो भेदास्संभवन्ति। तथा द्वितीयस्य तृतीयचतुर्थयोः क्रमेणावृत्तौ भेदद्वयवत् युगपदावृत्तावपरोऽपि भेदस्संभवतीति ध्येयम्॥

अथ पादभागावृत्तियमकविभागः.

द्विधा विभागे पादानां प्रथमाद्यादिमा यदि।
द्वितीयाद्यादिभागेषु यम्यन्ते स्युर्भिदा दश॥
प्रथमाद्यन्तिमा भागा द्वितीयाद्यन्तिमांशगाः।
भवेयुश्चेत्तदाऽपि स्युरेवमेव भिदा दश॥
एवं द्विधा विभागे तु भेदानां विंशतिर्भवेत्।
त्रिधा पादविभागे तु त्रिंशदित्यूह्यतां क्रमात्॥

पादानां द्विधा विभागे प्रथमपादाद्यभागस्य द्वितीयादिपादाद्यभागेषु क्रमेण युगपच्चावृत्तौ चत्वारो भेदाः। द्वितीयपादाद्यभागस्य तृतीयचतुर्थपादाद्यभागयोः क्रमेणावृत्तौ द्वौ भेदौ। प्रथमपादाद्यभागस्य चतुर्थपादाद्यभागे चावृत्तावेकः। तथा प्रथमपादाद्यभागस्य चतुर्थपादाद्यभागे द्वितीयपादाद्यभागस्य तृतीय-

पादाद्यभागे चावृत्तावपरो भेदः। तथा अर्धावृत्तिन्यायेन प्रथमपादाद्यभागस्य तृतीयपादाद्यभागे द्वितीयपादाद्यभागस्य चतुर्थपादाद्यभागे चावृत्तावन्यो भेद इत्याद्या भागावृत्तिनिबन्धना दश भेदाः॥

नन्वर्धावृत्तिन्यायेनेव श्लोकावृत्तिन्यायेनापि तत्तद्भेदाः कुतो नोच्यन्त इति चेत् विच्छित्तिविशेषाभावेन श्लोकान्तरे भागावृत्तिनिबन्धना भेदा नोक्ता इति ध्येयम्। एवमेवान्त्यभागावृत्तिनिबन्धनाश्च भेदा दश। एवं पादानां द्विधा विभागे विंशतिर्भेदाः त्रिधा विभागे त्रिंशत्। चतुर्धा विभागे चत्वारिंशद्भवन्ति भेदा इत्याद्यूह्यम्। इत्थं शुद्धभेदा निरूपिताः॥

अथ संकीर्णभेदप्रकाराः.

**एवमन्त्यादिकाद्यन्तमध्यादीन्यादिमध्यगम्।**
**अन्त्यमध्यं च मध्यान्त्यमेतेषां च समुच्चयाः॥**

यदा प्रथमादिपादगतान्त्यभागो द्वितीयादिपादाद्यभागे यम्यते तदा अन्त्य आदौ यम्यत इत्यन्वर्थताश्रयणादन्त्यादिकम्। यदा प्रथमपादाद्यभागो द्वितीयपादान्त्यभागे यम्यते तदा आद्योऽन्त्ये यम्यत इत्याद्यन्तकम्। एवं प्रथमादिपादमध्यभागस्य द्वितीयादिपादाद्यभागे यमने मध्यादिकम्। एवमाद्यभागस्य मध्यभागे यमने आदिमध्यगम्। एवमन्त्यभागस्य मध्यभागे यमने अन्त्यमध्यगम्। मध्यभागस्यान्त्यभागे यमने मध्यान्त्यकम्। यदा एतेषां समावेशस्तदैतत्समुच्चयाश्च भवन्तीत्यवधेयम्। एवमेकपादगतभागानां पादान्तरभागापेक्षा भेदाः प्रदर्शिताः। एकपादगतभागानामन्योन्यापेक्षा भेदाः प्रदर्श्यन्ते—

एकैकपादे नियता नियतक्रमशालिनः ।
यम्यन्ते चेदादिमध्यान्त्यभागास्तद्भिदाऽशतम् ॥

यदा त्वेकैकस्मिन्नेव पादे आदिमध्यान्त्यभागानां नियतक्रमत्वेन अनियतक्रमत्वेन च यमनं तदा शतं अनेके भेदास्संभवन्ति । एते यमकप्रभेदाः काव्यलक्ष्मीकण्ठगडुभूततया न प्रपञ्चनार्हा इति दिङ्मात्रमेवोदाह्रियते ॥

पुरुषस्समाहितमना यस्सेवेताहिशैलमौलिमणिम् । पुरुषस्स माहितमनास्तस्मै किं किं पदं न विदधीत ॥ २२५० ॥

यः पुरुषः मनुजः समाहितमनाः प्रणिहितचित्तस्सन् अहिशैलमौळिमणिं सेवेत तस्मै पुरुषाय सः 'सकलफलप्रदो हि विष्णुः' इति प्रसिद्धः माहितमनाः मायै श्रियै हितं प्रियं करणं मनो यस्य सः । अनेन पुरुषकारसांनिध्यं तत्प्रीत्याचरणैकतानत्वं चोक्तम् । पुरुषः भगवान् किं किं फलं न विदधीत 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्युक्तेरिति भावः ॥

रत्नपर्वतमारुह्य यथा रत्नं नरो मुने ।
सत्वानुरूपमादत्ते तथा कृष्णान्मनोरथान् ॥

इत्यादिकमप्यत्रानुसंधेयम् ॥

यथावा—

नाशमितोऽभवदमुना भवता मम तावदखिलदुरितौघः । नाशमितो भवदमुना भविता फणिशैलनीलजलद हरे ॥ २२५१ ॥

नाशं इतः अभवत् अमुना इति प्रथमपादे। न अशमितः भवदमुनाः इति तृतीयपादे च छेदः। हे हरे! इदमाश्रितदुरितापहारसामर्थ्याभिप्रायगर्भम्। अमुना भवता आत्महविस्समर्पणोद्देश्यभूतेन त्वया, हेतौ तृतीया। मम अखिलदुरितौघानां सर्वपूर्वाघव्यूहानां, इदमुपलक्षणं प्रामादिकोत्तराघानामपि। नाशं विनाशं इदमश्लेषस्याप्युपलक्षणम्। इतः प्राप्तः इणः कर्तरि क्तः अभवत्। उत्तराघाश्लेषस्य सिद्धवत्काराभिसंधिना भूतनिर्देशः। भवस्संसार एव दमुनाः अग्निः 'सप्तार्चिर्दमुनाः' इत्यमरः। भवतेत्येतदत्राप्यनुषज्यते। अशमितः न भाविता अनिर्वापितो न भविष्यति। भूधातोर्भविष्यति लुट्। फणिशैलनीलजलदेति विशेषणं भवाग्निनिर्वापणधुरीणताभिप्रायकम्। भवता मम पूर्वोत्तराघविनाशाश्लेषयोर्निर्वर्तितयोः पुनस्संसारतापः कदाऽपि न भविष्यत्येवेति भावः॥

यथावा—

**भविता सत्कृत्यादृतिरच्युत न त्वत्पदाश्रितानां यः। भवितासत्कृत्यादृतिरेव स एषोऽत्र को नु संशेताम्॥ २२५२॥**

हे अच्युत! यः पुमान् त्वत्पदाश्रितानां भागवतानां सत्कृतौ सत्कारे बहुमानने आदृतिः आदरणं यस्य स तथोक्तो न भविता स एव जनः असत्कृत्यादृतिरेव असत् अप्रशस्तं यत्कृत्यं तस्मिन् आदृतिरस्य तथोक्त एव भविता। यद्वा भवितासत्कृत्यादृतिरिति तृतीयचरणे समस्तं पदम्। भवितया संसारितया सतां ब्रह्मविदां कृत्ये आचारे आदृतिः यस्य स न भवतीत्यसत्कृत्यादृतिरेव। अथवा असत्यां अप्रशस्तायां कृत्यायां देवतायां

'कृत्या क्रियादेवतयोः' इत्यमरः। आहृतिर्यस्य तथोक्त एव भविता। भागवताराधनविमुखानामीदृशी गतिरिति भावः। अथवा असत्कृत्याः असती स्पर्शाद्यनर्हा या कृत्तिः श्वादिचर्म 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। तस्याः हृतिः भस्त्रा भविता भागवतसत्कारादरविधुरः पुमान् चर्मभस्त्रिकाप्राय एव न तु चेतन इति भावः। अत्र पद्यत्रयेऽप्याद्यपादस्य तृतीयपादे आवृत्तिः॥

यथावा—

क्रियते यद्भुवनावनमीशा नो ननु वृषाचले-
शेन। प्रभवेदेतद्रचयितुमीशा नो ननु वृषा च ले-
शेन॥ २२५३॥

ईशा नः ननु वृषाचलेशेन। ईशानः न नु वृषा च लेशेन इति छेदः। वृषाचलेशेन शेषाद्रिनाथेन नः अस्माकं ईशा 'ईशा वास्यमिदग् सर्वम्' इत्यत्रेव ईट्छब्दोऽयं तृतीयैकवचनान्तः। स्वामिनेत्यर्थः। यत् भुवनावनं जगत्पालनं क्रियते एतत् भुवनावनं रचयितुं ईशानः शर्वः वृषा च नु वासवोऽपि वा 'नु पृच्छायां विकल्पे च' इत्यमरः। लेशेन लेशतोऽपि न प्रभवेन्ननु। ननुरवधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः।

न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्।
स्थितौ स्थितं महाप्राज्ञ भवत्यन्यस्य कस्यचित्॥

इत्युक्तं पालनसामर्थ्यं 'न सन्न चासच्छिव एव केवलः' 'इन्द्रो मायाभिः पुरुरूप ईयते' इति कारणत्वशङ्कास्पदत्वेन श्रुतयोरीशवशतमखयोर्न संभवादिति भावः॥

यथावा—

भूष्णुस्स्याद्यो मनुजो भवति स दामोदरहित-
ताश्रेयान् । यो मनुजोऽभूष्णुस्स च भवति सदा-
मोदरहितताश्रेयान् ॥ २२५४ ॥

यः मनुजः भूष्णुः वर्धिष्णुः स्यात् सः दामोदराय हितः दामोदरहितः 'हितयोगे च' इति चतुर्थी । 'चतुर्थी तदर्थे' इत्यादिना समासः । तस्य भावः दामोदरहितता तया श्रेयान् प्रशस्यतरः भवति । यो मनुजः अभूष्णुः स च संश्वासावामोदश्च सदामोदः प्रशस्तानन्दः तेन रहिततया विधुरतया अश्रेयान् अविद्यमानं श्रेयो यस्य तथाभूतः भवति । 'ईयसश्च' इति बहुव्रीहेर्न कप् ॥

यथावा—

त्वयि योऽच्युताभिदध्यादन्तर्यामीति शब्दमा-
त्रमपि । तां श्रियमेति स न विशेदन्तर्यामीति
शब्दमात्रमपि ॥ २२५५ ॥

हे अच्युत ! त्वयि विषये अन्तर्यामी अन्तर्नियन्तेति शब्द-मात्रमपि यः अभिदध्यात् । मा स्म तदर्थं ज्ञासीदिति भावः । सः पुमान् तां श्रियं संपदं पति प्राप्नोत । यां श्रियं ईतिशब्दमात्रमपि विप्लवशब्दमात्रमपि अन्तः न विशेत् किमुत तदर्थः । त्वयि अन्त-र्यामीति शब्दमात्रं प्रयुञ्जानोऽपि निरातङ्कां श्रियमैहिकीमामुष्मिकीं वा प्राप्नोतीति भावः । 'ईतिर्डिम्बप्रवासयोः' इत्यमरः । डिम्बो विप्लवः 'डिम्बे डमरविप्लवौ' इति तेनैवानुशिष्टत्वात् ॥

यथावा—

यः फणिशैलनिवेशो श्रीशोऽवधिरहितवर्धने

निपुणः । स भवति वसुधाधीशश्श्रीशेवधिरहित-
वर्धनेऽनिपुणः ॥ २२५६ ॥

श्रीशे अवधिरहितवर्धने निपुण. श्रीशेवधिः अहितवर्धनेऽनिपुणः इति पदच्छेदः । यः पुमान् अवधिरहितं अनन्तं वर्धनं वृद्धिः यस्य तथोक्ते स्वरूपेण गुणैश्च निरतिशयबृहति परस्मिन् ब्रह्मणीति यावत् । यद्वा अनवच्छिन्नाभिवृद्धौ त्रिविक्रमावतारे तथा प्रवृद्धत्वादिति भावः । अवधिरहितं यथास्यात्तथा वर्धने वर्धिष्णाविति वा । 'वर्धनं वृद्धिवर्धिष्णुच्छेदे' इति मेदिनी । 'स्याद्वर्द्धिष्णुस्तु वर्धनः' इत्यमरश्च । फणिशैलनिवेशे श्रीशे श्रीनिवासे निपुणः मातरि निपुण इत्यादाविव तत्पूजनैकतान इत्यर्थः । 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' इत्यर्चायां गम्यमानायां निपुणशब्दयोगे सप्तमी । सः पुमान् श्रियः संपदः शेवधिः निधिः 'निधिर्ना शेवधिः' इत्यमरः । अहितानां वैरिणां वर्धने छेदने विषये निपुणः कुशलः वसुधाधीशः राजा भवति । अत्र 'क्रियते यद्भुवनावनम्' इत्यादिपद्यचतुष्टयेऽपि द्वितीयपादस्य तुरीयपादे आवृत्तिः । अत्र प्रथमस्य पादस्य तृतीये पादे आवृत्तौ संदंशो नाम यमकम् । द्वितीयस्य चतुर्थे आवृत्तौ संदष्टकं नाम यमकमिति रुद्रटः । तथाच तदीयं लक्षणं—

पर्यायेणान्येषामावृत्तानां सहादिपादेन ।
मुखसंदंशावृतयः क्रमेण यमकानि जायन्ते ॥

आदिपादेन द्वितीयपादावृत्तौ मुखं नाम यमकम् । तेन तृतीयपादावृत्तौ संदंशोनाम यमकम् । तेन तुरीयपादावृत्तावावृतिर्नाम यमकमिति तदर्थः ।

प्रत्येकं पश्चिमयोरावृत्त्या पादयोर्द्वितीयेन ।
यमके संजायेते गर्भस्संदष्टकं चेति ॥ इति ॥

पश्चिमयोः तृतीयतुरीयपादयोः द्वितीयेनावृत्तौ गर्भसंदष्टकनामनी यमके भवत इति तदर्थः। प्रथमतृतीयपादाभ्यां द्वितीयतुरीयपादयोरावृत्तिरिहार्यावृत्तेषु न घटत इति नोदाहार्ष्म प्रतिज्ञाभङ्गभयात् ॥

अथ पादभागावृत्तियमकभेदा दिङ्मात्रमुदाह्रियन्ते—

**वनमालीयत नीपावनमाली योगिनां च यत्र गिरौ। वनमाली य इहास्तेऽवनमालीढाङ्घ्रिजाधरं तमये ॥ २२५७ ॥**

यत्र गिरौ शेषाचले नीपावनं नीपानां कदम्बानां बन्धूकानां नीलाशोकानां वा कदम्बबन्धूकनीलाशोकानां सर्वेषां वा तरुविशेषाणां अवनं रक्षकं 'पुंवाक्येष्वनेकार्थत्वमदोषाय' इत्यसकृदवोचाम। 'नीपः कदम्बे बन्धूके नीलाशोकद्रुमेऽपि च' इति विश्वः। वनं विपिनं आलीयत आश्लिक्षत् स्थितमित्यर्थः। योगिनां मुनीनां आली पङ्क्तिश्च आलीयतेति योजना। इह अस्मिन्गिरौ वनमाली—

आपादलम्बिनीं मालां वनमालां विदुर्बुधाः।
पञ्चवर्णा तु या माला वैजयन्ती गदाभृतः॥

इत्याद्युक्तलक्षणवैजयन्त्याख्यमालालंकृतः यः परमपुरुष आस्ते। अवनं निरुपाधिकसर्वरक्षकं आलीढाङ्घ्रिजाधरं आस्वादितरमाधरं तं श्रीनिवासं अये शरणं प्रपद्ये। तं अवनं अये इति वा योजना। रक्षकत्वेन वृणोमीत्यर्थः। इह प्रथमपादभागस्य वनमालीति चतु-

रक्षरात्मकस्य द्वितीयादिपादत्रयभागेष्वावृत्तिः । प्रथमतृतीययोः पञ्चानां वर्णानामावृत्तिरप्यस्तीति विशेषश्च ॥

**मम तावदियं सुतराममता दुरिताळिरच्युता-त्यमिता । ममतां वहता भवता भवतापहृता क्षमापदं गमिता ॥ २२५८ ॥**

हे अच्युत! तावदिति साकल्ये । सुतरां अमता अनभ्युपगता अत्यमिता मम त्वां प्रपन्नस्येति भावः । दुरिताळिस्तावत् सर्वाघततिरित्यर्थः । ममतां मदीयोऽयमिति वात्सल्यमित्यर्थः । वहता भवतापहृता संसारसंज्वरनिरासकेनेति स्वापराधक्षमाद-क्षताभिप्रायकम् । भवता क्षमापदं क्षमागोचरतां गमिता नीते-त्यर्थः । अनेन 'न्यासेन क्षपयन्ननभ्युपगतप्रारब्धखण्डं च नः' इत्युक्तोऽर्थस्संगृहीतः । अत्र प्रथमपादादिमभागस्य ममतेत्यक्षरत्र-यात्मकस्य द्वितीयतृतीयपादादिभागमात्रे आवृत्तिः । न तु तुरी-यपादादिभागे । अत्र यमकान्तरमप्यवधेयम् ॥

**स्तावकमहिशिखरिशशिंस्तावकचरितस्य ध-न्यमिह मन्ये । भावुकमखिलं सुभगंभावुकमेनं यतो नयसि मनुजम् ॥ २२५९ ॥**

हे अहिशिखरिशशिन्! तावकचरितस्य स्तावकं स्तोतारं जनं धन्यं मन्ये । यतो हेतोः सुभगंभावुकं एनं मनुजं अखिलं भावुकं कुशलं 'भावुकं भविकं भव्यं' इत्यमरः । नयसि । तस्मादमुं धन्यं मन्ये इति योजना । अत्राद्यपादाद्यभागस्य द्वितीयपादादि-भागे तृतीयाद्यपादस्य तुरीयपादादिभागे चावृत्तिः ॥

**यैर्न कृता क्वचिदपि वा सत्कृत्यास्स्युः प्रसेविकाश्शौरे । श्वासान्वितास्त एतेऽसत्कृत्यास्स्युः प्रसेविका नूनम् ॥ २२६० ॥**

यैर्जनैः क्वचिदपि वा सत्कृतिः आदरः तया सत्कृत्या । 'अनाचि च' इति तकारस्य द्वित्वं यमकाविरोधायेति ध्येयम् । प्रसेविकाः प्रकृष्टास्सेवाः 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति सेवतेः ण्वुल् । धात्वर्थश्च सेवनम् । न कृताः त एते जना श्वासान्विताः श्वसन्त्यः असत्कृत्याः असती स्पर्शाद्यनर्हा या कृत्तिः श्वगर्दभादिचर्म तस्याः प्रसेविकाः भस्त्रिका एव नूनम् । 'भस्त्रा चर्मप्रसेविका' इत्यमरः । भगवत्सेवनविधुराः श्वासमात्रवः श्चर्मभस्त्रिकाप्राया एव । अत्र 'तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्ति च' इत्यादिभागवतश्लोकार्थोऽनुसंधेयः । अत्र द्वितीयतुरीययोराद्यभागावृत्तिः ॥

**यस्तव कथासुधायां यदुवंशमणे महादृतिर्न स्स्यात् । सम्यक्कृते विमर्शे स नरो नूनं महादृतिर्नस्स्यात् ॥ २२६१ ॥**

हे यदुवंशमणे! यः नरः तव कथासुधायां महादृतिः महती आदृतिर्यस्य तथोक्तः । न स्यात् न भवेत् सः नरः सम्यक् विमर्शे कृते नस्स्यादित्यत्र नः स्यात् इति छेदः । नः अस्माकं स नरः महादृतिः महती भस्त्रिकैव स्यात् तत्तुल्यो भवेत् । अस्मदृष्ट्या स चर्मभस्त्रिकाप्राय एव स्यात् न तु चेतन इति भावः । अत्र द्वितीयतुरीयपादयोरन्त्यभागावृत्तिः 'दृतिश्चर्मपुटे मत्स्ये' इति मेदिनी । 'दृतेः पादादिवोदकम्' इति प्रयोगश्च ॥

**जगतां स भवानीशः फणधरगिरिनाथ न तु भवानीशः । ब्रह्माऽपि भवानीशस्तदहं तव किंकरो भवानीशः ॥ २२६२ ॥**

हे फणधरगिरिनाथ! भवानेव जगतां ईशः स्वामी । भवानीशस्तु रुद्रस्तु न नेश इत्यर्थः । ब्रह्माऽपि नेश । कुत इत्यत आह—भवानीश इति । भवेन संसारेण अनीशः अस्वतन्त्रः संसारबन्धविवश इत्यर्थः । 'अनीशया शोचति मुह्यमानः' इति श्रुतेः । तत् तस्मात् रुद्रादीनां संसारपरतन्त्रत्वात् अहं भवबन्धान्मुमुक्षुरिति भावः । ईशः ईट्छब्दष्षष्ठ्यन्तोऽयम् । निरुपाधिकतया सर्वेश्वरस्येत्यर्थः 'जुष्टं यदा पश्यत्यन्यमीशं, ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिश्रुतिभ्यः । तव 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्युक्तरीत्या भवसागराद्विनतानुद्धरतस्तवेति भावः । किंकरः भवानि भवेयम् । लोडुत्तमैकवचनम् । मुमुक्षुरहं 'बद्धस्स्वयं किमु विमोचयिता बतान्यम्' इति न्यायेन स्वयमेव संसृतिबन्धमोमुह्यमानानुमानाथादीननादृत्य निखिलसंसृतिपाशबन्धनिर्धूननपरमाद्भुतशक्तेस्तवैव दास्यमभ्युपेयामिति भावः । अत्र 'आ ब्रह्मस्तम्बपर्यन्ता' इत्यादिप्रमाणान्यप्यनुसन्धेयानि । अत्र प्रथमपादान्त्यभागो भवानीश इति वर्णचतुष्टयात्मको द्वितीयादिपादत्रयान्त्यभागेष्वावर्तित ॥

यथावा—

**स्वधयैव भृशमनन्तं प्रलयदशायां वृषाचलेशमनन्तम् । य उपास्ते शमनन्तं न वीक्षते बत स विन्दते शमनन्तम् ॥ २२६३ ॥**

प्रलयदशायां स्वधया लक्ष्म्या सह। एवशब्दो भिन्नक्रम उत्तरत्रान्वेति। 'स्वधा त्वं लोकभावनी' इति पुराणोक्तेः स्वधाशब्दो लक्ष्मीवाची। महाभारते च श्रीवासवसंवादे—'अहं स्वाहा स्वधा चैव' इति श्रिया स्वयमेवोक्तत्वाच्च। भृशं अनन्तं प्राणन्तं 'आनीदवातग् स्वधया तदेकम्' इति श्रुतेः। महाभारते च—

कृत्वा मत्स्थानि भूतानि स्थावराणि चराणि च।
एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम॥

इति। विद्याशब्दो लक्ष्मीपरः। 'आत्मविद्या च देवि त्वम्' इत्याद्युक्तेः। यद्वा 'तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति' इत्युक्तरीत्या स्वधया आनीदिति प्रेमपारतन्त्र्ये तात्पर्यम्। यद्वा स्वस्मिन् धीयत इति व्युत्पत्त्या स्वधाशब्दस्स्वसत्ताविषयकः। स्वकीयं विश्वधारणसामर्थ्यमेव वा स्वधा। तथाच 'श्रेष्ठश्च' इत्यधिकरणे भाष्यं—'आनीदवातम्' इति तु न जैवं श्रेष्ठं प्राणनमभिप्रेत्योच्यते अपितु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते' इति। 'अत्रानन्याधीनसत्ताकत्वमभिप्रेतम्' इति चतुश्श्लोकीभाष्ये आचार्याः। अनेन जगत्कारणत्वमुक्तम्। 'कारणं तु ध्येय' इति तस्यैवोपास्यत्वश्रवणात्। अनन्तं त्रिविधपरिच्छेदविधुरं वृषाचलेशं अर्चात्मना वेंकटाद्राववस्थितं परं ब्रह्मेत्यर्थः। यः पुमान् उपास्ते सः तं अतिभीषणतया दुर्दर्शं दुष्कृतां यातयितारं प्रभुमिति भावः। 'प्रभुरहमन्यनृणां न वैष्णवानाम्' इति ह्युच्यते। शमनं यमं 'शमनो यमराड्यमः' इत्यमरः। न वीक्षते।

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्त्यघचीर्णनिष्कृताः॥

इति श्रीभागवतायुक्तेरिति भावः। अथापि तं शमनं यमं विन्दते प्राप्नोतीति विरोधः। परिहारस्तु शं अनन्तमिति छेदेन अनन्तं अपरिच्छिन्नं शं सुखं परब्रह्मानुभूतिसुखमिति भावः तस्यैवानन्तत्वात्। विन्दते प्राप्नोतीति। अत्रापि प्रथमपादान्त्य-भागस्य पादान्तरेष्वावृत्तिः॥

यथावा—

याऽघं तपसाऽधयति त्वत्कीर्तिसुधां नृणां
ततिस्सा धयति। अथ भक्तिं साधयाति त्वय्य-
च्युत तां भवांश्च साधयति॥ २२६४॥

हे अच्युत! या नृणां ततिः तपसा कृच्छ्रचान्द्रायणादिना अघं पापं अधयति अधःकरोति तिरस्करोतीत्यर्थः। अधस् इति सान्ताव्ययात् णाविष्ठवद्भावे टिलोपः। सा नृणां ततिः त्वत्तीर्ति-सुधां धयति पिबति। धेट् पाने' कर्तरि लट्। तत्फलमाह— अथेति। अथ त्वयि भक्ति साधयति निष्पादयति। भवांश्च एव-मुपासितस्त्वमपि तां नृणां ततिं साधयति बाढंकरोति साधु करो-तीत्यर्थः। बाढशब्दात् णाविष्ठवद्भावे 'अन्तिकबाढयोर्नेदसाधौ' इति साधादेशः। द्वितीये साधुशब्दात् णाविष्ठवद्भावे टिलोप इति भिदा॥

यथावा—

करिणो वरद हरे ते चरणे मम दुरितमघनुद
हरेते। तदर्थं दहरे ते न ध्याते श्रीपते यदह-
रेते॥ २२६५॥

हे हरे! 'हरिर्हरति पापानि' इत्येतदत्र स्मर्तव्यम्। अघं दुःखं व्यसनं वा नुदति क्षिपतीत्यघनुदः। तस्य संबुद्धिः। ते तव चरणे मम दुरितं हरेते। यदहः यस्मिन्नहनि अत्यन्तसंयोगे द्वितीया। दहरे हृदयपुण्डरीके ते पूर्वोक्ते एते तव चरणे न ध्याते तदहः व्यर्थं निरर्थकम्। अत्र 'यन्मुहूर्तं क्षणं वाऽपि' इति वचनार्थस्स्मर्तव्यः॥

यथावा—

**स भवान्यदि नो दयते जन्तोर्ज्ञानं तदाऽस्य नोदयते। कर्माणि न नोदयते तत्त्वां ध्यातुं रमाविनोद यते॥ २२६६॥**

विनोदयतीति विनोदः रमायाः विनोदः रमाविनोदः तस्य संबुद्धिः। रमायाः विनोद विनोदहेतो इति वा हेतुहेतुमतोरैक्यम्। हे श्रीनिवासेत्यर्थः। स भवान् जन्तोः प्राणिनः नो दयते यदि दयतेर्लट् 'अधीगर्थदय' इति कर्मणश्शेषत्वविवक्षया षष्ठी। तदा अस्य जन्तोः ज्ञानं निश्श्रेयसौपयिकमिति भावः। नोदयते नोदेति। अयतेर्लट्। स भवान् अस्येत्येतच्चानुषज्यते। अस्य जन्तोः कर्माणि पापरूपाणि न नोदयते न निवर्तयते। नुदतेर्णिजन्ताल्लट्। यद्वा अयमित्यध्याहारः। अयं जन्तुः कर्माणि न नोदयते इति योजना। पापकर्मणः क्षयाभावे ज्ञानानुदयादिति भावः। 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति हि स्मृतिः। तत् तस्मात् उक्ताद्धेतोः त्वां ध्यातुं यते यत्नं करोमि। यततेर्लडुत्तमैकवचनम्। पापक्षयपूर्वकज्ञानोदयनिदानत्वात्त्वत्कृपायास्तत्संपादनाय त्वामुपासितुं यत्नवान्भवामीति निर्गळितोऽर्थः॥

कृतविधिनाभीकमलं हृदयान्तरकृतनिकेतना-
भीकमलम् । व्रजललनाभीकमलंकुरुतां हृद्ब्रह्म
तदधुनाऽभीकमलम् ॥ २२६७ ॥

कृतः सृष्टः विधिः ब्रह्मा येन तथोक्तं नाभिकमलं यस्य तत्। हृदयान्तरे वक्षोऽन्तराळे कृतनिकेतना रचितमन्दिरा अभीः अविद्यमाना भीर्यस्यास्सेति पञ्चमीबहुव्रीहिः । आश्रितभीतिहारिणी । षष्ठीबहुव्रीहिर्वा । परिपूर्णापराधेष्वाश्रितयूथेषु कलुषितमतेर्दण्डधराल्लोकेश्वराद्भर्तुरपि तत्परित्राणे 'किमेवं निर्दोषः क इह जगति' इति बोधयन्ती न बिभेतीति भावः । अभीः कमला यस्य तत् तथोक्तम । आभ्यां परत्वमुक्तम् । व्रजललनानां गोपमहिलानां अभीकं कामुकं 'कम्रः कामयिताऽभीकः' इत्यमरः 'अनुकाभिकाभीकः कमिते' त्यभेः कमितेत्यर्थे कन्प्रत्ययो निपातितः । अनेन सौलभ्यमुक्तम् । ब्रह्म उक्तविधं परं ब्रह्म हृत् मम चित्तं कर्म अलंकुरुतां परिष्कुरुताम् । तत् मनः कर्तृ । अधुना अलं पर्याप्तं अभीकं निर्भयं भवति भगवति परस्मिन् ब्रह्मणि हृदयमधिवसति कुतो मम भयवार्तेति भावः । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' इति श्रुते । अत्र प्रथमपादान्त्यभागगतसस्वरव्यञ्जनपञ्चकस्य तदितरपादान्त्यभागेष्वावृत्तिरिति विशेषः ॥

श्रयसि सदा सहितत्त्वं श्रिया यदेतत्पुरा
सदास हि तत्त्वम् । अयसि स दासहितत्त्वं
त्वामेवं वेद यः सदा स हि तत्त्वम् ॥ २२६८ ॥

हे भगवन् ! सदा श्रिया सहितत्त्वं श्रयसि । श्रिया नित्ययोगवानिति श्रीमच्छब्दार्थ उक्तः । 'आनीदवातम् स्वधया तदेकम्'

इत्युक्तं तस्यैव जगत्कारणत्वमाह—यदिति। एतत् परिदृश्यमानं चिदचिदात्मकं जगत् पुरा सृष्टेः प्राक् सत् आस हि। तत् त्वम् इति छेदः। हिरवधारणे। अयं भिन्नक्रमः पूर्वत्र परत्र चापि संबध्यते। यत् सकलोपनिषत्प्रसिद्धं सत् हि सदेव सच्छब्दाभिलपनीयं ब्रह्मैव आस। जगदिदं यत्कारणकं यदात्मकमेवासीत्। आसेति तिङन्तप्रतिरूपकं बभूवार्थकमव्ययम्। यद्वा आस दिदीपे। दीप्त्यर्थकादसधातोर्लिट्। तद्ब्रह्म त्वमेव। त्वमेव तदिति वा योजना। 'सदेव सोम्येदमग्र आसीत्' इति कारणवाक्यार्थस्स्मारितः। एवंच श्रियःपत्युरेव जगत्कारणत्वं नान्यस्येत्युक्तं भवति। सः ईदृशः त्वं दासेभ्यः 'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः' इत्युक्तरीत्या शेषभूतेभ्यः हितत्वं सिद्धोपायत्वं अयसि प्राप्नोषि। 'इट किट' इत्यत्र प्रश्लिष्टस्य इधातोर्लट्। यः पुमान् सदा त्वां एवं श्रियःपतिं जगत्कारणं सिद्धोपायभूतं च वेद स हि स एव तत्त्वं आत्मपरमात्मयाथात्म्यं वेदेति योजना। अत्राद्यपादान्त्यभागगतानां षण्णां सस्वरव्यञ्जनानां पादान्तरान्त्यभागेष्वावृत्तिरिति पूर्वेभ्यो विशेषः। चतुर्थचरणे यः सदा इत्यत्र 'वा शरि' इति पाक्षिको विसर्गस्य विसर्ग एवैष्टव्यः। न तु 'विसर्जनीयस्य सः' इति सकारः। असंयुक्तसकारयमकप्रक्रमभङ्गापत्तेः॥

वितर शुभां गाङ्गेयं त्वां गायानीह विनतगाङ्गेयम्। लक्ष्मीसुभगाङ्गेयं पूताऽस्तु वृथैव मा स्म गाङ्गेयम्॥ २२६१॥

शुभां गां वाचं वितर। गेयं गातुं योग्यम्। विनतः गाङ्गेयो भीष्मः यस्मिंस्तं त्वां गायानि गायेयं लोडुत्तमैकवचनम्।

विष्णोर्गानं च गेयं च नटनं च विशेषतः ।
ब्रह्मन्ब्राह्मणजातीनां कर्तव्यं नित्यकर्मवत् ॥

इति शौनकोक्तेरिति भावः । हे लक्ष्मीसुभगाङ्ग श्रीशोभनमूर्ते श्रीनिवासेत्यर्थः । इयं गौः वाक् पूता अस्तु त्वत्संकीर्तनादिति भावः । यथाह्युच्यते शौनकेनैव—

नृत्यतां श्रीपतेरग्रे करसंस्फोटनादिभिः ।
उड्डीयन्ते शरीरस्था महापातकपक्षिणः ॥

इति । अत्र संस्फोटनादिभिरित्यादिशब्देन गानस्यापि ग्रहणं, पूर्वश्लोके तस्यैव प्रस्तुतत्वात् । वृथा गेयं त्वत्कीर्तनविधुरं गानं मा स्म गां न प्राप्नुयामेव ।

हरिगीतं विना नान्यद्ब्राह्मणेन नरोत्तम !
भाषागानं न कर्तव्यं तस्मात्पापं त्वया कृतम् ॥

इति भवद्गीतातिरिक्तगानप्रतिषेधादिति भावः । अत्राद्यपादान्त्यभागस्याक्षरत्रयात्मकस्य पादान्तरेष्वावृत्तिरिति विशेषः ॥

यथावा—

**महिमानं वेदान्ते वचसां तव विश्रुतस्य वेदान्ते । स्वमहं विभवेऽदान्ते करुणय मयि दुरभिभवभवेऽदान्ते ॥ २२७० ॥**

वेदान्ते विश्रुतस्य तव महिमानं वचसां अन्ते वेद जानामि 'यतो वाचो निवर्तन्ते' इति श्रुतेः । विभवे जगत्प्रभवे सर्वव्यापिने ते तुभ्यं अहं स्वं आत्मानं त्वदीयं स्वमेवेति वा अदां अददां त्वय्यात्मसमर्पणमकार्षमित्यर्थः । दुरभिभवो भवः संसारो यस्य तस्मिन् त्वच्चरणशरणवरणमन्तरेण उपायान्तरैर्दुरपनय-

संसारे इत्यर्थः। अदान्ते 'शान्तो दान्तः' इत्युक्तदमदवीयसीति-स्वकार्पण्याभिव्यञ्जनम्। मयि करुणय करुणां कुरु। करुणाशब्दात् "तत्करोति' इति णिच्। अदान्ते इत्यत्र 'वा पदान्तस्य' इति पर-सवर्णः। पूर्ववदेव यमकम्॥

कमलासख तव दास्ये कृतरुचिरात्मानमेव ते दास्ये। अविदितविनतौदास्ये लगति मनस्त्वयि ममेन्दुलसदास्ये २२७१॥

इदं भगवन्तं शरणं प्रपित्सोः कवेर्वचनम्। हे कमलासख! अयं श्रीमच्छब्दार्थः। अनेन आत्मसमर्पणोद्देश्यत्वं श्रीविशिष्टस्यै-वेति सूचितम्। तव दास्ये कैंकर्ये कृतरुचिः अनेन शरणागतिमन्त्रे उत्तरखण्डगतचतुर्थ्यन्तशब्दार्थस्सूचितः। आत्मानमेव ते तुभ्यं दास्ये आत्मरक्षाभरं त्वयि समर्पयिष्यामीति भावः। अनेन 'शरणं प्रपद्ये' इत्येतदर्थ उक्तः। अत्र हेतुमुपपादयति—अविदि-तेति। अविदितं विनतेषु औदास्यं उदासीनता येन तस्मिन् अतएव त्वयि मम मनः लगति। इन्दुलसदास्ये इति भगवतो विशेषणमनुग्रहप्रसन्नताव्यञ्जनाय। अत्र प्रथमपादान्तिमभागस्य वर्णद्वयात्मकस्य चतुर्ष्वपि पादान्त्यभागेष्वावृत्तिरिति विशेषः॥

यथावा—

निखिलमिहालं करणं नियम्य यःश्रुतिवधूम-हालंकरणम्। नरसखमापच्छरणं न भजेत कदा-ऽपि स भवमापच्छरणम्॥ २२७२॥

यः पुमान् निखिलं करणं सर्वाणीन्द्रियाणीत्यर्थः। अलं पं र्याप्तं यथातथा नियम्य विषयेभ्यः प्रत्याहृत्य श्रुतिरेव वधूः

तस्याः महाभरणं शिरोमणिमित्यर्थः। नरसखं नारायणं शरणं रक्षितारमुपायं वा आपत् प्राप्नोत्। रक्षितृत्वेन वा उपायत्वेन वा अवृणोदित्यर्थः। स पुमान् कदाऽपि आपदां शरणं निवासभूतं सकलविपज्जन्मभूमिमित्यर्थः। भवं संसारं न भजेत। भगवति न्यस्तरक्षाभरस्य क पुनस्संसृतिसत्यवतार इति भावः। भगवन्तं शरणमुपेयिवान् भवं शर्वं आपच्छरणं कदाऽपि न भजेत आपत्सु रक्षकतया न सेवेतेति च प्रतीयते। अत्र पूर्वार्धे उत्तरार्धे च चरमभागे यमकम्॥

अथ मध्यभागयमकम्—

यथा—

**रघुजाय ते नमस्स्तान्न जायते यन्मुधा कदाचिदपि। जलजायतेक्षण जनव्रजा यतेरन्विधातुमिदमेव॥ २२७३॥**

हे जलजायतेक्षण! अनेन प्रपन्नेष्वतिप्रसन्नत्वं व्यज्यते। रघुजाय शरणवरणधर्मप्रवर्तनधुरीणरघुवंशजत्वकथनेनास्यापि तादृशव्रतदीक्षितत्वं द्योतितम्। अतएव 'सर्वलोकशरण्याय राघवाय' इत्युक्तिः। ते तुभ्यं नमः 'निवेदयत मां क्षिप्रम्' इत्युक्तमात्मनिवेदनं 'नमस्कारात्मकं तस्मै विधायात्मनिवेदनम्' इति ह्युच्यते। स्तात् भवतु। किं तेनेत्यत्राह—यत् नमस्करणं कदाचिदपि मुधा न जायते निरर्थकं न संपद्यते। फलेग्रहितामेव भजत इति भावः। स्वानुष्ठितमात्मनिवेदनमेव सर्वैरनुष्ठेयमिति 'प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां समृद्धिम्' इति न्यायेनाशास्ते—जनेत्यादिना। जनव्रजाः पामरपरीक्षकसाधारण्येन सर्वे जननिवहाः इदमेव भगवते आत्मनिवेदनमेव विधातुं यतेरन् प्रार्थनायां लिङ्। यतन्ताम्। किमन्यैर्व्यभिचरितप्रयोजनैरुपायैः अवि-

तथफलमिदमेकमेव सेवन्तां सर्वाधिकारिकत्वादस्य ‘अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम’ इति तेनैव प्रतिज्ञातत्वादपेक्षितसकलफलदानधौरेयत्वाच्चेति भावः। अत्राद्यपादमध्यभागगताः जायते इति त्रयो वर्णा एव पादान्तरमध्यभागे यम्यन्त इति मध्ययमकमिदम् ॥

यथावा—

सरसी विसारसारससौगन्धिकसारसाराहितवृत्तिः। भाति घनसारसारसुशाता सरसा रसारमण तेऽद्रौ ॥ २२७४ ॥

रसायाः भूदेव्याः रमण वल्लभ! ‘विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम्’ इति श्रुत्या तस्या भगवत्प्रियात्वस्योक्तत्वादस्यापि तद्वल्लभत्वमित्यभिप्रायेण तथा संबोधनम्। हे भूवराहेति वा। ते तव अद्रौ शेषाचले इत्यर्थः। विसाराः मीनाः सारसाः पुष्कराह्वखगाः सौगन्धिकानि कह्लाराणि सारसानि पद्मानि तैः अराहिता वृत्तिः स्थितिः यस्यास्सा तद्युक्तेत्यर्थः। घनसारस्य कर्पूरस्य सारः स्थिरांशः स इव सुशीता अतिशिशिरा सरसा रसेन मधुररसेन सह वर्तत इति तथोक्ता च। सरसी स्वामिपुष्करिणी भाति। अत्र प्रथमपादमध्यभागस्य सारसारेतिवर्णद्वययमकरूपस्य द्वितीयादिपादमध्यभागे यमनान्मध्ययमकविशेष इति पूर्वस्माद्विशेषः ॥

यथावा—

शरणरणश्रवणक्षणचरणरणत्कटकमतिजवादेत्य। नीरणरणकितविचकितवारण रणधुर्य देव भव शरणम् ॥ २२७५ ॥

शरणंति रणः ध्वनिः रक्षकेत्याक्रन्दनमिति यावत् 'रणः क्वणे' इति, 'रवे रण.' इति च संकीर्णनानार्थवर्गयोरमरः। 'रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम्' इति मेदिनी च। तस्य। श्रवणक्षणमेव चरणयोः रणन्तौ ध्वनन्तौ कटकौ वलयौ यस्मिन्कर्मणि तद्यथास्यात्तथा अतिजवात् एत्य ग्राहग्रस्तगजेन्द्रसविधमिति भावः। रणरणकः उत्तरोत्तरतरङ्गितभयाविसंष्ठुलत्वं निर्गमितः रणरणको यस्य सः नीरणरणकः तथोक्तः कृतः नीरणरणकितः नीरणरणकशब्दात् णिजन्तात्कर्मणि क्तः विचकितः नक्राक्रान्ततया विशेषतः प्रतिहतः वारणः गजेन्द्रो येन तस्य संबुद्धिः नीरणरणकिताविचकितवारण। हे रणधुर्य समरधौरेय हे देव मम शरणं भव। गजेन्द्रस्येव ममापि भयचकिततां निर्धूय परित्राणं विदध्या इति भावः। अत्रापि पूर्ववदेव रणरणेति मध्यभागयमकं पादचतुष्टये॥

**श्रीवासादेवासावासाद्या सकलसंपदखिलजनैः। का वा सा याऽवासादयितुं संपत्ततो न शक्येत॥ २२७६॥**

असौ जगदानन्दसंदायितया दृश्यमाना अखिलसंपत् श्रीवासात् भगवत एव सकाशात् सकलजनैः आसाद्या प्राप्या। का वा सा या अवासादयितुमिति छेदः। ततः तस्मात् श्रीनिवासात् या संपत् अवासादयितुं अवाप्तुं स्वार्थिको णिच् यत्ना ततः तेन श्रिनिवासेन आसादयितुं श्रितान्प्रापयितुं न शक्येत। सा तथाविधा संपत् का वा न कापि तादृशी संपदस्तीति भावः। अत्राद्यपादे एकवर्णान्तरव्यवहितवासारूपवर्णद्वयावृत्तिलक्षणमध्यभाग एव तृतीयपादे तथाऽऽवर्त्येत इति प्रागुदाहृताव्यवहितवर्णद्वयावृत्तिरूपमध्ययमकाद्विच्छित्तिविशेषः॥

यथावा—

स जयति भुजगेशधरो जपावनं सहजपावनं यत्र। यत्र नृणां दानतपोजपावनं दिविजपावनं भवति ॥ २२७७ ॥

दानतपोजपानां अवनं गमनं प्राप्तिरित्यर्थः। अवतेर्गत्यर्थकाद्भावे ल्युट्। दिविजान्पातीति दिविजपः देवेशः भगवान् तस्य अवनं प्रीणनं भवति। प्रीणनार्थकादवतेः करणे ल्युट्। स्पष्टमन्यत्। अत्र द्वितीयपादे वर्णान्तरव्यवधानेनावृत्तस्य जपावनमित्यक्षरसमुदायस्य तुरीयपादे तथाऽऽवृत्तिरिति विशेषः॥

अतिबहुलसत्तमो जायतेऽहिभूभृत्पते मनो यस्य। बत बहुलसत्तमोजायते हि भूभृत्स तव दृष्ट्या ॥ २२७८ ॥

हे अहिभूभृत्पते! यस्य पुंसः मनः अतिबहुलं सत् विद्यमानं तमः यस्य तथोक्तं जायते त्वत्कटाक्षप्रसरात्पूर्वमतिमात्रतामसं भवतीति भावः। सः मनुजः तव दृष्ट्या 'यत्सत्त्वं स हरिर्देवः' इति सत्त्वमयतयोक्तस्य तव कटाक्षेणेति भावः। बहुला सत्ता साधुता प्रशस्तता वा यस्मिंस्तत्तथोक्तं यथातथा। यद्वा बह्वी लसतो भावः लसत्ता भगवत्संश्लेषः यस्मिंस्तद्यथातथा हि भूभृदिति छेदः। भूभृत् राजा सन् ओजायते। हिरवधारणे। सत्त्वगुणोन्मेषेण दीप्यते। 'तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्' इति सत्त्वगुणस्य प्रकाशकत्वं हि गीयते। अत्र पूर्वार्धमध्यभाग उत्तरार्धमध्यभागे आवर्त्यते। विपुलानामार्यावृत्तभेदोऽयमिति च विशेषः॥

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो विपुलामभिसमाख्याति ॥

इति लक्षणात् ॥

**यद्वैभवं न मेयं नमेयमहिशैलनाथमहिलां ताम् । सर्वस्य हि सुनमेयं न मे यमाद्भीरितःपरं भविता ॥ २२७९ ॥**

यस्याः वैभवं महिमा मातुं योग्यं मेयं न भवति 'यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुर्नालं मातुमियत्तया निरवधिम्' इत्युक्तरीत्या भगवताऽप्यपरिच्छेद्यमित्यर्थः। तां अहिशैलनाथमहिलां नमेयं शरणं व्रजेयम् । कथमेवमज्ञतमस्त्वं तां नमेरित्यत्राह—हि यस्मात् इयं अज्ञातनिग्रहेति भावः। सर्वस्य अज्ञस्य सर्वज्ञस्य वा जन्तोः सुनमा सुखेन नमनीया । पामरपरीक्षकविभागकार्पण्यानादरेण सर्वशरण्येति भावः । अतोऽहं शरणं व्रजेयमिति योजना । इतःपरं तच्छरणागतेरनन्तरं मे यमात् भीः न भविता । 'परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानाम्' इत्याद्युक्तेरिति भावः। सा हि भगवदविनाभूता। अत्र पादचतुष्टये अन्त्याद्यभागयोः नमेयमिति वर्णानामैकरूप्येणावृत्तिरिति भेदः ॥

यथावा—

**लोके समाननामा समानना मा शुधांशुबिम्बेन । जुषतां समानना मा समाननामामराधिनाथो याम् ॥ २२८० ॥**

लोके समानं मानसहितं पूज्यमित्यर्थः तादृशं नाम यस्यास्सा असमानं नाम यस्या इति वा । सुधांशुबिम्बेन समानना तुल्यव-

दना समं सर्वं जगत् आनयति जीवयतीति समानना कर्तरि ल्युः । 'समं सर्वम्' इत्यमरः । मा श्रीः मा मां जुषतां सेवताम् । मा जुषतामिति पदाभ्यां 'श्रीर्मा देवी जुषताम्' इति श्रुतिखण्डः प्रत्यभिज्ञाप्यते । यां अमराधिनाथः इन्द्रः समाननाम सम्यक् प्रणतवान् शरणं गत इत्यर्थः । अत्रापि पूर्ववदेव यमकम् । पञ्चानां वर्णानामावृत्तिरिति पूर्वस्माद्वैलक्षण्यम् ॥

**न भयानकाद्द्रवेयं न काद्रवेयं यमं समीक्ष्यास्मात् । नो यदि स वै नते यः सवैनतेयः प्रभुर्ददात्यभयम् ॥ २२८१ ॥**

यमं काद्रवेयं यमरूपमाशीविषमिति व्यस्तरूपकम् समीक्ष्य भयानकात् अस्मात् न द्रवेयमिति न किंतु द्रवेयमेव । नते शरणागते विषये यः प्रभुः अभयं ददाति सवैनतेयः वैनतेयसहितः सः प्रभुः भगवान् नो वै यदि नैव चेत् न द्रवेयमिति नेति योजना । अत्र प्रथमपादान्त्यभागः पञ्चवर्णात्मको द्वितीयपादादिभागे आवर्त्यते । एवमुत्तरार्धेऽपि विभिन्नानुपूर्वकपञ्चवर्णावृत्तिरिति पूर्वेभ्यो विशेषः । एवमग्रेऽपि । सवैनतेयः इत्यत्र 'वा शरि' इति पाक्षिकः विसर्जनीयस्य विसर्जनीयः यमकानैरूप्यायेष्टव्यः ॥

यथा वा—

**नयसे यमसालोक्यं यमसालोक्यं भजेत स हि जन्तुः । गमयसि यं परमपदं परमपदं स्यात्स संसरणविपदः ॥ २२८२ ॥**

यं जन्तुं सलोकस्य भावः सालोक्यं न सालोक्यं असालोक्यं आलोको दर्शनं कटाक्षाविषयतामित्यर्थः नयसे स जन्तुः यमसालोक्यं कृतान्तसलोकतां भजेत। यं परमपदं दिव्यं स्थानं गमयसि सः संसरणविपदः संसारापदः पदं स्थानं न पदं अपदं अविषय इति यावत् स्यात् संसृतिक्लेशान्पुनर्नानुभवेदित्यर्थः॥

यथावा—

**त्वं ननु बहुलाघवतो बहुलाघवतोऽपि बत नताञ् जननि। शौरे रक्षसि दयिता रक्षसि दयिताऽसि किमथवाऽऽश्चर्यम्॥ २२८३॥**

ननु जननि बहुलाघवतः अतिलाघवेन सार्वविभक्तिकस्तसिः। अतिमात्रचित्तचापलेनेति भावः। बहुलं अधिकं अघं पापमेषामस्तीति बहुलाघवतोऽपि नतान् शरणागतान् शौरेर्दयिता त्वं रक्षासि। बत अघवतामपि रक्षणमाश्चर्यावहमिति भावः। स्वयमेव समाधत्ते—अथवेति। रक्षसि काकासुर एव वा रावण एव व. दयिता दयमाना असि दयतेः कर्तरि क्तः दयाऽस्यास्संजाता दयितेति वा तारकादित्वादितच्। इदं च पाद्मरामायणयोः स्पष्टम्। अतः अघवतामपि विनतानां रक्षणं किमाश्चर्यमिति भावः। पूर्ववदेवेदं यमकं, षण्णामक्षराणामावृत्तिः परं विशेषः॥

यथावा—

**दिव्यास्सुतरामहतीस्सुतरा महतीस्सदाऽखिलाश्शक्तीः। भृशमवितथा दधानं तथाऽऽदधानं श्रियं जयतु दैवम्॥ २२८४॥**

दिव्याः आश्चर्यावहाः सुतरां अत्यन्तं अहतीः क्षतिरहिताः अप्रतिहता इत्यर्थः । सुतराः कल्याणतराः महतीः विपुलाः पूज्या वा भृशं अवितथाः अनारोपिताः अखिलाः शक्तीः दधानं—

संमस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

इत्येतदिहानुसंधेयम् । तथा श्रियं निश्श्रेयसैश्वर्यपर्यन्तां संपदं आदधानं आश्रितेष्विति शेषः । दैवं परं ब्रह्म जयतु । अत्रापि पूर्ववदेव यमकम् । पूर्वार्धे षण्णां उत्तरार्धे पञ्चानां वर्णानामावृत्तिरिति तु वैलक्षण्यम् । उत्तरार्धे तवर्गीयवर्णानां क्रमादावृत्तिरिति विच्छित्तिविशेषश्च द्रष्टव्यः ॥

यथावा—

**हृदयहरश्रीवत्से श्रीवत्से सर्वहृद्यमाधुर्ये । माधुर्ये गतविशयं विश यं जानासि शेषिणं हृदय ॥**

हृदयहरः मनोहारी श्रीवत्सः तन्नामा लाञ्छनविशेषः यस्य तस्मिन् । श्रीः वत्से वक्षसि यस्य तस्मिन् सर्वहृद्यं माधुर्यं प्रेमा यस्य तस्मिन् । 'स्वादुप्रियौ तु मधुरौ' इत्यमरः । मायाः धुर्ये श्रीवल्लभे इत्यर्थः । हे हृदय! गतविशयं निस्संशयं यथास्यात्तथा महाविश्वासपूर्वकमिति यावत् । विश प्रविश । कर्मणोऽधिकरणत्वविवक्षया सप्तमी । यं श्रीवल्लभं शेषिणं निरुपाधिकसर्वशेषिणं जानासि । तस्मिन् विशेति योजना । अत्राद्यपादान्त्यभागावस्थितस्य सस्वरव्यञ्जनत्रयस्य द्वितीयपादादिभागे, एवं द्वितीयपादान्त्यभागस्थस्य तृतीयपादादिभागे, तदन्त्यभागस्थस्य तुरीयपादाद्यभागे, तदन्त्यभागावस्थितस्य हृदयेत्यस्य पुनराद्यपादादौ चावृत्तिरिति पूर्वेभ्यो वैचित्र्यविशेषः ॥

यथावा—

**मन्दारैस्संपन्ने संपन्नेतर्नतेऽरिशंखशय । खश-
यस्तुतो विहरसे हरसेव्ये फणिगिरौ समन्दारैः ॥**

नते प्रणते संपन्नेतः संपत्प्रापक हे अरिशंखशय चक्रशंखपाणे भगवन्! मन्दारैः पारिभद्रतरुभिः संपन्ने हरसेव्ये शिवेन सेवनीये फणिगिरौ खशयैः स्वर्गिभिः स्तुतस्सन् दारैस्समं विहरसे । समन्दारैरित्यत्र 'वा पदान्तस्य' इति परसवर्णः । अत्रापि पूर्वपद्यवदेवान्त्यादियमकं द्रष्टव्यम् । दण्डी तु इदं संदष्टयमकमित्याह । यथोक्तं काव्यादर्शे–'संदष्टयमकस्थानमन्तादो पादयोर्द्वयोः' इति ॥

**आलीढभारतरसा नभारतरसाधना भवज्जन-
ता । वितमस्सभारतरसा न भारतरसा भवस्य
खिद्येत ॥ २२८७ ॥**

हे भगवन्! आलीढा आश्रिता भारती भरतखण्डसंबान्धिनी रसा भूः ययासा भरतखण्डजनितेत्यर्थः । भरतखण्डजन्मनस्सर्वपुरुषार्थसौलभ्यस्य भागवताद्युक्तत्वात्तथोक्तिः । भवज्जनता त्वदीयाजनसमूहः । यद्वा भवज्जनता आलीढभारतरसेति योजना । आलीढः आस्वादितः भारतस्य श्रीमन्महाभारतस्य रसः आतिस्वादुतमस्सारभूतोऽर्थः यया सा अधिगतचरमश्लोकसारभूतशरणव्रजनरूपार्थेति यावत् । अतएव नभारतरसाधना । भारतरं अतिगुरु साधनं भक्तिरूपं परमपुरुषार्थसाधकोपायः तत् न विद्यते यस्यास्सा तथोक्ता । नशब्देन बहुव्रीहिः । शरणव्रजनलक्षणलघूपायलाभेनानादृतभक्तिरूपगुरुतरोपाया सतीत्यर्थः । स्वतन्त्रप्रपदननिष्ठेति फलितोऽर्थः । अतएव वितमाश्च सा सभा च

वितमस्सभा 'आदित्यवर्णं तमसः परस्तात् । प्रजापतेस्सभां वेश्म प्रपद्ये' इत्यादिश्रुतिप्रतिपादितमप्राकृतं दिव्यं स्थानं 'सभा सामाजिके गोष्ठ्यां द्यूतमन्दिरयोरपि' इति मेदिनी । तस्यां रतं 'जक्षन्क्रीडन्रममाणः' इत्याम्नातं मुक्तानुभाव्यं क्रीडनं । रमतेर्भावे क्तः । तस्मिन् रसः अनुरागः यस्यास्सा तथोक्ता निश्श्रेयस-साम्राज्यमनुभवन्ती सतीति भावः । भवस्य संसारस्य भारत-रसा भारवेगेन 'रंहस्तरसी तु रयस्स्यदः' इत्यमरः । न खिद्येत । ईदृशामपुनरावृत्तेश्श्रवणात् स्मरणाच्चेति भावः । अत्र पूर्वोत्त-रार्धयोः मध्ये एकरूपतया नकारमात्रव्यवधानेन भारतरसेत्यक्ष-रपञ्चकावृत्तेरन्त्याद्यमकद्वयं संदष्टयमकं च । यमकस्य अय-मकरूपपार्श्वभागाभ्यां संदंशेनेव मध्ये दष्टत्वादिति बोध्यम् ॥

धनिकभवने हयानन धनेहया न न पदं ननु निदध्याम् । त्वद्दत्तमहा विभवं सुमहाविभवमपि किं नु याचेय ॥ २२८८ ॥

ननु हयानन हे हयग्रीव! धनेहया वित्तस्पृहया धनिकानां सत्पात्रासात्कृततया निन्दितधनशालिनां निन्दायां मत्वर्थीयष्ठन् । धनशब्दादुक्त एवार्थे मत्वर्थीये इनिप्रत्यये कुत्सायां कन्वा । भवने पदं चरणं न न निदध्यां नैव निक्षिपेयम् । न नेति वीप्सायां द्विर्भावः । अत्र भये प्रतिज्ञाने वा द्योत्ये वीप्सा । यदाहुः—

प्रतिज्ञायां प्रशंसायां प्रलापे तर्जनेऽपि च ।
भये च विस्मये चैव पौनःपुन्यमलंकृतिः ॥

इति । सामान्यधनिकगृहपदन्यसनवैरस्येऽपि महोदारमहा-राजादियाच्ञायां को दोष इत्यत आह—त्वदित्यादिना । त्वया

दत्तं महः तेजः यस्य स तथोक्तः त्वत्कटाक्षावाप्तलोकोत्तरानित्य-साम्राज्यप्रयुक्तदिव्यतेजश्शालीति भावः। अहं सुमहान् महावदान्यत्वेन सकललोकमाननीयः यः अविभवः भानुसूनुः कर्णः तमपि विभवं अर्थं याचेय किंनु तादृशमपि नार्थयेय किमन्यं वदान्यंमन्यमिति भावः। अत्रापि पूर्ववदेव यमकं, पूर्वोत्तरार्धयोर्विभिन्नरूपत्वं विशेषः॥

भगवन्नयावन्नयासं वन्नयावन्नयां पदोरहीन्द्रगिरेः। साऽहन्ता हन्ता मां हन्ताहन्तां भजेय न पुनरपि ॥ २२८९ ॥

हे भगवन्! अहीन्द्रगिरेः वन्या वनसमूहः तस्याः अवन्यां पदोः चरणयोः यावन्नयासं न्यासपर्यन्तमेव सा स्वस्वरूपभ्रंशयित्री अहंता अहंकारः मां हन्ता नाशयिता हन्तेर्लुट्। हन्तेति भविष्यन्महालाभचिन्तनजनितहर्षे। अहं तां अहन्तां पुनरपि शेषशैलवनभूपदन्यासोत्तरमपि न भजेय विन्देय। भजते संभावनायां लिङ्। अत्राद्यतृतीयपादयोस्सस्वरव्यञ्जनद्वयावृत्तिलक्षणयमकरूपमध्यभागस्तादृशयमकरूप एव द्वितीयतुरीययोः पादयोराद्यभागे आवर्त्यत इति मध्याद्ययमकविशेषः संदंशयमकं च द्रष्टव्यम्॥

ज्ञानं देयं भवता नन्देयं ननु मुकुन्द येनाहम्। किं नाथेय कमपि वा नाथे यत्त्वयि समर्पितात्मभरः ॥ २२९० ॥

ननु मुकुन्द मुक्तिभूप्रद! भवता मह्यमिति शेषः। ज्ञानं त्वद्विषयकमिति भावः। भवतैव देयम् येन ज्ञानेन अहं नन्देयं त्वत्सायुज्यानन्दं प्राप्नुयां 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति

गीतत्वादिति भावः। अन्य एवामुमर्थं प्रार्थयेतामित्यत्राह—किमिति। कं वा त्वदन्यं कमपि वा नाथेय किं याचेय किं किं नाथेयेति वा। मदभीप्सितज्ञानदानापटुमन्यं किं वस्तु प्रार्थयेय। अपेक्षितार्थस्य तस्मादलब्धेरिति भावः। कुत इयं प्रतिज्ञेत्यत्राह—नाथे इत्यादि। यत् यस्मात् नाथे सर्वेश्वरे त्वयि अहं समर्पितात्मभरः त्वयि न्यस्तात्मरक्षाभरस्यान्यनाथनं कथं घटेतेति भावः। यथोक्तं—

तत्पादभक्तिज्ञानाभ्यां फलमन्यत्कदाचन।
न याचेत्पुरुषो विष्णुं याचनान्नश्यति ध्रुवम्॥

इति। अत्राद्यपादमध्यभागस्य द्वितीयपादाद्यभागे आवृत्तिः। तृतीयपादमध्यभागस्य तुरीयपादाद्यभागे इति मध्यादियमकं संदंशयमकभेदश्च॥

**सप्रमदगण्डकैरहिशिखरी सप्रमदगण्डकैर्लसति। दितसारसैरिभैरपि विपुलोदितसारसैरिभैरपिच॥ २२११॥**

सप्रमदैः सस्त्रीकैः सहर्षैर्वा गण्डकैः खड्गमृगैः। 'गण्डके खड्गखड्गिनो' इत्यमरः। सप्रमदाः प्रकृष्टदानोदकसहिताः गण्डाः करटाः यैस्तैः। सप्रमदगण्डकैः 'शेषाद्विभाषा' इति कप्। दितानि छिन्नानि सारसानि पद्मानि यैस्तैः। पद्मविक्षोभिभिरित्यर्थः। 'दितं छितम्' इत्यमरः। इभैः गजैः। विपुलं यथातथा उदितः अतिमात्रप्रवृद्धः सारः बलं येषां तैः विपुलैः महद्भिः उदितसारैरिति वा। सैरिभैः वनमहिषैः अहिशिखरी लसति। अत्र प्रथमतृतीयपादादिभागयोर्द्वितीयतुरीयपादयोर्मध्यभागे आवृत्तेरादिमध्ययमकं संदंशयमकभेदश्च॥

एवमेकपादगतभागानां पादान्तरभागापेक्षा यमकभेदा दिङ्मात्रेणोदाहृताः। अथ एकपादगतभागानामन्योन्यापेक्षा भेदा दिङ्मात्रमुदाह्रियन्ते। यथा—

पायादेषाऽपायाज्जाया शौरेस्सुधाजलधिजा या। छायाया अच्छाया गेयाऽऽस्थानी सुधीभिरविगेया ॥ २२९२ ॥

या अच्छायाः छायायाः कान्तेः आस्थानी सुधीभिः गेया अविगेया केनाप्यनिन्द्या एषा सुधाजलधिजा शौरेः जाया अपायात् पायादिति योजना ॥

यथावा—

कल्याणाम्बुजकल्यायिता मृगाधिपनगाधिपतिदयिता। भाव्याऽमरैश्शुभाऽव्यान्मा तादृशवैभवा जगन्माता ॥ २२९३ ॥

कल्याणमेवाम्बुजं तस्य कल्यायिता प्रभातायमाना 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः। अमरैः भाव्या ध्येया शुभा कल्याणी तादृशवैभवा अवाङ्मनसगोचरैश्वर्या जगन्माता मृगाधिपनगाधिपतेः शेषाद्रीशस्य दयिता मा श्रीः अव्यात् इति योजना ॥

यथावा—

बृन्दारकारिबृन्दास्कन्देशानस्य नतशिवस्कन्दे। विन्दे पदारविन्दे नन्देष्टसुतस्य संभृतानन्दे ॥

बृन्दारकारीणां दैत्यानां बृन्दस्य आस्कन्दे पराभवे ईशानस्य पटीयसः। अन्यत्सुगमम् ॥

यथावा—

विन्देमहि गोविन्दे कन्देऽरिदवस्य भुवनतरु-कन्दे। मन्देतराममन्दे कुन्देड्यरदे रुचिं हृदि मुकुन्दे ॥ २२१५ ॥

अरिदवस्य कन्दे जलदे भुवनतरोः कन्दे मूलभूते 'कन्दस्तु सूरणे सस्यमूले जलधरेऽपि च' इति मेदिनी। अमन्दे पटीयसि कुन्देड्यरदे कुन्दश्लाघ्यदशने मुकुन्दे विषये हृदि रुचिं अभिरतिं विन्देमहीति योजना ॥

यथावा—

दाता धियमवदातां दाताखिलसंशयामसुर-दाता। पाता श्रियमनिपातां पाता कमलाधरस्य मां पाता ॥ २२१६ ॥

अवदातां शुद्धां अतएव दातः छिन्नः अखिलसंशयः यया तां 'दो अवखण्डने' इति धातोः कर्मणि क्तः 'कृत्तं दातम्' इत्यमरः। धियं दाता 'ददामि बुद्धियोगं तं' इति गानात्। अवदाताशब्दो विशुद्धवाची। दातेत्यस्य तृन्नन्तया तद्योगे 'न लोक' इत्यादिना षष्ठीनिषेधः। अनेन तृना भगवतो धीदानताच्छील्यं द्योत्यते। तस्य 'आ केस्तच्छील' इत्यादिना ताच्छील्ये विधानात्। असुराणां दाता छेत्ता। द्यतेस्तृच्। शैषिकषष्ठ्यास्समासः। श्रियं संपदं अनिपातां सतीं पाता रक्षिता। कमलायाः श्रियः अधरस्य पाता रमाधररसास्वादविधाता भगवान् श्रीनिवास इति विशेषणबला-ल्लभ्यते। मां पाता रक्षिष्यति। पाधातोर्लुट्। अत्र पद्यपञ्चकेऽपि

प्रतिपादमादिमभागस्यान्ते आवृत्तिः अन्तिमे तु आद्यचरणादिम-भाग एव तदन्त्यभागे द्वितीयपादाद्यन्तयोश्चावर्त्यते। एवं तृतीयपादाद्यभाग एव तदन्त्यभागे तुरीयपादाद्यन्तयोश्चावर्त्यत इति विशेषः ॥

अथ संकीर्णयमकभेदा दिङ्मात्रमुदाह्रियन्ते।

यथा—

क्रव्यादां तन्वन्तं तन्वन्तं क्रतुभुजश्च धिन्व-
न्तम्। राममभिवीक्ष्य समितौ स मितौजा
रावणोऽपि शमितौजाः ॥ २२१७ ॥

क्रव्यादां क्रव्यादानां तनूनां शरीराणां अन्तं विदधानं क्रतुभुजः देवान् इदं क्रव्यात्प्रतिद्वन्द्वि धिन्वन्तं प्रीणयन्तं च। रामं समितौ संगरे अभिवीक्ष्य सः दुराधर्षतया प्रसिद्धो रावणोऽपि मितौजाः मितं ओजः प्रभावो यस्य स तथोक्तः अतएव शमितौजाः शमितं शान्तिं प्रापितं ओजः दीप्तिः यस्य तथोक्तः अभवदिति शेषः 'ओजः प्रभावे दीप्तौ च' इत्यमरः। अत्र तन्वन्तामिति प्रथमपादान्त्यभागो द्वितीयपादादिभागे समिताविति तृतीयपादान्त्यभागश्चतुर्थपादादिभागे चावर्त्यते। तन्वन्तामित्यस्य मितौजा इत्यस्य च द्वितीयतुरीयपादयोरावृत्तिरपीति संकरः ॥

यथावा—

तरिताऽस्मि भवाब्धिमहं तरिता त्वदपाङ्गकेन
मातरिता। भविता ननु कथमिव मम भविता
निश्श्रेयसं हि संभविता ॥ २२१८ ॥

अहं भवाब्धिं तरितास्मि तरिष्यामि 'तॄ प्लवनतरणयोः' अस्माद्धातोर्लुट्। कथं तरितासीत्यत्राह—हे मातः! तव 'संसारार्णवतारिणीम्' इति प्रसिद्धाया इति भावः। अपाङ्गकेन कटाक्षेण तरिता नौत्वं 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः। इता प्राप्ता। त्वत्कटाक्षे नौत्वमवलम्बमाने कथमहं भवाब्धिं न तरेयमिति भावः। इतः परं मम भविता संसारिता कथमिव भविता भविष्यति। भवतेर्लुट्। कुतो न भवेदित्यत्र उपन्यस्तेऽपि पूर्वं हेतौ दार्ढ्याय हेत्वन्तरं चोपन्यस्यति—हि यतः निश्श्रेयसं मुक्तिः संभविता संभविष्यतीति। अत्र युग्मयोः पादयोराद्यभागस्यान्त्यभागे आवृत्तिरितीदं एकपादगतभागान्योन्यापेक्षं यमकम्। प्रथमतृतीयपादादिभागयोर्द्वितीयतुरीयपादादिभागे आवृत्तिरिति पादान्तरभागापेक्षयमकं चात्र संकीर्णम्। एवमुत्तरत्रापि द्रष्टव्यम्॥

यथावा—

मधुनाशन शुचमधुना मधुना त्वद्दिव्यतरच-
रितमधुना। भवता शुभलाभवता भवतापो मे
निरासि हृदि भवता॥ २२९९॥

शुचं अधुना इति छेदः। हृदिभवता हृदयस्थितेन भवतेति योजना॥

यदि तु न समुद्भवेद्भुवि हृदयालु दयालु तत्परं
ब्रह्म। जगति न समुद्भवेद्भवपतयालुतया लुठन्
जनो जातु॥ २३००॥

तत् हृदयालु परं ब्रह्म दयालु सत् भुवि अस्यां भूमौ यदि तु न समुद्भवेत् अर्चात्मना वेंकटाचलादौ नावतरेच्चेत् भवे संसारे

पतयालुतया पतनेन लुठन् उपावर्तमानः अयं जनः जगति समुत् मुदा सहितः न भवेत् अस्मिन् भुवने न कमप्यानन्दं विन्देदिति भावः। 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इति श्रुत्यर्थच्छायाऽत्रानुसृता। अत्राद्यपादमध्यस्थानां नसमुद्भवे इति सस्वरव्यञ्जनानां तृतीयपादमध्यभागे आवृत्तिः। द्वितीयतुरीयपादयोर्मध्ये दयालु दयालु तयालु तयालु इति यमकविशेषश्च॥

**परिभवहरणं श्रयतोपरिभवहरणं च भगवतश्चरणम्। निलयं तु कदर्याणां निरयं न भजत जनाः कदर्याणाम्॥ २३०१॥**

हे जनाः! परिभवहरणं 'ध्येयं सदा परिभवघ्नमभीष्टदोऽहम्' इति श्रीभागवतोक्तरीत्या सर्वपरिभवनिवारणं उपरि इतःपरं भवस्संसारस्तस्य हरणं च भगवतश्चरणं श्रयत। कदर्याणां—

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत्।
लोभाद्यः पितरौ भ्रातॄन् स कदर्य इति स्मृतः॥

इत्युक्तलक्षणानां कृपणानां कुत्सिताश्च ते अर्याश्च कदर्याः। तेषां अर्याः स्वामिनो वैश्या वा। 'अर्यस्स्वामिवैश्योः' इति निपातनात्साधुः। 'स्यादर्यस्स्वामिवैश्ययोः' इत्यमरः 'कोः कत्तत्पुरुषेऽचि' इति कुशब्दस्य कदादेशः। निलयमेव निरयं नरकं व्यस्तरूपकं न भजत। धनलिप्सया कुत्सितानां राज्ञां विशां धनिनां वा नरकप्रायान् गृहान्मा सेविद्वमिति भावः॥

**कलयामि तां सकलयाऽमितां स कलया**

मितां सदाऽहं याम्। तरसाऽधुनाऽतितरसाधुनाऽ-
तितरसा धुनाति साऽघं श्रीः ॥ २३०२ ॥

कलयामि तां सकलया अमितां सः कलया मितां सदा अहं याम् तरसा अधुना अतितरसाधुना अतितरसा धुनाति सा अघं श्रीः॥ इति छेदः। तां प्रसिद्धां सकलया कलया अमितां मितां ज्ञातां सर्वशास्त्रापरिच्छेद्यमहिमतया ज्ञातामित्यर्थः। यां श्रियं सः दासभूतः अहं सदा कलयामि ध्यायामि सा श्रीः अतितरसा आतितः सातत्येन प्राप्तः रसः कृपारसः यया सा तथोक्ता सती। अतितेत्यत्र 'अत सातत्यगमने' इत्यस्माद्धातोः कर्मणि क्तः। अविश्रान्तकारुण्या सतीत्यर्थः। अतितरश्चासौ साधुश्च अतितरसाधुः तेन महाश्रेष्ठेनेत्यर्थः। अतिशब्दो वृत्तिविषये द्रव्यवचनः तेन 'अव्ययघादाम्वद्रव्यप्रकर्षे' इति अद्रव्यप्रकर्षार्थविहितस्यामोऽत्र न प्रसक्तिः। तरसा वेगेन निरवधिकवेगेनेत्यर्थः। अधुना अद्यैव अघं पाप्मानं धुनाति कम्पयति। उक्तविशेषणविशिष्टां श्रियं ध्यायतो मम सद्य एव पूर्वोत्तराघविनाशाश्लेषौ भवत इति भावः॥

दण्डी तु-प्रातिलोम्येन पादाद्यावृत्तौ प्रतिलोमयमकमित्यभाणत्। तथाच तल्लक्षणम्—

आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा।
यमकप्रातिलोमत्वात्प्रतिलोममिति स्मृतम्॥

इति। यत्र पूर्वपादस्य प्रतिलोमावृत्त्या उत्तरपादः, पूर्वार्धस्य प्रतिलोमावृत्त्या उत्तरार्धं, एकस्य श्लोकस्य प्रतिलोमावृत्त्या श्लोकान्तरं च निष्पद्यते तत्प्रतिलोमयमकमिति तदर्थः। अयमनुलोमप्रतिलोमचित्रभेद इत्यन्ये। पादभागप्रातिलोम्येऽपीदं दृश्यते। अत्रा-

र्यावृत्तिविशेषैरेव उदाहरणप्रदर्शनस्य प्रतिश्रुततया तेषामसमगण-पादतया पादप्रातिलोम्यस्य दुर्घटत्वेन पादभागार्धश्लोकप्रातिलो-म्यावृत्तिः प्रदर्श्यते ॥

तत्र पादभागप्रातिलोम्यावृत्तिर्यथा—

**सरसाशय यशसा रस इति विदितो वित-मसि स्थितो यस्स्थाने । वनमालाली लीलामा-नव राम त्वयाऽमुनाऽवाप्ताऽहो ॥ २३०३ ॥**

सरसः आशयः अभिप्रायो यस्य तस्य संबुद्धिः । हे लीला-मानव स्वेच्छागृहीतमानुषविग्रह हे राम! यः त्वं रस इति 'रसो वै सः' इति श्रुतानन्दमयरूप इति यशसा विदितस्सन् वितमसि स्थाने परमे व्योम्नि स्थितोऽसि । अमुना ईदृशेन त्वया वनमाला-नां काननच्छटानां आली श्रेणी प्राप्ता अहो अप्राकृतदिव्यधामाव-स्थितस्य प्राकृतदण्डकारण्यावाप्तिराश्चर्यावहेति भावः । अत्र प्रथमतृतीयपादभागयोस्ससस्वरव्यञ्जनपञ्चकयोः प्रातिलोम्येन यम-कविशेषः॥

**गर्ह्यं जनयन्नयनं प्रभविष्यति तिष्यविभव एव हरे । तव नाम्नामाम्नानादपरा न नरापदपनयेऽस्ति गतिः ॥ २३०४ ॥**

हे हरे! गर्ह्यं निन्द्यं अयनं मार्गं जनयन् जनानमार्गे प्रवर्तय-न्नित्यर्थः । तिष्यस्य कलेः 'तिष्यः पुष्ये कलियुगे' इत्यमरः । विभव एव प्रभविष्यति प्रभुतां प्रपत्स्यत इत्यर्थः । नात्र युगे याग-दानतपःप्रभृत्युपायानुष्ठानावकाश इति भावः । तर्हि कथं दोषनि-स्तार इत्यत आह—तव 'हरिर्हरति पापानि' इति प्राख्यातादि-

ध्यानान्न इति भावः नाम्नां आम्नानात् अभ्यासात् अपरा अन्या नराणां मानवानां विपदः संस्मृतिरूपापदः अपनयने उत्सारणे गतिः उपायः नास्ति त्वन्नामसंकीर्तनमेव विपदुत्तरणोपाय इत्यर्थः। यथोच्यते—

कलेर्दोषनिधे राजान्नस्ति ह्येको महान्गुणः।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥

इति। अत्राद्यतृतीयपादयोरन्ते वर्णत्रितयस्य एकान्तरिततया परिवर्तनम्। द्वितीयतुरीययोस्तु अव्यवहिततया वर्णचतुष्टयस्येति बोध्यम् ॥

अर्धस्य प्रातिलोम्येनावृत्तिर्यथा—

सा भायादनघतरा कान्ताशाऽतीव जनवरामोदा। दामोरा वनजवती शान्ताकाऽऽरातघनदया भासा ॥ २३०५ ॥

सा भायात् अनघतरा कान्ताशा अतीव जनवरामोदा दामोराः वनजवती शान्ताका आरातघनदया भासा। इति पदच्छेदः। अनघतरा अपहतपाप्मा कान्ताशा कान्ते वल्लभे भगवति आशा अभिलाषो यस्यास्सा भगवद्विषयकनिरतिशयप्रीतिशालिनीति भावः। यद्वा आशः व्याप्तिः 'अशू व्याप्तौ' भावे घञ्। कान्तस्य आश इव आशो यस्यास्सा 'त्वया च विष्णुना चाम्ब जगद्व्याप्तं चराचरम्' इत्युक्तेः। अतीव अतिमात्रं जनवरामोदा जनवराणां नरश्रेष्ठानां आमोदा आमोदयित्री आङ्पूर्वकान्मोदयतेः पचाद्यच्। यद्वा वरः आमोदः प्रीतिर्यस्यास्सा जनेषु वरामोदा निरतिशयप्रीतिरित्यर्थः। अथवा वरैः तत्तदभिलाषितैर्वरैः आमोदा आमोदयित्री जननां वरामोदा दामोराः दाम कुसुममाल्यं उरसि यस्यास्सा

दामोराः अतएव 'महामालाविभूषणा' इति तन्नाम। 'उरःप्रभृतिभ्यः कप्' इति कप् न भवति, समासान्तविधेरनित्यत्वात् । तथा- च मुरारिप्रयोगः 'आपूर्यमाणोरसम्' इति। वनजवती वनजं अब्जं अस्या अस्तीति तथोक्ता पद्मिनीत्यर्थः। 'पद्मे स्थितां, पद्मप्रिये पद्मिनि पद्महस्ते' इत्यादिप्रमाणात्। शान्तं अकं आश्रितानां पापं दुःखं वा यया सा शान्ताका। 'अकं पापे च दुःखे च' इति विश्वः। आरातघनदया आराता आत्ता 'रा आदाने' इत्यस्माद्धातोः कर्मणि क्तः। घना सान्द्रा दया यस्यास्सा। सा प्रसिद्धा श्रीरि- त्यर्थः। भासा प्रभावेन 'भाः प्रभावे च दीप्तौ च' इति मेदिनी। भायात् प्रकाशताम् । सा भायादित्यत्र मा भायादिति पाठे मा भायात् इति छेदः । तुरीयपादान्ते दयाभासेत्यत्र दयाभा- मेति पाठे आरातघनदया भामेति वा आरातघनदयाभा मा इति वा छेदः। आरातघनदया उक्तोऽर्थः। द्वितीयपक्षे तु—आराते आत्ते घने दया च आभा च दयाभे यस्यास्सा मा इदं विशेष्यं लक्ष्मीरित्यर्थः। मा मां प्रति भायात् प्रकाशतां मयि संनिधत्ता- मिति यावत् ॥

श्लोकस्य प्रातिलोम्यं यथा—

वैताने भुवि जनिता मा तारारामदमनयो-
ज्याज्ञा। मानातिगाविभवनदी दासावनसारसर-
सनयनाभा ॥ २३०६ ॥

भानायनसरसरसाऽनवसादाऽऽदीनवभाविग-
तिनामा। ज्ञा ज्यायो नमदमरा राता माता
निजविभुनेता वै ॥ २३०७ ॥

वैताने भुवि जनिता मा तारारामदमनयोज्याज्ञा मानातिग-विभवनदी दासावनसारसरसनयनाभा भानायनसरसरसा अन-वसादा आदीनवभविगतिनामा ज्ञा ज्यायः नमदमरा राता माता निजविभुना इता वै । इति पद्यद्वयपदच्छेदः । वैताने वितान-संबन्धिनि कर्मणीति यावत् । यज्ञियभूकर्षणावसरे इति भावः । भुवि भूमौ जनिता मा श्रीः इदं विशेष्यम् । तारारामदमनयो-ज्याज्ञा । तारायाः रामः रमणः वालीत्यर्थः । तस्य दमनः दण्ड-यिता भगवान् दाशरथिः तस्मिन् योज्या योजनीया आज्ञा शासनं यस्यास्सा तस्य तदाज्ञानुवर्तितायाश्श्रीरामायणे प्रसिद्धत्वात् । मानातिगविभवनदी मानातिगः वेलातीतः यो विभवः वैभवः तस्य नदी आश्रयभूतेति यावत् । भगवत्यां नदीत्वरूपणेनारूपितमपि विभवस्य सलिलत्वं प्रतीयत इत्येकदेशविवर्तिरूपकविशेषः । अत एव 'महाविभववाहिनी' इति तन्नामसहस्रे पठ्यते । दासावनसार-सरसनयनाभा दासानां किंकराणां अवने रक्षणे विषये सारा श्रेष्ठा सरसा सदया नयनाभा लोचनश्रीः यस्यास्तथोक्ता । भानायनस-रसरसा भानस्य प्रकाशस्य भातेर्भावे ल्युट् । अयनं मार्गः आश्रय इति यावत् । तादृशो यस्सरः हारः तेन सरसा रमणीयेति यावत् । अनवसादा अविद्यमानः अवसादः कार्श्यं यस्यास्सा । आदीनवभविगतिनामा आदीनवः क्लेशः 'आदीनवास्रवौ क्लेशे' इत्यमरः । आदीनवयुक्तानां भविनां संसारिणां गतिः गम्यत इति गतिः कर्मणि क्तिन् । प्राप्यं नाम यस्यास्तथोक्ता तापत्रयदूषित-संसारिजनानुसंधयनामधेयेति भावः । ज्ञा विदुषी सर्वज्ञेत्यर्थः । अत एव 'सर्वज्ञा कमलप्रभा' इति तन्नामसु पठन्ति । ज्यायः इद-मुत्तरत्रान्वेति । नमदमरा नमन्तः अमराः यां तथोक्ता । निजवि-भुना स्ववल्लभेन भगवता इता युक्ता ज्यायः श्रेयः अतिप्रशस्यमे-

श्वर्यमित्यर्थः। प्रशस्यशब्दादीयसुनि तस्य 'ज्य च' इति ज्यादेशः। राता दास्यति। 'रा दाने' लुट्। वै इति प्रसिद्धौ। एवं यमकादिगुदाहृता॥

अथ पुनरुक्तवदाभासः.

पुनरुक्तवदाभाति यत्रार्थो न तु वस्तुतः।
पुनरुक्तवदाभासस्स नामाख्यातगोचरः॥

यत्रार्थः पुनरुक्तवदाभाति ईषद्भाति अनन्वितमिव आमुखेऽवभासते। वस्तुतः परमार्थतस्तु अन्वयवेलायामन्यथैव भवति स पुनरुक्तवदाभासो नामालंकारः। अयं च नामावलम्बी अख्यातावलम्बी चेति द्विविधः। अर्थालंकारत्वेऽप्यस्य शब्दपौनरुक्त्यावलम्बितया शब्दालङ्कारप्रस्तावे लक्षणोक्तिः। तत्र नामाश्रयो यथा—

फणिधरणिभृदचलस्थितिघृणिमन्मित्रप्रभाकरमुदारम्। मणिरत्नघनोरस्कं प्रणिदध्यां किमपि दैवतं सततम्॥ २३०८॥

फणिधरणिभृत् भुजगराजः स चासौ अचलो गिरिः तस्मिन् स्थितिः यस्य तत् घृणिमान् भानुः तस्य मित्रं तत्तुल्या या प्रभा तस्याः आकरम्। मणिरत्नं मणिश्रेष्ठः 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः। तेन घनोरस्कम्। अत्र धरणिभृदादीनां अचलादिपर्यायपदप्रयोगेण आमुखे अवभासमानस्य पौनरुक्त्यस्य उक्तप्रकारेणान्वयावसरे अन्यथापर्यवसानात्पुनरुक्तवदाभासोऽयं नामाश्रयः॥

आख्याताश्रयो यथा—

दीव्यति भाति विराजति दिननाथसदृक्प्रकाश

ते कमला । भवतीष्टे प्रभवति ननु भगवन्नहिनग-
वसुंधराभरण ॥ २३०९ ॥

दिननाथसदृक्प्रकाश अहिनगवसुंधराभरण ननु हे भगवन्! ते तव कमला ते इति 'लक्ष्मीपते तेऽङ्घ्रियुगम्' इत्यत्रेव विभक्तिप्रतिरूपकमव्ययम्। न तु युष्मच्छब्दस्य 'ते मयौ' इति विहितस्ते इत्यादेशः दिननाथसदृक्प्रकाशेत्यामन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवद्भावेन पादादित्वात् तस्य चादेशस्य 'पदस्य पदात्'। अनुदात्तं सर्वमपादादौ' इत्यपादादावेव विधानात् ते कमलेत्यनेन 'सदा तवैवोचितया तव श्रिया' इत्यत्रेव 'विष्णोः श्रीरनपायिनी' इत्यादिप्रसिद्धं नित्यव्यवस्थितपतिपारार्थ्यं प्रतिष्ठाप्यते। दीव्यति क्रीडां विदधाने भाति प्रकाशमाने प्रभवति प्रभविष्णौ इष्टे प्रिये भवति त्वयि विराजति भासते। अत्र दीव्यति भाति विराजति प्रकाशते इत्येतेषां ईष्टे प्रभवतीत्यनयोश्च आमुखे एकार्थकाख्यातवदाभासमानतया पौनरुक्त्यस्य उपपादितरीत्यान्वयसमयेऽन्यथा पर्यवसितत्वेनाख्याताश्रयोऽयं पुनरुक्तवदाभास इति बोध्यम्। काव्यप्रकाशकारमते तु—

शब्दैकनिष्ठश्शब्दार्थद्वयस्थश्चेत्यसौ द्विधा ।
सभङ्गाभङ्गभेदेन द्विधा शब्दैकसंश्रयः ॥

असौ पुनरुक्तवदाभासः शब्दमात्रसमाश्रयः शब्दार्थोभयसमाश्रयश्चेति द्विविधः। तत्राद्यश्शब्दमात्राश्रयस्तु सभङ्गः अभङ्ग इति द्विविधः।तत्र सभङ्गः पुनरुक्तवदाभासश्शब्दैकगोचरो यथा—

स्नेहेन हरे त्वय्यव लिप्तोऽहंकृतमातिश्चिरादभ-

वम् । बहुधा महितं तेऽज स्थानं मे स्यात्कथं नु दुष्प्रापम् ॥ २३१० ॥

हे हरे ! अव रक्ष । त्वयि विषये स्नेहेन प्रेम्णैव तैलादिरसद्रव्येण लिप्तः दिग्धः चिरात् बहोः कालात् अभवम् । बहुधा महितं ते अजेति छेदः । हे अज! भगवन् बहुधा बहुप्रकारेण महितं पूजितं ते तव स्थानं परमं व्योम कथं नु दुष्प्रापम् एवं त्वयि संजातानुरागस्य सुप्रापमेव स्यादित्यर्थः । अत्रावलिप्तोऽहंकृत इत्यत्र बहुधामहितं तेजस्थनामित्यत्र च अवलिप्ताहंकृतशब्दयोः धामतेजश्शब्दयोश्चैकार्थतया भासमानयोरनयोरुक्तरीत्या पदभङ्गेन भिन्नार्थयोर्निबन्धनात्सभङ्गः पुनरुक्तवदाभासः ॥

अभङ्गो यथा—

वाकपतिगुरुसौम्यबुधश्लाघ्योऽच्युत भौममङ्गळनिधानम् । भानुसुतमन्दतावहपरमौदार्यश्चकास्ति भवदीयः ॥ २३११ ॥

हे अच्युत! भवदीयः भवदनुग्रहगोचरो मनुजः वाकपतयः वावदूकाः गुरवः श्रेष्ठाः सौम्यः अरौद्राश्च ये बुधाः विपश्चितः तैः श्लाघ्यः । भूमेरिदं भौमं यत् मङ्गळं कल्याणं तस्य निधानं आधारः । भानुसुतस्य कर्णस्य मन्दतावहं अल्पत्वसंपादकं ततोऽप्यतिशयितमित्यर्थः । तादृशं परमौदार्यं यस्य तथोक्तः चकास्ति । अत्र वाकपतिगुरुशब्दयोः सौम्यबुधशब्दयोः भौममङ्गळशब्दयोः भानुसुतमन्दशब्दयोश्च बृहस्पतिरौहिणेयाङ्गारकशनैश्चररूपैकार्थतावभास उक्तरीत्या अभङ्गपदाश्रय इति ध्येयम् ॥

शब्दार्थोभयाश्रयो यथा—

तपनीयसुवर्णाङ्गीं घनजलदसनाभिरुचिरकचबन्धाम् । लक्ष्मीं प्रभामुदारां महतीं श्रीवास वासय कुले मे ॥ २३१२ ॥

तपनीयं काञ्चनमिव सुवर्णं शोभनवर्णं अङ्गं यस्यास्तां 'हिरण्यवर्णाम्' इति श्रुतेः । घनः सान्द्रः यः जलदः तस्य सनाभिः सगोत्रः तत्सदृश इति यावत् । रुचिरः कचबन्धो यस्यास्तां उदारां वदान्यां 'देवजुष्टामुदाराम्' इति श्रुतेः । 'उदारो दातृमहतोः' इत्यमरः महतीं पूज्यां मह्यते पूज्यत इति व्युत्पत्तेः । प्रभां प्रकृष्टा भा दीप्तिर्यस्यास्तां लक्ष्मीं हे श्रीनिवास! इदं तन्निवासनौपयिकताभिप्रायगर्भम् । मे कुले संताने गृहे च वासय । अनेन 'श्रियं वासय मे कुले' इति श्रुतिः प्रत्यभिज्ञाप्यते । अत्र सुवर्णघनप्रभोदाराशब्दानां पर्यायासहिष्णुतया शब्दाश्रयत्वम् । तपनीयजलदलक्ष्मीमहतीशब्दानां गाङ्गेयमुदिरकमलापूज्यादिपदान्तरसहिष्णुतयाऽर्थाश्रयत्वमित्युभयाश्रितत्वं पुनरुक्तवदाभासस्येति विज्ञेयम् ॥

## अथापशब्दवदाभासः

निवर्तते साधुभावज्ञानाद्यत्रापशब्दधीः ।
अपशब्दवदाभासस्सोऽलंकारो निगद्यते ॥

यथा—

हरिणो यस्य यशोभिर्व्याप्तो लोकः पयोनिधीयति तम् । शरणं व्रजेयमीशं स्वयंभुवं शंभुवं रमाधिभुवम् ॥ २३१३ ॥

यस्य यशोभिः व्याप्तो लोकः हरिणः पाण्डुरस्सन् पयोनिधीयति आत्मानं क्षीराब्धिमिवाचरति। पयोनिधिशब्दात् 'उपमानादाचारे' इति क्यच्। तं स्वयंभुवं अनितरकारणकं शंभुवं सुखभूमिं ईशं सर्वेश्वरं रमाधिभुवं श्रीवल्लभं शरणं व्रजेयमिति योजना। अत्र हरिण इति प्रथमान्तस्य यस्येति षष्ठ्यन्तपदसमभिव्याहारात् करिण इतिवत् षष्ठ्यन्ततया पयोनिधीयतीत्यत्र पय इति च्छेदेन निधीयतीति निपूर्वकाद्धाञः कर्मणि परस्मैपदितया व्रजेयमित्यत्र व्रजे अयमिति च्छेदेन व्रजतेरात्मनेपदितया शंभुवमित्यत्र समभिव्याहृतस्वयंभुवमितिवत् उवङादेशवत्तया चापशब्दत्वेनावभासादपशब्दवदाभासत्वम् ॥

यथावा—

**श्रीनाथोऽर्थिजनानामभीष्टदानाय कल्पति वृषाद्रौ। प्रत्यर्थिजनानामप्यनिष्टदानाय कल्पति नितान्तम् ॥ २३१४ ॥**

पूर्वार्धे कल्पति कल्पतरुरिवाचरति। उत्तरार्धे कल्पति कल्पः प्रलय इवाचरतीत्यर्थः। 'कल्पस्तु प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ। सुरद्रुमे विकल्पे च प्रत्ययश्चेत्समार्थता' इति रत्नमाला। अत्र कल्पतीति कॢपधातोः परस्मैपदवदवभासादपशब्दाभासत्वं, तस्य नित्यमात्मनेपदित्वात् ॥



### अथाऽन्वयाभासः

पदानां सुप्तिङन्तानामन्यार्थानां निगुम्भने ।
यथाऽन्वयवदाभासश्चित्रं तन्नाम तद्विदुः ॥

यथा—

सद्वारेनोहन्ता बहुधाभूयस्स्वधामवन्नामा । दो-
षातीतस्सुदिवाऽऽसमयासमयावनोद्यतः प्रापि ॥

सद्वारेनोहन्ता द्वारा सह वर्तत इति सद्वाः' रेफान्तोऽयं शब्दः। यत् पुनः अघं 'कलुषं वृजिनैनोघम्' इत्यमरः। अविद्यारागद्वेषादिकारणकं पापमित्यर्थः। तस्य हन्ता निरासकः। स्वोपासकसमूलपूर्वोत्तराघनिराकरणधुरीण इत्यर्थः। तत्र हेतुमाभिप्रयन्नाह—बह्विति। बहु चेतनाचेतनात्मना बहुप्रकारं विश्वं दधाति धारयति पुष्णाति चेति बहुधाः। आदन्तोऽयं विश्वपा इतिवत्। भूयः अतिशयेन बहु स्वधाम स्वाभाविकः प्रभावः। 'गृहदेहात्विट्प्रभावा धामानि' इत्यमरः। तदस्यास्तीति तद्वत् नाम अभिधानं यस्य स तथोक्तः। धारकत्वात्पोषकत्वान्महामहिमनामवत्त्वाच्चास्य सकलदुरितानां समूलघातं हन्तृत्वमिति भावः। अतएव दोषातीतः दोषान् अतीतः 'द्वितीया श्रितातीत' इत्यादिना समासः अपहतपाप्मा 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इत्यादिश्रुत्यर्थोऽत्रानुसंधेयः। यद्वा भूयांसि स्वधामवन्ति तत्तच्छरीरवन्ति तत्तद्रूपवन्ति वा नामानि देवमनुष्यादिनामानि यस्य बहुधा इत्यनेनात्मत्वं अनेन तु नामरूपव्याकरणपूर्वकतत्तच्छरीरप्रवेशप्रयुक्ततत्तन्नामरूपभाक्त्वं च दर्शितम्। सुष्ठु दीव्यतीति सुदिवा। स्वाभावि-

कज्ञानानन्दादिकल्याणगुणवत्तथा प्रकाशमान इत्यर्थः । तत्तद्देवादि-शरीरानुप्रविष्टत्वेऽपि तत्कृततदीयदोषासंस्पृष्टत्वमनेन द्योतितम् । यत्सूत्रितं 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' इति । मया श्रिया। अत्र य इत्यध्याहार्यमुत्तरत्र स इति दर्शनात् । आस दिदीपे । दीप्त्यर्थकादसेर्लिट् । स्वाभाविकनिरवधिकदीप्तियुक्त एव यो भगवान् हेम्नेव मणिश्श्रिया विशेषतो दीप्यत इति भावः । अवने रक्षणे उद्यतः उद्युक्तः 'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' । इत्युक्तेः । सः पूर्वोक्तगुणशाली भगवान् मया शेषभूतेनेति भावः । प्रापि प्रापद्यत प्रपूर्वकादाप्नोतेः कर्मणि लुङि च्चिण् ॥

अत्र पद्ये सत् वा रे नो हन्त आ बहुधा भूयः स्वधा आम वत् न अमा दोषा अति इतः सु दिवा समयासमया अव न उत् यतः प्र अपि इत्यव्ययपरंपराया आभासः । समयासमयेति द्विरुक्ताव्ययस्याभास इति द्रष्टव्यम् ॥

---

अथ तिङन्तवदाभासः

यत्राभासस्तिङन्तानां स्यादर्थान्तरगैः पदैः ।
तत्तिङन्तवदाभासाचित्रं चित्रज्ञसम्मतम् ॥

यथावा—

भवतापहर जयावह पापानि भवे दवेस्स्य परिलुठतः । प्रेमोदधे प्रभविता भवतो वातीतरो न चेतस्तः ॥ २३१६ ॥

भवतापस्य हरः तस्य संबुद्धिः । जयावह आश्रितोत्कर्ष-दायिन् प्रेमा प्रियत्वं तस्य उदधे निरतिशयप्रियेत्यर्थः । 'प्रियो

हि ध्यानिनोऽत्यर्थमहम्' इति हि तेन गीयते। भवे संसारे एव दवे वनानले कान्तारे वा व्यस्तरूपकं परिलुठतः ममेति शेषः। पापानि अस्य निराकुरु। अस्यतेर्दैवादिकाल्लोण्मध्यमैकवचनम्। कुतो मामेव निर्बध्नासीत्यत आह—प्रभवितेत्यादि। भवतः त्वत्तोऽपि इतरः अन्यः प्रभविता पापहरणकर्मणि प्रभुः समर्थ इत्यर्थः। ममेति शेषः। चेतस्तः चित्तं द्वितीयायास्सार्वविभक्तिकस्तसिः। न याति न गच्छति। यातेर्गत्यर्थकाद्दादादिकाल्लट्। त्वत्तोऽन्यः पापनिर्वापणधुरीणः मच्चित्तगोचरतां न यातीत्यर्थः। 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः' इत्यादिवचनादिति भावः। अतस्त्वमेव मे पापानि निराकुर्वित्यर्थः। अत्रान्यार्थकपदानुपूर्व्या तिङन्तानां पदानामाभासनात्तिङन्तवदाभासनमिदं चित्रमस्मदुपज्ञम्॥

भवत आप हर जय आवह पापानि भवेत् अवेः स्य परिलुठतः प्रेमः दधे प्रभविता भवतः अव अतीतरः अन चेत स्तः॥ इति छेदे एकोनविंशतिस्तिङन्तपदान्याभासन्ते इति सावधानं विभावनीयम्॥

---

## अथ गूढपादचित्रम्

**अन्यपादगता वर्णा गूढाः पादान्तरेषु चेत्।**
**चित्रं तद्गूढपादाख्यं चतुर्धाऽऽद्यादिगूहनात्॥**

अन्यपादस्थितानां वर्णानां पादान्तरेषु गूहने गूढपादं नाम चित्रम्। तच्च प्रथमादीनां चतुर्णां पादानामेकैकश्येन गूहनाच्चतुर्धा भवति गूढप्रथमं गूढद्वितीयमित्यादिप्रकारेण॥

तत्र गूढप्रथमं यथा—

अशिथिलगुणानुबन्धां शिथिलितवन्दारुबृन्द-
भवबन्धाम्। अविकलसदवनसन्धां विनुवन्प्रगुणां
श्रियं जन इहेन्धाम् ॥२३१७॥

अविकला सदवने साधुरक्षणविषये सन्धा प्रतिज्ञा यस्या-
स्ताम्। प्रगुणां ऋजुप्रकृतिं आर्जवं च मनोवाक्कर्मणामैकरूप्यं 'ऋजा-
वजिह्मप्रगुणौ' इत्यमरः। श्रियं विनुवन् अभिष्टुवन् जनः इन्धां
ऐश्वर्यादिभिर्दीप्यताम्। अत्र प्रथमपादवर्णा अवशिष्टपादेषु गूढाः॥

गूढद्वितीयं यथा—

भव्याब्जभानुमाली भाव्याकृतिरादधाति वन-
माली। स्तवनकृदखिलबुधालीधृतिं मुरारातिर-
नघगुणशाली ॥ २३१८ ॥

भव्यं जगतां क्षेममेव अब्जं तस्य भानुमाली। भाव्या ध्या-
नार्हा आकृतिः यस्य सः अनघगुणशाली मुरारातिः स्तवनकृतां
अखिलबुधानां आल्याः पङ्क्तेः धृतिं धैर्यं धारणं वा आदधातीति
योजना। अत्र द्वितीयपादवर्णाः पादान्तरेषु गूढाः॥

गूढतृतीयं यथा—

विजिगीषतां दिविषदां स्वाराज्यश्रीर्यया पुरा
जुगुपे। श्रीर्मा देवी जुषतां सा देशिकवीक्षणात्त-
शर्माणम् ॥ २३१९ ॥

देशिकानां आचार्याणां वीक्षणात् कटाक्षात् आत्तं शर्म सुखं येन तं मा मां श्रीः देवी जुषतां सेवतां । अत्र 'श्रीर्मा देवी जुषताम्' इति श्रुतिवाक्यमेव तृतीयपादत्वेनोपात्तं तदेव पादान्तरेषु गोपितमिति गूढतृतीयमिदम् ॥

गूढचतुर्थं यथा—

काकोदराचलौका लोकाभीष्टार्थदिविजभूमिरुहः । ललनोरस्कः पायात् जलरुहदललोचनोऽपायात् ॥ २३२० ॥

दिविजभूमिरुहः कल्पतरुः अपायात् पायादिति योजना । अत्र तुरीयपाद आद्यपादत्रितये गोपितः । गोपितानां पादवर्णानां नात्र क्रमनैयत्यमिति ध्येयम् ॥

---

## अथ क्रियावञ्चनचित्रम्

क्रियादिकं विद्यमानमपि संदर्भकौशलात् ।
स्पष्टं न दृश्यते चेत्तत्क्रियादेर्वञ्चनं विदुः ॥

पद्ये विद्यमानमपि क्रियादिकं आदिशब्देन कारकसंबन्धामन्त्रणादेस्संग्रहः । पदसंदर्भचातुर्यात् स्फुटं न दृश्यतेचेत् तत्क्रियादिवञ्चनं नाम चित्रम् ॥

यथा—

कमलाक्ष तव कटाक्षाः कृतहृदयग्रन्थिबन्धपरिमोक्षाः । विशयमवश्यन्त्वखिलं विशदमवर्धंतु सर्वकर्म च मे ॥ २३२१ ॥

हृदयस्य ग्रन्थिबन्धः ग्रन्थिबन्धवद्दुर्मोचो रागादिः तस्य परिमोक्षः कृतो यैस्तथोक्ताः तव कटाक्षाः अखिलं विशयं संशयं अवश्यन्तु तनूकुर्वन्तु । छिन्दन्त्विति यावत् । विशदं स्पष्टं यथास्यात्तथा मे मम सर्वकर्म च अवद्यन्तु अवखण्डयन्तु क्षपयन्त्वित्यर्थः । अत्र—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इति श्रुत्यर्थोऽनुसंहितः । अवश्यन्तु अवद्यन्तु इत्यत्र 'शो तनूकरणे' 'दो अवखण्डने' इति च दैवादिकाद्धातोर्लोट् । अत्रावश्यमिति अवद्यमिति च सुबन्तभ्रमजननेन क्रिययोर्वञ्चनम् ॥

यथावा—

**भगवदुरो या जगतां भद्राय निकाममनुपमेयाय । सा पावनगुणभूमा पापातु रमाऽऽर्तमनघकरुणा माम् ॥ २३२२ ॥**

अनुपमा असदृक् लोकोत्तरेत्यर्थः या रमा लक्ष्मीः जगतां भद्राय क्षेमाय भगवदुरः इयाय ययौ । इणः कर्तरि लिट् प्रथमैकवचनम् । पावनः गुणभूमा यस्यास्सा अनघकरुणा सा रमा मां पापातु भृशं पातु । 'पा रक्षणे' अस्माद्यङ्लुकि लोट् । अत्र अनुपमेयायेत्यत्र भद्रायेत्येतद्विशेषणं चतुर्थ्यन्तामिति, पापातु रमार्तामित्यत्र मामित्यस्य विशेषणं पापातुरं आर्तामिति द्वितीयान्तपदद्वयमिति भ्रमजननेन इयाय पापातु इति क्रिययोर्विवक्षितयोर्वञ्चनमिति ध्येयम् ॥

यथावा—

शुद्धस्वभावमाशु त्वत्तोऽवेदप्रसिद्धिमान्कोऽन्यः। दुरितं निरस्य शौरे यस्य च मम तव पदे निधानाय ॥२३२३॥

अत्र अव अवेत् निरस्य यस्य इति क्रियाचतुष्टयस्य वञ्चनम्। शुद्धस्वभ! स्वयंप्रकाशस्वरूपेत्यर्थः। हे शौरे! मा मां आशु अव रक्ष। प्रसिद्धिमान्न भवतीत्यप्रसिद्धिमान्। सर्वेश्वरत्वादिप्रसिद्धिविधुरः अन्यः इतरः कः अवेत् रक्षेत् 'न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्' इत्यादिप्रमाणादिति भावः। मम दुरितं निरस्य निश्शेषय। निरित्युपसर्गपूर्वकादस्यतेः दैवादिकात्क्षेपणार्थकाल्लोण्मध्यमैकवचनम्। तव पदे दिव्ये स्थाने मम निधानाय स्थापनाय यस्य प्रयतस्व। 'यसु प्रयत्ने' दैवादिकादस्माल्लोण्मध्यमः॥

आमन्त्रणवञ्चनं यथा—

विभवेताहृशि तव पदि निहितभरो नित्यसूरिसदसोऽहम्। कैङ्कर्यमनुपमं त्वयि विधातरीशे सदा विधातुमलम् ॥२३२४॥

विभो एताहृशीति विधातः ईशे इति च छेदः। हे विधातः जगत्स्रष्टः 'एष धाता विधाता च। आधातारं विधातारम्' इत्युक्तेः एताहृशि एवंविधमहामहिमास्पदे तव पदि पादे निहितभरः अर्पितात्मरक्षाभरः नित्यसूरिसदसः अनन्तगरुडविष्वक्सेनादिनित्यसूरिपरिषदः अर्हः अतएव अनुपमं कैङ्कर्यं शेषवृत्तिं सदा विधातुं ईशे समर्थो भवामि। अत्र विभवेताहृशीत्यानुपूर्व्या विशेष्यवि-

शेषणभावापन्नसप्तम्यन्तपदद्वयभ्रमजननात् विभो इति संबुद्धिर्वे- ञ्चिता । एवं विधातरीशे इत्यानुपूर्व्या समभिव्याहृतत्वयीति सप्त- म्यन्तविशेषणताभ्रमोत्पादनेन विधातरिति संबुद्धेश्च वञ्चनमित्या- मन्त्रणवञ्चनं नाम चित्रम् । एवमेव ईशे इति पदस्याप्युक्तविध- भ्रान्तिसंपादकतया क्रियावञ्चनं चाभ्युह्यीयते ॥

---

अथ सप्तविभक्तिवञ्चनाचित्रम्

यत्रैकस्यैव शब्दस्य गुप्तास्सप्त विभक्तयः ।
तत्र सप्तविभक्तीनां वञ्चनं चित्रमुच्यते ॥

यथावा—

भातीदृशी मयेयं जगतीष्टे या समर्पितस्वायै ।
जनताया आधत्ते श्रियस्स्तुता या मनोऽनुभवति
च याम् ॥२३२५॥

भाति ईदृशी मया इयं जगती ईष्टे या समर्पितस्वायै जनतायै आधत्ते श्रियः स्तुताः याः मनः अनुभवति च याम् इति छेदः । जनताया आधत्ते इत्यत्र ऐकारस्य आकारे परे 'एचोयवायावः' इत्यायादेशे 'लोपः शाकल्यस्य, इति यलोपः तस्यासिद्धत्वान्न स्वरसन्धिः । इयं जगती लोकः 'अथो जगती लोकः' इत्यमरः । मया लक्ष्म्या हेतौ तृतीया । ईदृशी परिदृश्यमानैवंविधविविध- विचित्रभोक्तृभोग्यभोगोपकरणभोगस्थानादिसमृद्धिशालिनी भाति प्रकाशते । एवंविधो जगत्सन्निवेशस्सर्वोऽपि लक्ष्मीसंकल्पायत्त

एवेति भावः । 'यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्' इत्याद्युक्तयोऽत्रानुसंधेयाः । तां लक्ष्मीमेव विशिनष्टि—या लक्ष्मीः ईष्टे जगत्सर्गादिकं कर्तुं प्रभवतीत्यर्थः । या लक्ष्मीः समर्पितस्वायै न्यस्तात्मरक्षाभरायै 'न बहुव्रीहौ' इति बहुव्रीहौ सर्वनामसंज्ञानिषेधान्न तत्प्रयुक्तकार्यम् । जनतायै स्तुताः सकललोकश्लाघिताः श्रियः संपदः आधत्ते विनतजनतामानन्दयितुमभीप्सितां लोकोत्तरां समृद्धिं तस्यामादधातीति भावः । यां लक्ष्मीं मनः ममेति शेषः । अनुभवति च ध्यायति च तया मया जगती ईदृशी भातीति योजना ॥

ईदृशार्थोपस्थापकेनानेन संदर्भेण वक्ष्यमाणरीत्या विभक्तिसप्तकवञ्चनं क्रियते । अत्र हि ईशब्दस्य सप्तापि विभक्तयो वञ्चिताः तथाहि—भाति ई दृशि ईं अयेयं जगती ईष्टे या समर्पितस्वा यै जनता याः आधत्ते श्रियः तु ताः याः मनः नु भवति च याम् इति छेदः । अः अकारवाच्यो भगवान् 'अकारो विष्णुवाचकः । अकारेणोच्यते विष्णुः । अ इति भगवतो नारायणस्य प्रथमाभिधानम्' इत्याद्युक्तेः । अस्य स्त्री ई इति पुंयोगलक्षणङीषि 'यस्येति च' इत्यकारलोपे ई इति प्रत्ययमात्रपरिशेषः । भगवद्वल्लभा श्रीरिति तदर्थः । दृशि चक्षुषि भाति । मम दृशो गोचरतया प्रकाशते । ईं अकारवाच्यभगवद्वल्लभां श्रियम् । एवमग्रेऽपि । अयेयं शरणं व्रजेयं । 'इटकिट' इत्यत्र प्रश्लिष्टस्य इधातोर्लिङ् । तामेव विशिनष्टि—या श्रिया,ईशब्दाट्टाप्प्रत्यये यणादेशः । जगती लोकः ईष्टे ऐश्वर्यशालिनी जगती भूर्देवीति वा ईष्टे भूदेव्या ऐश्वर्यमपि लक्ष्म्यधीनमेवेति भावः । यै तस्यै श्रियै ईशब्दात् ङयि 'आण्नद्याः' इत्याडागमे 'आटश्च' इति वृद्धौ यणादेशः । एवमग्रेऽपि । समर्पितस्वा उक्तोऽर्थः । जनता याः तस्या एव श्रियस्स-

काशात् श्रियः संपदः आधत्ते स्वस्मिन् न्यस्यति आर्जयतीति वा । तास्तु उक्तास्संपदः पुन: याः लक्ष्म्यास्संबन्धिन्यः । यद्वा तुशब्दोऽवधारणे या इत्यत्रान्वेतव्यः । यास्तु लक्ष्म्या एव संबन्धिन्यः न हि सर्वेश्वरी महोदारसार्वभौमी सा अन्यदीयां श्रियं भिक्षित्वा स्वाश्रितजनतायै प्रयच्छतीति भावः । यां च तस्यामेव लक्ष्म्यां मन: मम हृदयं भवति सततं तामेव ध्यायतीति भावः । नुशब्दो निश्चये । यामित्यत्र 'ङेराम्नद्याः' इति ङेरामादेशः । अन्यत्सर्वं पूर्ववत् ॥

यथावा—

स हरिर्माऽवति मां श्रय मया विना किं नु
वस्तु मायैतदिदम् । मायाजातं मायादासो ननु
भक्तिमांस्तरेर्मायां त्वम् ॥२३२६॥

इदं संसारोत्तरणमभिलष्य तदुपायाद्यज्ञानेन कौन्तेयवत् विषीदन्तं कंचित्साधुं प्रति कस्यचित्परमकारुणिकस्याचार्यस्य भगवत्तुल्यस्य वचनम् । तथाहि नन्विति सुकुमारामन्त्रणे । ननु हे साधो ! सः सर्वजगत्कारणत्वादिना प्रसिद्धः । हरिः भगवान् मा मां अवति रक्षतीति स्वनिदर्शनप्रदर्शनेन शिष्यस्य प्रत्यायनम् । यथा मां रक्षति तथा त्वामपीति भावः । 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रूयमाणं तत्प्राप्त्युपायज्ञानौपयिकं गुरूपसदनमाह—श्रय मामिति । मां तव भगवत्प्राप्त्युपायादिकमुपदिदिक्षन्तमिति भावः । श्रय उपसीद । गुरूपसदनाविरहे ज्ञानाद्यसिद्धिमाह—मयेति । मया विना किंनु गुरुं विना न किमपि सिध्यतीति भावः । 'आचार्यवान्पुरुषो वेद' इति श्रूयते । अतो मामाचार्यं वृणीष्वेति भावः । तत्त्वमुपदिशति—वस्त्वित्यादिना ।

एतत् परिदृश्यमानं वस्तु सर्वोऽपि पदार्थः मायैव प्रकृतिरेव 'मायां तु प्रकृतिं विद्यात्' इति श्रुतिः। कुत इत्यत्राह—इदमित्यादिना। इदं सर्वं वस्तुमात्रं मायायाः प्रकृतेः जातं प्रकृतिपरिणामभूतमित्यर्थः। कार्यकारणयोरैक्यान्मायैवैतदिति भावः। कथमेतत्तरणोपाय इत्यत्राह—मायादास इत्यादिना। मायायाः प्रकृतेरेव दासस्सन् भगवत्स्वरूपतिरोधनकरीं स्वाविषयायाश्च भोग्यबुद्धेर्जननीं दैवीं गुणमयीं मायां दासभूतः शरणागतोऽस्मि। तवास्मि दास इति वक्तारं मां तारय इति गदितरीत्या अनुसंदधानो दासस्सन्निति भावः। भक्तिमान् सन् मायां प्रकृतिं तरेः तीर्णो भवेः। नान्यथा तत्तरणं सुकरमिति भावः। अत्र—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥

इति प्रमाणार्थोऽनुसंहितः। अनेन चामुखे अवभासमानेनार्थेन वक्ष्यमाणरीत्या माशब्दस्य सप्तापि विभक्तयो वञ्च्यन्ते। तथाहि—ननु हे सखे! हरिणा सह वर्तत इति सहारिः स्ववल्लभेन भगवता सहिता मा लक्ष्मीः अवति रक्षति त्वामिति शेषः। तत्रोपायमाह—मां श्रयेति। उक्तरीत्या हरिवल्लभां श्रियं प्रपद्यस्व। कुतस्सैव श्रयणीयेत्यत आह—मयेति' मया सवल्लभया तया श्रिया विना किंनु वस्तु अस्तीति शेषः। 'त्वया च विष्णुना चाम्ब जगद्व्याप्तं चराचरम्' इत्युक्तरीत्या सर्वमपि वस्तु व्याप्तमिति भावः। तदिदं सर्वं वस्तु मायै सवल्लभायै श्रियै। तच्छेषभूतमेवेत्यर्थः। तत्र हेतुः माया इति। मायाः तथाविधायाः श्रियः सकाशादेव जातं इदं सर्वं जगत्तत्सृष्टमित्यर्थः। तत्सृष्टस्य तच्छेषता युक्तैवेति भावः। तस्मात् मायाः भगवत्प्रियतमायास्तस्याः दास-

स्सन् मायां तस्यामेव लक्ष्म्यां भक्तिमान् सन् त्वं तरेः भवजलधेरुत्तीर्णो भवेरिति भावः ॥

यथावा—

ओमेनायादस्यै जयतु भजे रक्षितोऽस्मि मम सिद्धिः । अस्तु कृपा न्यस्तात्मत्राणभरस्यास्ति नाणुरपि भारः ॥२३२७॥

अः अं एन आय आत् अस्य ए इति छेदः । एषां यथासंख्यं जयत्वित्यादिभिरन्वयः । अस् अं इति स्थिते 'ससजुषो रुः' इति रुत्वे 'अतो रोरप्लुतादप्लुते' इति रोरुत्वे गुणे 'एङः पदान्तादति' इति पूर्वरूपे ओमिति संहिता । अस्य ए इति स्थिते 'वृद्धिरेचि' इति वृद्धौ अस्यै इति संधिः । अः अकारवाच्यो भगवान् 'अ निषधे पुमान्विष्णौ' इत्यनुशासनात् । जयतु । अं अकारवाच्यं तमेव भगवन्तं भजे । एन अकारवाच्येन भगवतैव रक्षितः अहं त्रात इत्यर्थः । तत्र हेतुः—आय तस्मै नारायणाय अस्मि तच्छेषभूतोऽस्मीत्यर्थः । आत् तस्मादेव भगवतः मम सिद्धिः ज्ञानादिसमस्तापेक्षितलाभः । अस्य अकारवाच्यस्य भगवतः कृपा अस्तु मयीति शेषः । ए अकारवाच्ये नारायणे श्रीमति न्यस्तात्मत्राणभरस्य अर्पितात्मरक्षाभरस्य ममेति शेषः । अणुरपि स्वल्पोऽपि भारः न । स्वरक्षणार्थस्वव्यापारान्तरलेशोऽपि नास्तीति भावः । अत्र 'न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि' इत्येतदनुसंहितम् । अत्र आपाततोऽर्थान्तरभ्रान्तिसंपादकेन संदर्भेण अशब्दस्य क्रमेण सप्तापि विभक्तयः वर्णान्तरानन्तरितैष्षड्भिरेवाक्षरैर्वञ्चिताः । पूर्वत्र न तथा । पूर्वोदाहरणम् श्लिष्टम् । इदमश्लिष्टं

यथासंख्येनार्थालंकारेण संकीर्णं चेति विशेषः। अमूनि गूढपादादीनि चित्राणि प्रहेळिकाभेदतया व्यवह्रियन्ते। तथाचोक्तं विदग्धमुखमण्डने—

व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्।
यत्र बाह्यान्तरावर्थौ कथ्येते ताः प्रहेलिकाः ॥ इति ॥

---

अथ स्वरस्थानव्यञ्जनादिनियमाचित्रम्

**स्वरस्थानव्यञ्जनानां नियमो दुष्करो हि यः।**
**प्रोक्तश्चतुःप्रभृत्येष दर्श्यते सुकरः परः ॥**

दुष्करचित्रेषु मध्ये स्वरस्थानव्यञ्जनानां स्वराः अकारादयः अचः स्थानानि 'अकुहविसर्जनीयानां कण्ठः' इत्यादुक्तानि कण्ठादिस्थानानि। व्यञ्जनानि हल्वर्णाः तेषां नियमः प्राक्तनैर्यो दुष्करतया प्रोक्तः एषः चतु.प्रभृति दर्श्यते। चतुःप्रभृतीत्यनेन चतुस्त्रिद्व्येकरूपतया चत्वारो भेदाः प्रदर्श्यन्त इत्युक्तं भवति। परः अन्यस्तु पञ्चादिः सुकरः अनतिप्रयाससाध्यत्वात्। अतस्तदुदाहरणं यथायथमूह्यम् ॥

तत्र प्रथमं चतुस्स्वरनियमाचित्रमुदाह्रियते। यथा—

**कामो मोहो लोभोऽप्यातिमात्रं गळति तव पदध्यानात्। भोगो वा योगो वा मोक्षो वाऽब्जाक्ष तव कटाक्षात्स्यात् ॥२३२८॥**

अत्र अकार आकार इकार ओकारश्चेति चत्वार एव स्वरा निबद्धाः ॥

यथावा—

सौभाग्यकैरवग्लौः पद्मास्थैर्यप्रभावताराद्यौः ।
अनपायभवार्णवनौरनघा भद्राय भासताम- वनौ ॥२३२९॥

ग्लौः चन्द्रमाः । स्थैर्यं च प्रभावाश्च त एव ताराः तारकाः तासां द्यौः । पद्मा लक्ष्मीः । अत्र अकार आकार ऐकार औकारश्चेत्येते चत्वार एव स्वरा निबद्धाः ॥

त्रिस्वरनियमो यथा—

या नागाद्र्यावासा सा पायान्मां सदा भवा- पायात् । श्रीः ह्रीधीश्रीकीर्तीः प्रीतीर्दधती हर- न्तीतीः ॥२३३०॥

नागाद्र्यावासा शेषाद्रिनिवासा । ह्रीः अकार्ये लज्जा । धीः प्रज्ञा श्रीः प्रभा । कीर्तिः यशः । प्रीतिः आश्रितेषु प्रेमा । तस्याः विषयभेदाद्बहुत्वम् । दधती पुष्णती । ईतीः उपप्लवान् । 'ईतिर्डिम्बप्रवासयोः' इत्यमरः । हरन्ती श्रीः लक्ष्मीः भवापायात् संसाररूपादपायात् पायात् इति योजना । अत्र अकार आकार ईकार इत्येते त्रय एव स्वराः ॥

यथावा—

विनुतस्सततं मुनिभिर्मुमुक्षुभिर्ननु बुभुक्षुभिर- पि त्वम् । तत्तदभिलषितमखिलं वितरसि मुचु- कुन्दवरद मुरमथन ॥२३३१॥

अत्र अकार इकार उकार इति त्रय एवैते स्वरा ग्रथिताः ॥

द्विस्वरनियमो यथा—

वेदेवेदे वेद्ये ध्येयेऽमेये प्रियेऽक्रियेऽक्षेये ।
गेयेऽजेये देवे देवेशेड्येऽक्षि मे रेमे ॥२३३२॥

वेदेवेदे प्रतिवेदं वेद्ये ज्ञेये । ध्येये ध्यातव्ये । अमेये 'यतो वाचो निवर्तन्ते' इत्याद्युक्तरीत्या वागाद्यपरिच्छेद्ये परिच्छेदत्रितयागोचरे वा । प्रिये निरतिशयप्रीतिविषये अक्रिये 'निष्क्रियं निष्कलम्' इत्याद्युक्तरीत्या अकर्मवश्ये । क्षेतुं योग्यः क्षेयः स न भवतीत्यक्षेयः तस्मिन् इदं 'क्षय्यजय्यौ' इत्यस्य प्रत्युदाहरणम् । उपलक्षणमेतत्सर्वभावविकाराणां राहित्यस्य । गेये गातुं योग्ये । जेतुं योग्यो जेयः स न भवतीत्यजेयः तस्मिन् । इदमप्युदाहृतसूत्रप्रत्युदाहरणमेव । देवेशैः ब्रह्मादिभिः ईड्ये स्तुत्ये । देवे भगवति श्रीनिवासे मे मम अक्षि लोचनं रेमे अरमत तन्निध्यानैकतानमभवदिति भावः । अत्र रेमे इति लिट्प्रयोगस्स्वस्य प्रमोदपारवश्यप्रयुक्तपारोक्ष्यं सूचयति । अत्र इकार एकार इत्येतयोर्द्वयोरेव स्वरयोर्यन्त्रणम् ॥

एकस्वरनियमचित्रं यथा—

त्वच्चरणशरणवरणक्षतसकलमलस्य कमलनयन मम । भवदवपथसंचरणश्रममपनय वरद परदरक्षपण ॥२३३३॥

परेभ्यः कामादिवैरिभ्यः यः दरः भयं तस्य क्षपणः ध्वंसकः तस्य संबुद्धिः । अत्र ह्रस्वाकारस्यैकस्यैव स्वरस्य निबन्धः ॥

अथ स्थाननियमः। तत्र चतुस्स्थाननियमो यथा—

**दृष्टिश्रुतिभूभृद्विभुनुतिसृतिभृद्भुवि विभीस्सुधी-
वृत्ती। नीतिविनीतिद्युतिधृतिविभूतिभूमिश्श्रुति-
स्मृतिस्थितिवित् ॥२३३४॥**

दृष्टिश्रुतिः चक्षुश्श्रवाः स चासौ भूभृत् शेषगिरिरित्यर्थः। तस्य विभुः श्रीनिवासः तस्य नुतिसृतिभृत् स्तुतिसरणिभर्ता स्तोतेत्यर्थः। ईदृशो जनः भुवि धीश्च वृत्तं चरित्रं तच्च धीवृत्ते शोभने च ते सुधीवृत्ते च ते अस्य स्त इति सुधीवृत्ती मत्वर्थीय इनिः। शोभनबुद्धिश्शोभनाचारश्चेत्यर्थः। नीतिः नयः विनीतिर्विनयः द्युतिः तेजः धृतिः धैर्यं विभूतिरैश्वर्यं तासां भूमिः आश्रयः श्रुतिर्वेदः स्मृतिर्धर्मशास्त्रं एतयोः स्थितिः मर्यादा तां वेत्तीति श्रुतिस्मृतिस्थितिवित् 'मर्यादा धारणा स्थितिः' इत्यमरः। भवतीति शेषः। अत्र केवलतालव्यमूर्धन्यदन्त्योष्ठ्यैरेव वर्णैर्घटना 'आनुनासिक्यमेषामधिको गुणः' इति भाषणात्प्रकृते नकारस्य दन्त्यत्वमात्रविवक्षया न स्थाननियमभङ्ग इति ध्येयम्। इदं निष्कण्ठ्यवर्णचित्रमपि। किंचात्र इकार ईकार उकार ऊकार ऋकार इत्येते पञ्चैव स्वरा न्यबध्यन्त। यद्यपि पञ्चस्वरैरेव घटनं नातिप्रयाससाध्यमित्यनाश्चर्यमित्यवोचाम। तथापि वर्णस्थाननियमे स्वरनियमस्याप्यानुषङ्गिकत्वे तदप्याश्चर्यावहमेवेति ध्येयम् ॥

**स्फीते मुनिभिर्ध्याते श्रीसिन्धुसुतेऽद्भुते द्युसि-
न्धुयुते। शेषे शेषिणि शैलेऽभ्येषि प्रीतिं प्रिये-
णोच्चैः ॥२३३५॥**

हे मुनिभिर्ध्याते हे श्रीसिन्धुसुते हे शोषिणि स्फीते अभिवृद्धे अद्भुते विचित्रे द्युसिन्धुयुते आकाशगङ्गान्विते शेषे शैले शेषाद्रौ प्रियेण श्रीनिवासेन सह उच्चैः निरतिशयां प्रीतिं मुदं अभ्येषीति योजना । अयं श्लोकः निष्कण्ठ्यवर्णग्रथितः । निषेध्यः कण्ठ्यश्चात्र केवलकण्ठ्यः, तेन कण्ठतालुस्थानकयोः एकारैकारयोः कण्ठोष्ठ-स्थानकस्य ओकारस्य सत्त्वेऽपि न दोषः ॥

रक्षोगणसुक्षोभणदक्षोल्बणबाणतूणबाणासः ।
स्वक्षो नतपक्षोन्नतिरक्षोऽवतु मां रमानाथः ॥

शोभने अक्षिणी यस्य सः स्वक्षः 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति समासान्तष्टच् । 'न पूजनात्' इति निषेधस्तु ,बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतः प्रागेव इति नियमितमाकरे । अत्र निस्ताल-व्यैरेव वर्णैर्निबन्धः, स्वरपञ्चकनियमोऽप्यानुषङ्गिकः ॥

किञ्चिदचञ्चलविभवं कञ्चुकिनाथाचलाञ्चलोदञ्चि ।
त्वञ्चापलं विमुञ्चत्पञ्चायुधमञ्च दैवतं चेतः ॥२३३७

अत्र कण्ठ्यतालव्यदन्त्यौष्ठ्यवर्णान्येव निबद्धानि । इदमेव निर्मूर्धन्यमिति व्यवह्रियते ॥

शिखरविशङ्कटवेङ्कटगिरिकटकविहारि हारिहा-रुचि । अयि किमपि वैभवं भवभवभयभरहर-णमेव परिचर गीः ॥२३३८॥

शिखरैः विशंकटः विशालः यो वेंकटगिरिः तस्य कटके विहर-तीति तथोक्तं हारिणी मनोहरा हाररुचिः यस्य तत् । भवभव-

भयभरहरणं भवात् भवः उत्पन्नः यो भयभरः तस्य हरणं हर्तृ किमपि वैभवमेव वैभवत्वेनाध्यवसितं परं ब्रह्मैव अयि गीः हे वाणि! परिचर तद्गुणानेवानुवर्णयेत्यर्थः। अत्र कण्ठ्यतालव्य-मूर्धन्यौष्ठ्यवर्णैरेव निबन्धः। इदमेव निर्दन्त्यचित्रम्। अत्र केवल-दन्त्यस्यैव निषेधः, तेन दन्तोष्ठस्थानकवकारसद्भावेऽप्यदोष इति ध्येयम्॥

यथावा—

**फणिशेखरशिखरिशिखामरगणपरिबृढमणी-शमञ्जुरुचिम्। रमणीरमणीयोरश्शरणं शरणं कमप्ययें शरणम्॥ २३३९॥**

शरणं रक्षितारं रमणीरमणीयं उरश्शरणं हृदयगृहं यस्य तं कमपि पुमांसं शरणमये उपायत्वे स्वीकरोमीत्यर्थः॥

उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम्।
वर्तते सांप्रतं चैष उपायार्थैकवाचकः॥

इत्यहिर्बुध्न्यसंहितोक्तेः। इदं सर्वथा निर्दन्त्यम्॥

ममैव प्रपन्नानन्दस्तुतौ—

**जगदीशहृदयनिलया जगताञ्जननी जनार्ति-हरणचणा। जलजदलायतनयना जलनिधितनया जयान्कलयतान्नः॥ २३४०॥**

अत्र कण्ठ्यतालव्यमूर्धन्यदन्त्यवर्णानामेव निबन्धः। इदमेव निरोष्ठ्यमित्युच्यते। अत्र अकार आकार इकार ईकार ऋकारश्चे-त्येते पञ्चैव स्वरा निबद्धा इति विच्छित्तिविशेषः॥

यथावा—

कनकनगकटकतटकनदगगहनग गगनसदन-
सततनत। जगदनघजयद घनदय जय गजदरद-
हनजलद नरकहर ॥ २३४१ ॥

कनकनगस्य वृषाद्रेः कटकस्य तटे कनतां लसतां अगानां तरूणां गहनं काननं गच्छतीति गहनगः तस्य संबुद्धिः गगनसदनैः दिविषद्भिः सततनत। जगतां अनघं दुःखासंभिन्नं जयं ददातीति जगदनघजयदः तस्य संबुद्धिः। गजदरदहनजलद गजस्य दरः भयमेव दहनः पावकः तस्य जलद। नरकहर नरकारे जय उत्कर्षं प्राप्नुहि। अत्रापि कण्ठ्यतालव्यमूर्धन्यवर्णा एव ग्रथिताः। इदं निरोष्ठ्यमेकस्वरं सर्वलघु चेति विच्छित्तिविशेषः पूर्वस्मात्॥

शेषाचलभूषा शुभवेषा भाषापतिस्तुतिसतोषा।
योषाहृदयविभूषा शेषाशेषाऽऽदिदेवता सैषा ॥

योषा लक्ष्मीः हृदयविभूषा यस्यास्सा सैषा आदिदेवता। शेषाः शेषभूताः अशेषाः सर्वे यस्यास्सा। अत्र श्रीनिवासमुद्दिश्य अशेषशेषित्वं विधीयते। इदं निर्नासिक्यवर्णं चित्रम्॥

एवं चतुस्स्थानवर्णनियमो दर्शितः। अथ त्रिस्थानवर्णनियम उदाह्रियते—

यथा—

कान्त्यानन्त्यात्कान्ता शान्त्या चात्यन्तया
दयाजलधिः। कनकनगनाथदयिता कनति कन-
त्काञ्चिकाञ्चिता जगति ॥ २३४३ ॥

कान्तेः आनन्त्यात् अत्यन्तया शान्त्या च कान्ता मनोज्ञा दयाजलधिः कनन्त्या प्रकाशमानया कनककाञ्चिकया अञ्चिता कनकनगनाथदयिता जगति जयतीति योजना। इदं कण्ठ्यतालव्यदन्त्यवर्णैरेव निबद्धामिति निरोष्ठ्यमूर्धन्यचित्रम्। अत्रापि 'दृष्टिश्रुतिभूभृद्विभु' इति प्रागुदाहृतानिष्कण्ठ्यचित्रपद्य इव नकार ईकारयो र्दन्त्यतालव्यत्वमात्रविवक्षया न स्थाननियमभङ्ग इति ध्येयम्। अन्यथा चतुस्स्थानवर्णनियमस्यैवोदाहरणं भवेत्। अत्र अकार आकार इकार इति त्रिस्वरनियमोप्यभ्युच्चीयते॥

यथावा—

**सकलेहितदाय जयरशकलितदैत्याय सकलशशियशसे। सजलजलदालिलालितदीधितये स्तात्खगाचलेशाय॥ २३४४॥**

सकलशशियशसे पूर्णचन्द्रसदृशकीर्तये। खगाचलेशाय श्रीनिवासाय जयः स्तात्। इति योजना। 'जितं ते पुण्डरीकाक्ष' इतिवदत्र भगवतो जयाशासनम्। इदं तु शुद्धत्रिस्थानवर्णनियमोदाहरणं नासिक्यासंवलितत्वादिति पूर्वस्माद्विशेषः॥

द्विस्थानवर्णनियमो यथा—

**भामाभामापोहो भोगाभोगाभबाहुभागघहा। भूभागमखभुगगभाङ्गमकपापापहो महाभूमा॥**

भामायाः सत्यभामायाः भामः कोपः 'भाम क्रोधे' इत्यस्माद्भावे घञ्। 'भामः क्रोधे रवौ दीप्तौ' इति मेदिनी। सः अपोह्यते अपनीयतेऽनेनेति भामाभामापोहः। भोगस्य अहिकायस्य आभोगः परिपूर्णतेवाभोगो यस्यास्सा तथोक्ता आभा ययोस्तौ

बाहू भजत इति भोगाभोगाभबाहुभाक् । भूभागमखभुगगभाक् । भूमागं भूमिप्रदेशं मखभुगगं स्वर्द्रुमं भाजयति सेवयतीति तथा । भजतेर्ण्यन्तात् क्विप् । कल्पतरुं भुवं नतिवानित्यर्थः । यद्वा 'भज विश्राणने' इत्यस्माच्चौरादिकात् क्विप् । कल्पतरुं भूलोकाय विश्राणितवानित्यर्थः । अतएव भामाभामापोह इत्युक्तम् । अतएव महाभूमा विपुलमहिमा अघहा अघासुरहन्ता भगवान्यदुनन्दनः मामकपापापहः मदीयदुरितहरः भवतीति शेषः । अत्र कण्ठ्यौष्ठ्यवर्णैरेव निबन्धनामिति निस्तालव्यमूर्धन्यदन्त्यचित्रमिदम् । अत्रापि मकारङकारयोः कण्ठ्यौष्ठ्यमात्रत्वं पूर्ववत् अकार आकार उकार ऊकार ओकारश्चेति पञ्चैव स्वरा इति स्वरनियमोऽप्यभ्युह्यते ॥

एकस्थानवर्णनियमो यथा—

**काकाघहाऽङ्कगाङ्कः खगाङ्कगागागगाहकः खगगः । अङ्कागाङ्काङ्काङ्कगकङ्ककङ्काकहा खगाङ्काङ्कः ॥ २३४६ ॥**

काकाघहा काकस्य ऐन्द्रेर्वायसस्य अघं दुःखं हन्तीति तथोक्तः । अङ्कगाङ्कः अङ्कं श्रीवत्साख्यं लक्षणं गच्छतीत्यङ्कगः अङ्कः क्रोडं यस्य सः श्रीवत्सवक्षा इत्यर्थः । कोशस्त्वनन्तरमेवोदाहरिष्यते । खगाङ्कगागागगाहकः—खगाः द्युसदः अङ्कगाः समीपगाः यस्य सः अत्युन्नत इति यावत् । तथोक्तः अगागः फणिगिरिः 'अगो नगश्च भुजगे नाभौ भूरुहि भूधरे' इति रत्नमाला । 'अगस्स्यान्नगवत्तरौ । शैले सरीसृपे भानौ' इति हेमचन्द्रश्च । खगाङ्कगश्चासावगागश्च खगङ्कगागागः तस्य गाहकः उन्नततमं शेषाचलं प्रविष्ट इत्यर्थः । गाहतेर्ण्वुल् । खगं खगेन वा गच्छ-

तीति खगगः ताक्ष्यवाहन इत्यर्थः। 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति' वार्तिकात् गमेर्डः। यद्वा खगं भानुं गच्छ-तीति खगगः सावितृमण्डलान्तर्वर्तीत्यर्थः 'य एषोऽन्तरादित्ये' इत्यादिश्रुतिभ्यः। अङ्कागाङ्काङ्कागकङ्ककङ्काकहा—अङ्कं संख्यां न गच्छतीत्यङ्कागः असंख्याक इत्यर्थः। यद्वा अङ्कं कलङ्कं न गच्छतीत्यङ्कागः निष्कलङ्क इत्यर्थः। योऽङ्कः चित्रयुद्धं तस्य अङ्कः स्थानं तस्य अङ्कं समीपं गच्छतीत्यङ्काङ्कगः। यद्वा अङ्कः अप-राधः तं न गच्छतीत्यङ्कागः निरपराध इत्यर्थः। तथोक्तश्चासा-वङ्काङ्कगश्चेति विशेषणोभयपदः कर्मधारयः। तादृशो यः कङ्कः गृध्रः जटायुरित्यर्थः। तस्य कङ्काकहा कङ्कः यमः तत्कृतं यत् अकं दुःखं तद्धन्तीति तथोक्तः। हन्तेः क्विप् 'या गतिर्यज्ञशी-लानाम्' इत्यादि वदता भगवता तस्य दिव्यस्थानप्रदानेन यम-विषयगमनदुःखस्य गळहस्तितत्वादिति भावः।

अकं दुःखाघयोरङ्को भूषारूपकलक्ष्मसु।
चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः॥

इति हेमचन्द्रः। खगाङ्काङ्कः खं परमव्योम गच्छतीति खगः यः अङ्कः 'दिव्यं स्थानमजरं चाप्रमेयम्' इत्याद्युक्तः श्रीवैकु-ण्ठाख्यस्थानविशेषः। तस्य अङ्कः आभरणभूत इत्यर्थः। अत्र भगवांस्ताक्ष्यवाहनः परमव्योमनिलयश्श्रीवत्सवक्षा एव रामा-त्मनाऽवतीर्य काकासुरविपदपनयनो जटायुनिश्श्रेयसविश्राण-यिता च भूत्वाऽर्चात्मना शेषाद्रौ निवसतीति निर्गळितोऽभिप्रायः। परमव्योमनिलयत्वादिना परत्वं विभवरूपावस्थानेन सौलभ्यं अर्चात्मनाऽवस्थानेन तस्यैव निरतिशयत्वं च व्यञ्जितम्। अत्र कण्ठ्यैरेव स्वरैर्व्यञ्जनैश्च पद्यरचना। दुष्करमिदं चित्रमित्याहुः॥

अथ वर्णनियमः.

तत्रापञ्चवर्गीयचित्रं यथा, ममैव प्रपन्नानन्दस्तुतौ—

सरसिरुहालयवासा या सा शिशिरांशुहारि-
लवहासा । वरसारसशालिशया सरसा सा श्री-
विशिश्रिये शिरसा ॥ २३४७ ॥

लवहासो मितहसनम् । सा श्रीः शिरसा विशिश्रिये आ-श्रिता । अत्र कचटतपवर्गीयवर्णवैधुर्येण यकारादिवर्णा एव न्यबध्यन्त । इदमेवास्पर्शवर्णचित्रम् ॥

यथावा—

वासवसवहर सवहरवरवश्यासुरवरासशौर्य
हरे । वल्लववलयसहाय स्वयं श्रिया सह विहार-
शीलाव्याः ॥ २३४८ ॥

वासवसवस्य इन्द्रयागस्य हर । सवहरवरस्य शम्भुदत्त-वरस्य वश्यः यः असुरवरः बाणासुरः तं अस्यति निरस्यतीति तथोक्तं शौर्यं यस्य तस्य संबुद्धिः । वल्लववलयस्य गोपोलजालस्य सहाय श्रिया सह विहारशील हरे! स्वयं मत्कृतकिंचित्कारमनपेक्ष्य अव्याः रक्ष । इदमपि पूर्ववदपञ्चवर्गीयचित्रम् ॥

अनन्तस्थोष्मवर्णचित्रं यथा—

कनककनदनघधामा घनभूमा काऽपि जगद-
धिपभामा । दत्तां मम मतिमत्तामातिमत्तानां पदा-
न्तिकं मा गाम् ॥ २३४९ ॥

घनभूमा सान्द्रमहिमा जगदधिपभामा सर्वेश्वरदयिता श्रीः मम मतिमत्तां दत्ताम्। अतिमत्तानां सुराणां नराणां वा पदान्तिकं चरणनिकटं स्थानसविधं वा मा गाम्। यथा दुर्दान्तेश्वरम्मन्यान्तिकं न गच्छेयं तथा मम मतिमत्तां संपादयत्विति भावः। अत्र कादिमावसानास्स्पर्शा एव वर्णा निबद्धाः। न तु यादयोऽन्तस्थाश्शादय ऊष्माणश्चेति व्यञ्जननियमः। अकार आकार इकार इति त्रय एव निबद्धा इति स्वरनियमोऽप्यनुसंधेयः॥

एकवर्गीयवर्णनियमो यथा—

धानादानाधीने दीनानाथाधिधूननिदाने।
नानानन्दनिधाने नाथेऽनधुनातने नतिं नाथे॥

धानानां पृथुकतण्डुलानां दानेन अधीने आयत्ते कुचेलस्येति भावः। दीनानां अनाथानां शरण्यान्तरविरहिणां आधेः मनोव्यथायाः धूननस्य निदाने आदिकारणे। नानानन्दानां शतगुणितोत्तरक्रमेणाभ्यस्यमानानामानन्दानां निधाने निधौ अनधुनातने नाथे पुराणपुरुषे भगवति नतिं शरणागतिं नाथे आशासे 'आशिषि नाथः' इत्यात्मनेपदम्। अत्र तवर्गीयवर्णैरेव निबन्धः॥

यथावा—

नाथोऽनाथानां नो नेताऽनन्तोऽधुना धुनातु तथा। तां दीनतां ततो नो धिनोतु धीदानतो नतानेतान्॥ २३५१॥

नाथः जगदीश्वरः अनाथानां रक्षकान्तरविधुराणां नः अस्माकं नेता अनन्तः भगवान् तां अनिर्वचनीयां दीनतां दैन्यं अधुना सांप्रतमेव तथा धुनातु अपुनरुन्मेषमुन्मूलयत्वित्यर्थः।

ततः नतान् एतान् नः अस्मान् धीदानतः 'ददामि बुद्धियोगं तम्' इत्युक्तबुद्धियोगावितरणेन धिनोतु प्रीणयतु। अत्रापि केवलतवर्गीयवर्णानियमः॥

यथावा—

**भाभाम्ब ममाबाभा भूभूपापाभिभूभामे। पापाम्बुपपीबिम्बोपमभूमेऽभीमभाभूमे॥ २३५२॥**

भुवि भवति जायत इति भूभूः यः पापः पापिष्ठः भूपुत्रो नरकः। यद्वा भूभुवः भुवि कृतजन्मानः पापाः प्रलम्ब बक चाणूर कंस शिशुपालादयः तं तान्वा अभिभवतीति भूभूपापाभिभूः भगवान्वासुदेवः। तस्य भामे ललने। पापाम्बूनि अम्बतुल्यानि लोकपापानि तेषां पपीबिम्बं सूर्यमण्डलं उपमा यस्य सः तादृशो भूमा महिमा यस्यास्सा तस्यास्संबुद्धिः अनेन वल्लभसाधर्म्यं सूचितम्। 'नित्यं तद्धर्मधर्मिणी' इति ह्युच्यते। 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्। पातीति पपीः 'थापोः किद्द्वे च' इति पातेरीप्रत्ययो द्वित्वं च। 'पपीस्सूर्यः' इति शाब्दिकाः। भीमा दुरात्मनामत्युग्रा या भाः प्रभावः 'भाः प्रभावे च दीप्तौ च' इति मेदिनी। तस्याः भूमिः आधारभूता। तस्यास्संबुद्धिः 'सीतायास्तेजसा दग्धां। न तद्ग्निशिखा कुर्यात्' इत्यादिप्रसिद्धरिपुजनभयंकरादिव्यप्रभावाश्रयभूतामिति भावः। यद्वा अभीमेति छेदः। अभिमा अनुग्रा 'शीतो भव हनूमतः। न कश्चिन्नापराध्यति' इत्याद्युक्तरीत्या आश्रितविषये सौम्या भाः प्रभावः तस्याः भूमिरित्यर्थः। हे अम्ब! त्वमिति शेषः। मम भाभा भस्य नक्षत्रस्य आभेवाभा यस्यास्तथाभूता सती अबाभाः भृशमदीप्यथा इत्यर्थः। भातेर्यङ्लुगन्ताल्लङ्। अत्र पवर्गीयैरेव वर्णैर्निबन्धः॥

छिव्यञ्जनं यथा—

**नामाननानि नामामनानि मामानिनीननामानि। नूनमनुन्नमनमना नमामि नानाननानमनमेनम् ॥ २३५३ ॥**

नामाननानि नाम आमनानि मामानिनीननामानि नूनं अनुन्नमनमनाः नमामि नाना अननानमनं एनं इति पदच्छेदः। अविद्यमानं माननं येषां तानि तथोक्तानि न भवन्तीति नामाननानि अतिमात्रमाननीयानीत्यर्थः। मा लक्ष्मीरिति मानिनी तस्याः इनः स्वामी श्रीनिवास इत्यर्थः। तस्य नामानि नूनं निश्चयेन आमनानि अभ्यस्यानि। आङ्पूर्वकात् म्नाधातोः 'पाघ्राध्मा' इत्यादिना मनादेशः। लोडुत्तमः। पुनःपुनश्श्रीनिवासनामानि कीर्तयेयमिति भावः। उन्नमनमुन्नतिः अनुन्नमनं मनो यस्य सः अनुन्नमनमनाः अनुद्धत इत्यर्थः। अतएव 'मानश्चित्तसमुन्नतिः' इत्यमरः। अननानमनं अननं प्राणयितृ उज्जीवकमित्यर्थः। ईदृशं आनमनं प्रणामो यस्य तम्।

एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥

इत्यादिप्रमाणात् एनं श्रीनिवासं नाना अनेकं यथास्यात्तथा नमामि। नूनं नात्र किंचिदपि संशेतव्यमिति भावः। इदमनुनासिकद्विव्यञ्जनंनिबद्धम् ॥

यथावा—

**नानामौनीनाननामामननामुमामनोमानाम्। मामानमामि नूनं मानामामाममाननामेमि ॥**

नाना अनेके ये मौनीनाः मुनिश्रेष्ठाः तेषां अननं प्राणयितृ नामामननं नामधेयानुकीर्तनाभ्यासः यस्यास्तां। उमायाः गौर्याः मनसा मान्यत इति माना तां 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञ्। 'संज्ञायाम्' इति प्रायिकामित्याहुः। घञन्तोऽप्ययं भेद्यलिङ्गः, 'कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम्' इति लिङ्गानुशासनात्। यद्वा मानो माननं भावे घञ् उमामनोमानोऽस्या अस्तीति तथोक्ता तां मां श्रियं आनमामि शरणं प्रपद्ये। अमाननां पूजाविधुरां अमां अलक्ष्मीं नूनं मा नाम एमि न प्राप्नोमि। लक्ष्मीशरणवरणानन्तरमलक्ष्मीर्नेश्यत्येवेति भावः। 'तां पद्मनेमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे' इति श्रुत्यर्थोऽत्रानुसंहितः। इदमपि पूर्ववत् छिन्नव्यञ्जनमेव॥

यथावा—

**तान्तिं ततां नतानां तनुतां नेता तनोतु तानेतान्। नेता नोऽतनुतातोऽनीतीन्नन्तॄन्नितान्ततोऽनन्तः॥ २३५५॥**

तान्ति ततां नतानां तनुतां नेता तनोतु तान् एतान् नेता नः अतनुतातः अनीतीन् नन्तॄन् नितान्ततः अनन्तः। इतिच्छेदः। ततां विस्तृतां नतानां तान्ति ग्लानिं तनुतां कृशतां नेता प्रापयिता। नयतेस्तृन्। अत एव न कृद्योगषष्ठी। अतनोः प्रद्युम्नस्य तातः जनकः नेता स्वामी अनन्तः भगवान् नन्तॄन् शरणागतान् तानेतान् नः 'ते वयं भवता रक्ष्याः' इत्युक्तरीत्या त्वदीयानस्मानित्यर्थः। अनीतीन् ईतिः पीडा अविद्यमाना येषां तान् निवृत्ताविद्यासंवलनबाधानिति यावत्। तनोतु

कुरुताम्। अत्रैकवर्गीययोरेव व्यञ्जनयोर्द्वयोर्घटनादिदं द्विव्यञ्जन-चित्रं पूर्वोदाहरणतो वैलक्षण्यशालि॥

यथावा—

धाराधरधाराधरधराधरधराधराधारः। राधाधर-
धाराधा धीरोधिधुरंधरोऽराधि॥ २२५६॥

धाराधराणां जलधराणां धाराः जलासाराः तासां धरः अनारतघनाघनवर्षधारास्तिमिततया शीतल इति दिव्यप्रबन्धप्रथित इति भावः। यः धराधरः शेषः स चासौ धराधरो गिरिः स एवाधारोऽधिकरणं यस्य सः उक्तविशेषणविशिष्टशेषाद्रिनिवासीत्यर्थः। राधायाः अधरस्य अधररसस्येति यावत् याः धाराः ताः धयति पिबतीति राधाधरधाराधाः 'धेट् पाने' अस्मात् क्विप्। धीरः 'धैर्येण हिमवानिव' इत्युक्तरीत्या धैर्यशाली, धीरोधिनां विषयेभ्यो नियन्त्रितमतीनां योगिनामित्यर्थः 'योगश्चित्तवृत्तिनिरोधः' इति हि पातञ्जलं सूत्रम्। धुरंधरः तद्रक्षाभरस्वीकर्तेत्यर्थः। 'योगो योगविदां नेता' इति हि तन्नामसु पठ्यते। यद्वा 'व्यक्तमेष महायोगी परमात्मा सनातनः' इत्याद्युक्तरीत्या योगिनामीश्वर इत्यर्थः। अराधि अपूजि। अस्माभिरिति शेषः। राधेः कर्मणि लुङि चिण्। अत्रापि पूर्ववद्व्यञ्जनद्वयेनैव घटना, पूर्वार्धे यमकविशेषोऽपीति वैलक्षण्यम्॥

यथावा—

दुरिदरदारिदरदोरुरोऽररोदारदार दारिद्री।
रौद्रारिदुर्दरोदरदरदारदुरोदरादरादारि॥ २३५७॥

दुरिदरदारिदरदोः उरोऽररोदारदार दारिद्री रौद्रारिदुर्दरोदरदरदारदुरोदरादर अदारि। इति छेदः। रौद्रः

उग्रः यः अरिः वैरी हिरण्यकशिपुः तस्य दुर्दरः दरीतुं दलयितुमशक्यः यः उदरदरः जठरश्वभ्रं 'दरोऽस्त्रियां भये श्वभ्रे' इत्यमरः। तस्य दारः दारणमेव दुरोदरः द्यूतं पणो वा तस्मिन् आदरो यस्य सः तस्मिन् अदरः निर्भय इति वा। यद्वा रौद्रारिदुर्दरोदरदरदारे दुरोदरः द्यूतकारः साहसिक इति यावत्। तस्य संबुद्धिः। 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः'। उरः वक्षः अररं कवाटमिव उरोऽररं तस्मिन् उदाराः 'श्रियं लोके देवजुष्टामुदाराम्' इति श्रुत्युक्तौदार्याः दाराः यस्य तस्य संबुद्धिः। कवाटविस्तीर्णवक्षस्स्थलविहरमाणश्रीक इत्यर्थः। दुष्टाः अरयः शात्रवाः तेषां दरं भयं दत्त इति दुरारिदरदौ अरिदरौ चक्रशङ्खौ ययोः तथोक्तौ दोषौ बाहू यस्य तस्य संबुद्धिः 'भुजबाहू प्रवेष्टो दोः' इत्यमरः। हे शङ्खचक्रधर! भगवन्नित्यर्थः। दारिद्री दारिद्र्यं ब्राह्मणादेराकृतिगणत्वात् ष्यञि षित्त्वात् 'षिद्गौरादिभ्यः' इति ङीष्। अदारि। श्रीनिवासं त्वामाश्रयतो मम भक्तिविरक्तिज्ञानसंपदादिसर्वविधदुर्विधत्वं विदीर्णमिति भावः। अदारि स्वयमेव व्यदीर्यतेति वा। दृणातेर्विदारणार्थेकात्कर्मणि कर्मकर्तरि वा लुङि चिण्॥

यथावा—

गगनगनगानुगानां गानानुगनाग गोऽननाना-
गः। नानानगनागाननागनगेनानिनो नु नो
ननु गाः॥ २३५८ ॥

गगनगनग अनुगानां गानानुगनाग गोऽनन अनागः नानानगनागाननागनगेन आनिनः नु नः ननु गाः इति छेदः। अनुगानां अनुचराणां आश्रितानामित्यर्थः। गगनगनग कल्पशाखिन्

गानानुगाः स्वप्रवर्तितमुरळीगानानुसारिणः नागाः फणिनः यस्य तस्य संबुद्धिः । 'शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी' इत्युक्तेस्तथोक्तिः । गवां धेनूनां अनन प्राणन । अनागः अपहतपाप्मन् 'पापापराधयोरागः' इत्यमरः । नन्विति सुकुमारामन्त्रणे । नाना बहुविधाः नगा तरवः नागाः गजाश्च तेषां अननः प्राणयिता यो नागनगः शेषाद्रिः तस्य इन स्वामिन् श्रीनिवासेत्यर्थः । नः अस्माकं गाः स्तुतिरूपाः वाचः आनिनः 'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरस्स्वधाम्ना' इत्युक्तप्रक्रियया प्राणयः प्राणितवानित्यर्थः । अनितेर्णिजन्ताल्लुङि चङि मध्यमपुरुषैकवचनम् । नु इत्यवधारणे । उदाहृतपद्यत्रये विभिन्नवर्गीयव्यञ्जनद्वयं निबद्धमिति विशेषः ॥

एकव्यञ्जनचित्रं यथा—

**नूनं नो नानेनानेना नेनेन नोनेन । नानैनोनुन्नानां नानैनेनाननी न नो ननु नौः ॥२३५१॥**

नूनं नो न अनेन अनेनाः ना इनेन नोनेन नानैनोनुन्नानां नाना एनेन अननी न नः ननु नौः इति पदच्छेदः । न ऊनः नोनः तेन नोनेन सर्वोत्तमेनेत्यर्थः । अनेन इनेन स्वामिना भगवता हेतुभूतेन ना कश्चिदपि पुमान् अविद्यमानं एनः पापं यस्य सः अनेनाः नो इति न । किंत्वनेना एव नूनमित्युक्तार्थस्यातिमात्रनिर्धारणे । नानाविधानि च तानि एनांसि पापानि तैः नुन्नानां क्षिप्तानां नः अस्माकं एनेन भगवता 'द्वितीयाटौस्स्वेनः' इत्यन्वादेशे एनादेशः । नाना विना 'पृथग्विनानानाभिः' इति तृतीया । 'पृथग्विनाऽन्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यमरः । अननी प्राणयित्री नौः उत्तरणसामग्रीति यावत् ।

न ननु नैव। ननुरवधारणे। यतोऽमुना श्रीनिवासेन भगवता सर्वोऽपि जनः पाप्मनो मोच्यते तत एनं विना नानाविध-दुरिततिरस्कृतानामस्माकं भवार्णवोत्तारकोऽन्यो नैवेति भावः। अत्रैकेनैव नकारेण पद्यबन्धः॥

यथावा—

लीलालोलेलालीलालीलालीललोऽलिलीला-लाः। लोलोल्लोलेलालंलीलालालो ललाल लो-लालः॥ २३६०॥

लीलालोलेलालीलालीलालीललः लीलासु विलासेषु लोला आसक्ता या इला भूः सैव आली सखी तां लालयतीति लीला-लोलेलालीलालिनी। सा चासौ इलानां गिरां आली पङ्क्तिः 'पुंवत्कर्मधारय' इति पुंवद्भावः। लीलालोलेलालीलालीलाली। तया ललतीति ललः 'लड विलासे' पचाद्यच्। लीलासक्त-भूसखीलालयितृवाणीश्रेणीविलासीत्यर्थः। अलिलीलालाः अलेः भ्रमरस्य लीला विलासः तच्छायेति यावत्। तां लाति आद-दातीति तथोक्तः। 'त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः' इतिवत्तत्सदृशद्युतिरित्यर्थः। 'ला आदाने' इत्यस्माद्धातोः क्विप्। लोलोल्लोलेलालंलीलालालः लोलाः चञ्चलाः उल्लोलाः महातरङ्गाः यस्यां सा लोलोल्लोला च सा इला च लोलोल्लोलेला। इला जलं 'भूगोवाचस्त्विडा इलाः' इत्यमरः। तस्यां प्रलयमहोदधिजले इति यावत्। अलं लीयत इत्यलंलीः 'ली श्लेषणे' दैवादिका-दस्मात् क्विप्। सा चासौ इला भूः वेदवाणी वा तस्याः ला आदानं 'लश्शाके ला तु दाने स्याद्ग्रहणेऽपि निगद्यते। ली श्लेषणे च चपले' इति मेदिनी। तस्यां अलतीत्यलः। पयार्प्त

इत्यर्थः। 'अल भूषणपर्याप्तिवारणेषु' इति धातोः पचाद्यच्। महोदधिनिमग्नाया भुवो वेदवाचो वा समुद्धर्तेत्यर्थः। ललाल विललास। 'लल विलासे' इत्यस्माल्लिट्। लोलालः लोला लक्ष्मीः 'लोलस्स्याद्वाच्यलिङ्गकः। सतृष्णे चपले लोला जिह्वा-कमलयोः स्त्रियाम्' इति मेदिनी 'लोला तु रसनाश्रियोः' इति हेमश्च। तां अलति भूषयतीत्यलः उक्तधातोरेव पचाद्यच्। लोलायाः अलः लोलालः। यद्वा लोलां ललतीति लोलालः कर्मण्यण्। लोलायां लिनातीति वा लोलालः 'ली श्लेषणे' अस्मात् क्र्यादिकात् 'अन्येभ्योपि दृश्यते' इति डः। अथवा लिनातीति ला लोला ला यस्मिन् सः लोलालः सर्वथाऽपि श्रीवल्लभ इत्येवार्थः। ललालेत्यन्वयः। अत्र लकारेणैकेनैव पद्य-बन्ध इत्यपञ्चवर्गीयवर्णमेकाक्षरचित्रमिदम्॥

सप्तस्वरनियमचित्रं यथा—

**मामानिनीसमागमनिस्समगरिमाऽरिदारिसा-रिगदम्। निगमापसारिदमदं पापानि ममाऽऽस-दासधनि धाम॥ २३६१॥**

मा लक्ष्मीरिति मानिनी वधूः तस्यास्समागमेन निस्समः असदृशः गरिमा गौरवं यस्य तत्तथोक्तं श्रीवल्लभत्वादेवास्ये-दृशं महत्त्वमिति भावः। अरीन् दारयतीत्यरिदारिणी अरिणा चक्रेण सह वर्तत इति सारिः सा चासौ गदा कौमोदकी यस्य तत्तथोक्तम्। निगमस्य वेदस्य अपसारिणः अपहर्तार मधुकैटभादयः तेषां दमं दण्डं ददातीति निगमापसारिदमदम्। धनमस्यास्तीति धनि दासैर्धनि दासधनि दासाभिन्नधनवदि-त्यर्थः। धनवदस्य दासास्संरक्षणीया इति भावः। धाम तेजः

परं ब्रह्मेत्यर्थः। मम पापानि आस निरास्थत्। 'असु क्षेपणे' अस्माद्वैवादिकाल्लिट्। अत्र सरिगमपधनीति संगीतशास्त्रप्रतीत-सप्तस्वरावबोधकवर्णैरेव श्लोकरचनेतीदमपि चित्रम्। अत्र ऋषभषड्जयोः रिवर्णसकाराभ्यामिव धैवतस्य धकारेणेव दका-रेणाप्युच्चारणं गायकगोष्ठीप्रसिद्धमिति दकारधकारयोरुभयोरपि ग्रथनमिति ध्येयम्॥

यथावा ममैव रङ्गराजविलासे—

**मा माधा मम धामनि पदमास सदा गदारि-दध सा सा। पापा निगदपदं परिगद मां मा मदरि-मानिनीदास ॥ २३६२ ॥**

इदं पद्यं भगवन्तं रङ्गराजमाखेटकविहारोत्सवानन्तरमुपा-गतमन्यवधूसंगतमाशङ्कमानाया लक्ष्म्या उक्तिरूपं वीणयाऽनूदि-तम्। तथाहि—दधातीति दधः। गदारिणोः कौमोदकीसुदर्श-नयोः दध गदाचक्रधारिन्नित्यर्थः। तस्य संबुद्धिः। मम धामनि गृहे पदं मा माधाः मा स्म निदधाः रोषसंभ्रमान्मा मेति द्विरुक्तिः। आङ्पूर्वकाद्धाञो लुङि 'न माङ्योगे' इत्यट्प्रतिषेधः। कुत ईदृशः कोप इत्यत्राह—आसेत्यादिना। सा सा पापा मम सप-त्नीति भावः। असहनात्तन्नामाग्रहणम्। निगदस्य त्वद्वचसः पदं पात्रं आस। तत्सल्लाप एव तव हृद्यः। मां मा परिगद-मया सह मा संभाषिष्ठा इति भावः। मा शब्दोऽयं न तु माङ्। अतो न लुङ्। त्वमेव खलु मम प्रेयसीति चाटुभिरयं माम-नुनेष्यतीत्याशङ्क्य रोषातिभूम्ना संबोधयति—मदरिमानिनीदा-सेति। मत्प्रत्यर्थिललनाकिंकरेति तदर्थः। अत्रापि पूर्ववत् सरि-गमपधनीति सप्तस्वरवर्णा एव निबद्धाः॥

अनन्तरपद्यमिदं—

इति कुपितया श्रियोक्तं निरासवचनं किलानु-
कुर्वाणा। वीणा स्वरसमुदायैरतोषयद्रङ्गराजमति-
रम्यैः ॥ २३६३ ॥

---

अपुनरुक्तव्यञ्जनचित्रम्

व्यञ्जनानां कखादीनां यत्रावृत्तिर्न दृश्यते।
चित्रमेतद्विजानीयात्तदनावृत्तवर्णकम् ॥

यथा—

अथ ऋषभाचलकूटापीडेऽतिघृणाझरीबाढे।
ओजःस्वच्छाये शठ मन इहि गोऽवे सदा ऋद्धे ॥

अथेति मङ्गळार्थकम्। "मङ्गळानन्तरारम्भप्रश्नकात्स्नर्येष्वथो अथ" इत्यमरः। इदमव्ययं चादौ स्वरादौ च पठ्यते। तेन मङ्गळवाचकस्य सत्त्वार्थकत्वेऽप्यव्ययत्वं सिध्यति। अतएव श्रीहर्षः—

उदस्य कुम्भीरथ शातकुम्भजाः
चतुष्कचारुत्विषि वेदिकोदरे।
यथाकुलाचारमथावनीन्द्रजां
पुरन्ध्रिवर्गस्स्नपयांबभूव ताम् ॥

इति। अत्र हि अथ स्नपयांबभूवेत्यस्य मङ्गळस्नपनं चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मङ्गळो मृदङ्गध्वनिवत्। न चात्र श्रीहर्षपद्ये अथेत्यस्यानन्तर्यमेवार्थः कुतो न स्यादिति वाच्यं,

अथशब्दयोर्द्वयोश्श्रवणात्। पूर्वार्धगतस्याथशब्दस्यानन्तर्यार्थकत्वेन उत्तरार्धगतस्याथशब्दस्य मङ्गळार्थकताया एवावश्यवक्तव्यत्वात्। अन्यथा पौनरुक्त्यस्य दुर्वारत्वादित्यास्तां तावत्। अथ मङ्गळः यः ऋषभाचलः वृषाद्रिः तस्य यत् कूटं शिखरं तस्य आपीडे शेखरभूते भगवतीत्यर्थः। इदं विशेष्यम्। अतिशयिता च सा घृणा च अतिघृणा निरतिशयकरुणा। सैव झरी प्रवाहः तेन बाढे प्रशस्ते 'भृशप्रशस्तयोर्बाढम्' इत्यमरः। गोऽवे अवतीत्यवः गवां धेनूनां वेदवाचां वा गोः भुवः दिवश्च वा अवः रक्षिता तस्मिन्। सदा ऋद्धे समृद्धिमति। ओजःखच्छाये ओजसि तेजसि विषये खं व्योम छाया प्रतिमा यस्य तथोक्ते गगनतलश्यामले इत्यर्थः 'छाया त्वनातपे कान्तौ प्रतिबिम्बार्कयोषितोः' इति विश्वः। 'छाया पङ्क्तौ प्रतिमायाम्' इति हेमचन्द्रश्च। शठ धूर्त हे मनः! इहि गच्छ। कर्मणोऽधिकरणत्वविवक्षया सप्तमी। श्रीनिवासं शरणं व्रजेत्यर्थः। अत्रोक्तं व्यञ्जनं पुनर्नोक्तमित्यपुनरुक्तव्यञ्जनं नाम चित्रम्। अत्रां पौनरुक्त्येऽपि न व्यञ्जनपौनरुक्त्यमित्यवधेयम्॥

---

अथ समसंस्कृतप्राकृतचित्रम्.

फणधरवरगिरिगेहं लवणिमपरिवाहधीकलनवाहम्। वरगुणमणिसंदोहं वन्देऽहं सुन्दरं विसन्देहम्॥ २३६५॥

यथावा—

हरिधरणिधरविहारं हारिमहाकिरणभारमणि-

हारम् । हेयगुणविसरदूरं गेयगुणं चिन्तये सपरि-
वारम् ॥ २३६६ ॥

कुन्दसुममन्दहासं कुवलयदलकोमलावयवभा-
सम् । कुण्डलिभूधरवासं कलये कमलाविलास-
सविकासम् ॥ २३६७ ॥

एषु त्रिषु पद्येष्वपि शब्दानां संस्कृतप्राकृतभाषयोस्तुल्य-रूपतेति समसंस्कृतप्राकृतमिदम् ॥

---

अथ पद्मादिचित्राणि.

पद्माद्याकारमापन्ना वर्णाश्चित्रमुदाहृतम् ॥

ननु कथमस्य शब्दालंकारता, पद्माद्याकारताया रेखोपरेखानिष्ठत्वादिति चेत्सत्यम् । वर्णानुमापकरेखानिष्ठानामेवाकाराणामनुमेयनिष्ठत्वाध्यवसायादौपचारिकीयं शब्दालंकारतावाचोयुक्तिरित्याहुः ॥

---

तत्र षोडशदलपद्मम्.

एकं यदि भवेत्सर्वमेकान्तरितमक्षरम् ।
तत्पद्मं षोडशदलं कर्णिकाश्लिष्टवर्णकम् ॥

एकाकारमेव वर्णमेकवर्णान्तरितं यदि निबध्यते कर्णिकायां श्लिष्टं एकवर्णं यस्य तत् षोडशदलपद्मं नाम चित्रं भवेत् ॥

यथा—

तारागौराकारा श्री रायो राति राद्धरास्स्मेरा।
सा राजाराध्याऽऽरात्स्फाराऽहीराधराकराधारा॥

तारा तारका सेव गौराकृतिर्गौरवर्णा। राद्धः सिद्धः राः विभवो यस्यास्सा। स्मेरा स्मयमानमुखीत्यर्थः। राजभिराराध्या। स्फारः विशालः अहीराधरश्शेषभूभृत् स एवाकरः श्रेष्ठः आविर्भावस्थानभूतो वा आधारः अधिकरणं यस्यास्सा। 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः। 'आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते' इति मेदिनी। सा प्रसिद्धा श्रीः लक्ष्मीः आरात् क्षिप्रमिति यावत्। रायः धनानि राति ददाति 'रा दाने'। अयमेव द्विचतुष्कबन्धो गोमूत्रिका च भवति। तल्लक्षणं तु—

बहिरन्तर्मण्डलस्थं तावत्कोष्ठविहारि यत्।
कोणाष्टकयुतं तच्च द्विचतुष्कं विदुर्बुधाः॥
तत्रायुग्माक्षरैः श्लिष्टा यदि युग्माक्षरैस्तु वा।
गोमूत्रिकेति विख्यातिमिदमेव भजेत्तदा॥

इति। एतदुक्तं भवति—दिङ्मुखकोणकं विदिङ्मुखकोणकं च द्वे चतुरश्चक्रे व्यतिकृते विलिख्य तस्य बहिरन्तश्च मण्डलरेखायुगं विलिख्य तत्प्रत्येकमष्टकोष्ठघटितं विधाय बहिर्मण्डले पूर्वार्धस्याश्लिष्टाक्षराणि अन्तर्मण्डले उत्तरार्धस्याश्लिष्टाक्षराणि विलिख्यार्धद्वयस्य श्लिष्टमक्षराष्टकं मण्डलद्वयमध्याष्टकोणेषु विलिखेत्। एवंच द्विचतुष्कोणविशिष्टत्वाद्द्विचतुष्कसंज्ञाऽस्य। इयं

युग्माक्षरश्लिष्टानुलोमगोमूत्रिका। अत्र कोणस्पर्शपूर्वको मण्डल-स्पर्शः। एवमयुग्माक्षरश्लिष्टत्वेऽपि गोमूत्रिका भविष्यति। तत्र कोणस्पर्शो मण्डलस्पर्शपूर्वक इति विशेषो बोध्यः॥

---

**गोमूत्रिकाबन्धः.**

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ता | रा | गौ | रा | का | रा | श्री | रा | यो | रा | ति | रा | द्ध | रा | स्स्मे | रा |
| सा | रा | जा | रा | ध्या | रा | त्स्फा | राऽ | ही | रा | ध | रा | क | रा | धा | रा |

**षोडशदलपद्मबन्धः.**



द्विचतुष्कबन्धः.



प्रकारान्तरेण गोमूत्रिका.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ता | गौ | का | श्री | यो | ति | द्ध | स्से |
| रा | रा | रा | रा | रा | रा | रा | रा |
| सा | जा | ध्या | त्स्फा | ही | ध | क | धा |

यथावा—

व्यालाद्रीलादोलालीलालोलाचलाचलाबाला।
श्रीलाऽवेलाम्मे लातीलामालाङ्किलाखिलाश्ली-
ला ॥ २३६१ ॥

व्यालाद्रेः शेषगिरेः इलायां धरायां दोलालीलायां आंदोलनविहारे लोला आसक्ता। अचला स्थिरहृद्या अचलाबाला भूसुता। इदं विशेष्यम्। श्रोला श्रीमती। सिध्मादित्वान्मत्वर्थीयो लच्। 'लक्ष्मवान् लक्ष्मणश्श्रीलः' इत्यमरः। खिलानि ध्वस्तानि अखिलानि अश्लीलानि अमङ्गलानि यया सा। अवेलां मर्यादातीतां इलामालां वाणीस्रजं मालिकासदृशीं वाचमित्यर्थः। मे लाति दत्ते। इति योजना॥

यथावा—

**धाम व्योमश्यामङ्कामङ्क्षेमक्रमक्षमन्नाम[1]। प्रेमस्थेमश्रीमद्भूमक्ष्मामक्रमन्नमस्याम ॥ २३७० ॥**

व्योमेव श्यामं नीलं कामं पर्याप्तं यथा स्यात्तथा। क्षेमस्य कुशलस्य क्रमः परिपाटिः तस्य क्षमं अर्हं क्षेमंकरमिति यावत्। प्रेम्णः स्थेमा स्थैर्यं तस्य श्रीः संपत् तदस्यास्तीति प्रेमस्थेमश्रीमत्। भूम्नः विभुत्वस्य क्ष्मां आवासभूमिं अक्रमं श्रमरहितं इदमुपलक्षणमखिलहेयगुणद्वीयस्त्वस्य। धाम तेजः श्रीनिवासमिति भावः। नमस्याम प्रणमाम। नामेत्यभ्युपगमे विस्मये स्मरणे वा। यद्वा व्योमश्यामं धाम तेजः श्रीनिवासं अक्रमं भवक्रमाभावाय 'निष्प्रत्यूहमुपास्महे' इत्यादाविव अर्थाभावेऽव्ययीभावः 'नाव्ययीभावादतोम्त्वपञ्चम्याः' इति चतुर्थ्या अम्। कामं पर्याप्तं यथातथा नमस्याम पूजयामेति योजना। 'नमोवरिवश्चित्रङः क्यच्' इति नमश्शब्दात्पूजायां क्यच्। तदन्ताद्धातोर्लोङुत्तमैकवचनम्। 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपिच' इति मेदिनी। क्षेमक्रमक्षमन्धामेति पाठेऽपि न चित्रभङ्गः। तदा—क्षेमक्रमस्य क्षमं पर्याप्तं धाम स्थानं

[1] क्षम-धाम.

क्षेमंकरस्थानभूतमित्यर्थः। अत्र श्यामं काममित्यादौ सर्वत्रानुस्वारस्य 'वा पदान्तस्य' इति परसवर्णो बोध्यः। अन्यथा विवक्षितचित्रभ्रंशापत्तिः। यद्यपि 'सबिन्दुकाबिन्दुकयोस्सविसर्गाविसर्गयोः' इति चित्रादावभेदकल्पनाऽभ्युपगता कविभिः। तथाऽपि यावद्बुद्धिबलोदयं तादृशक्लेशानाश्रयणमेव ज्याय इति ध्येयम्। अस्मिन्पद्यद्वयेऽपि तारागौरेति प्रागुदाहृतपद्यवदेव पद्मादिबन्धा द्रष्टव्याः॥

---

अथ गोमूत्रिका

एकान्तरं तु वर्णानामेकरूपत्वमर्धयोः।
गोमूत्रिकाख्यं चित्रं तदाहुश्चित्रविदो बुधाः॥

अर्धयोः श्लोकस्य यथाक्रमं पूर्वोत्तरार्धयोः एकान्तरं एकाक्षरव्यवहितं यदेकरूपत्वं अभिन्नाकारत्वं तत् गच्छतो गोर्मूत्राकारकतया घटितत्वे गोमूत्रिकाख्यं चित्रमिति चित्रकाव्यविद आहुः। गोमूत्रमिव गोमूत्रिका। 'इवे प्रतिकृतौ' इति कनि टापि 'प्रत्ययस्थात्' इति इत्वम्॥

यथा—

भोगीश्वरशैलक्षितिविलासलोलो ददातु नः कुशलम्। योगीश्वरजालस्तुतिकुलामलोऽसौ दधातु नो कुफलम्॥ २३७१॥

भोगीश्वरशैलक्षितौ विलासे लोलः श्रीनिवास इत्यर्थः। नः कुशलं ददातु योगीश्वरजालस्य स्तुतिकुलैः स्तोत्रनिवहैः अमलः प्रसन्न इत्यर्थः। असौ श्रीनिवासः कुफलं कुत्सितफलं नो दधातु

न पुष्णात्वित्यर्थः । इयं युग्माक्षरश्लिष्टगोमूत्रिका । उद्धारक्रमस्तु षोडशदलपद्मनिरूपणावसर एव प्रदर्शितः ॥

| | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| भो | गी | श्व | र | शै | ल | क्षि | ति | वि | ला | स | लो | लो | द | दा | तु | नः | कु | श | लं |
| यो | गी | श्व | र | जा | ल | स्तु | ति | कु | ला | म | लो | सौ | द | धा | तु | नो | कु | फ | लं |

इदमेव पद्यं प्रागुपदर्शितरीत्या त्रिवोधिकगोमूत्रिकाकारोऽपि भवति । एवमुत्तरत्रापि ॥

यथावा—

**फणिशैलशिरोधामा नवजलजविलोचनस्सदाऽपायात् । मणिलोलदुरोदामा भववलनविमोचनस्स मां पायात् ॥ २३७२ ॥**

मणिना तरळरत्नेन लोलत् चलत् उरोदाम वक्षोहारो यस्य तथोक्तः सः भगवान् मां सदा अपायात् पायादिति योजना । इयमपि युग्माक्षरश्लिष्टगोमूत्रिकैव । अत्रापि प्रागुपदर्शितरीत्या बन्धलेखनप्रकारः ॥

यथावा—

**माधव दूरे वचसां चरितं तव पापहारि दलितभवम् । मामव शौरेऽनुचरं चलितं भवतापतोऽरिकालितभयम् ॥ २३७३ ॥**

भवतापतः संसारतापेन चलितं अनवस्थितचित्तं अरिभिः कामादिभिः कलितं भयं यस्य तं अरिषड्वर्गत्रस्तामित्यर्थः । अनुचरं तव किंकरं "कुरुष्व मामनुचरम्" इत्येतदनेन ज्ञाप्यते । मां अव रक्ष । इयमयुग्माक्षरश्लिष्टगोमूत्रिका ॥

उद्धारस्तु—

यथावा—

**मनसिजसमानरूपे हृदयं ल-**
**गतादशेषजगतीशे। महसि लस-**
**मानचापे सदये लघु तादृशोऽरि-**
**जयतीव्रे ॥ २३७४ ॥**

अरिजयविषये तीव्रे तीक्ष्णे मनसिजसमानरूपे आनयतीत्यानं जगदुज्जीवयितृ रूपं मनसिजसमं आनरूपं यस्य तस्मिन्निति विग्रहः। यद्वा मान्यत इति मानं 'अकर्तरि च कारके' इति कर्मणि घञ् तादृशं च तत् रूपं च तेन सह वर्तत इति समानरूपं। मनसिज इव समानरूपमिति विग्रहः तस्मिन् कन्दर्पतुल्यमाननीयरूप इत्यर्थः। न तु समानं रूपं यस्येति विग्रहः। तथा सति 'ज्योतिर्जनपद' इत्यादिना समानशब्दस्य सभावापत्तेः। यद्वा समानशब्दात्प्रशंसायां रूपप्प्रत्ययः प्रशस्तं समानं समानरूपमिति विग्रहः। मनसिजस्य प्रशस्ते समाने इत्यर्थः। तत्तुल्यसौन्दर्ये इति भावः। लसमानं लसनशीलं चापं यस्य तस्मिन्। लसतेश्चानश्। 'लसमाननवांशुकः' इति माघः। लघु क्षिप्रं हृदयं लगतादिति योजना। इदमपि पद्यं अयुग्माक्षरश्लिष्टगोमूत्रिकारूपम् ॥

हारबन्धो यथा—

**श्रीलक्ष्मीलक्ष्मालङ्क्रियं घनाघनघनाश्रियश्श्रयभयदम् । पूतध्यातश्चेतश्शेषधराधरधरामणिङ्गुणिभाणितम् ॥ २३७५ ॥**

श्रीः लक्ष्मीः लक्ष्म श्रीवत्सश्च अलङ्क्रिये अलंकारौ यस्य तम् । घनाघनघनाश्रियः प्रावृषेण्यजलदसान्द्ररुचः भयदं ततोऽपि नीलमितियावत् । पूतैः शुद्धान्तःकरणैः मुनिभिः ध्यातं उपासितम् । गुणी अनन्तकल्याणगुणाकर इति भणितं श्रुतिभिः प्रतिपादितं शेषधराधरधरायाः मणिं रत्नभूतं श्रीनिवासं हे चेतः हृदय श्रय आश्रयस्व ॥ उद्धारस्तु—



कविनामाङ्कितगवाक्षबन्धो यथा—

कृत्तोष्णाभविनिर्यद्रुचिमदविकसनमणिं कलये।
विनतजनादरणकृतं फणिगिरितिलकं हरिं ध्येयम्॥

उष्णाभात् भानोः विनिर्यन्त्याः रुचेः प्रभायाः यो मदः तस्य विकसनं उन्मेषः तत् कृत्तं छिन्नं येन स तथोक्तः मणिः कौस्तुभो यस्य तं दिनमणिघृणिमदक्षपणनिपुणमणिवरोरस्कमित्यर्थः। विनतजनानां आदरणकृतं फणिगिरितिलकं हरिं ध्येयं कलये ध्यायामीत्यर्थः। लक्षणं तु—

उपर्युपरि कोष्ठानि भवेयुर्नव मध्यतः।
तिर्यक्कोष्ठान्यपि तथा भवेयुर्मध्यतो नव॥
उभयोरनयोः पार्श्वद्वये कोष्ठान्यनुक्रमात्।
सप्त पञ्च तथा त्रीणि निष्पद्येरन्यथा तथा॥
तुल्यप्रमाणा विलिखेत्तिर्यगूर्ध्वं च रेखिकाः।
मध्यवीथीशिरःकोष्ठादारभ्य विलिखेद्बुधः॥
एकं त्रीन्पञ्च सप्ताथ नव सप्त च पञ्च च।
त्रीनेकं चेति पद्यस्य वर्णांस्तिर्यगनुक्रमात्॥
ऊर्ध्वमध्यमवीथीस्थवर्णैः प्रामिळितैः क्रमात्।
स्वोद्देश्यकाविकाव्यादिनाम्नामुद्धृतिरिष्यते॥
गवाक्षो नाम बन्धोऽयं सरलः कविसम्मतः।




अत्र ऊर्ध्वमध्यमवीथ्यां 'कृष्णार्यकविकृतिरियम्' इति कवि-नामादिकमुद्धृतम्। इममेव रथबन्ध इत्यप्याहुः॥



अमलं जगतां कारणमुदाररत्नावभासितोरस्कम्। महनीयं विनुमः फणिगिरिराजविहारि किन्नरोद्रेयम् ॥ २३७७ ॥

अत्र ऊर्ध्वमध्यमवीथ्यां 'अलंकारमणिहारोऽयम्' इति काव्यनामोद्धारः

इत्यलंकारमणिहारे शब्दालंकारसरो द्वात्रिंशोत्तरशततमः.



असमग्रं गार्हस्थ्ये स्वेन कृतां कृतिमिमां यतिवरेण्यः। श्रीशमुदे समपूरि श्रीकृष्णब्रह्मतन्त्रपरकालः ॥ २३७८ ॥

अपूरि अपूरयत 'दीपजनबुधपूरि' इति पूरयतेः कर्तरि लुङि चिण् ॥

मानातिगनानागमगानार्हयशाः फणीशशिखरीशः। प्रीणातु श्रीनाथस्स्वेनानेनारचय्य कृतिमेनाम् ॥ २३७९ ॥

कवनं मम तव नाथ स्तवनायानर्हमिति विदित्वाऽपि। यदभवमिह साहसिकस्तदखिलमपि बालकृतमिति सहेथाः ॥ २३८० ॥

श्रुतयो भृशमप्रतिहतगतयोऽपि यतस्स्वतो निवर्तन्ते। मितमतिरपि तस्य तव स्तुतिमतनवमिति तु चपलतोल्लासः ॥ २३८१ ॥

सुकुमाराकृतिवर्णा सालंकरणा च सुरुचिक-
रचरणा । कविताश्रीरेत्य त्वां कमितारं नाथ मदु-
दितोल्लसतात् ॥ २३८२ ॥

सुकुमाराकृतयो वर्णाः अक्षराणि यस्यां सा सानुस्वार-कोमलवर्णघटितेत्यर्थः । पक्षे सुकुमारौ आकृतिवर्णौ यस्यास्सेति । सुरुचिकराः आस्वाद्यतमाः चरणाः श्लोकपादाः यस्या सा । अन्यत्र सुरुचि शोभनच्छावि करचरणं पाणिपादं यस्यास्सेति । मदुदिता मया उदीरिता मत्तो जातेति च कविताश्रीः कवनलक्ष्मीः उल्लसतात् प्रकाशतां प्रमोदतां च ॥

धन्या मम कवितेव क्वान्या भवितेह मृग्यतां
जगति । कन्यामिवोदधेर्यां मान्यां हृद्यां तनोति
फणिगिरिराट् ॥ २३८३ ॥

मान्यां पूज्यां उदधेः कन्यामिव यां मान्यां मायाः श्रियः अन्यां तस्याः द्वितीयां सतीं हृद्यां वक्षस्स्थां हृदयप्रियां च तनोतीति योजना ॥

नन्दतु वा निन्दतु वा मन्दमनीषो निशम्य
कृतिमेताम् । हर्षं वाऽमर्षं वा सर्षपमात्रमपि
नैव विन्देम ॥ २३८४ ॥

प्रौढतरो हि निबन्धो मूढमतेर्दुर्निरीक्ष एव
भवेत् । दीपोऽतिमात्रमुज्ज्वलरूपो नेत्रातुरस्येव ॥

प्रगुणामलसुगुणावलिमसृणितमाद्यन्तमेकरूपतया । सुवसनमिव सुकवनमिह न मन्दभाग्योऽनु विन्दते क्वापि ॥ २३८६ ॥

कोमलधीरस्मादपि कोमलमेकमपि योऽभिनन्देच्छ्लोकम् । इह यस्तु कोपकारी कवयेऽस्मै भवति कोऽपकारी तस्मात् ॥ २३८७ ॥

कोमलं न तु कठिनं एकमपि न तु पञ्चषान् द्वित्रान्वा, श्लोकं अभिनन्दति यः अस्मात्पुंसः एतदपेक्षया कः पुमान् अमलधीः असूयादिकालुष्यविधुरतया स्वच्छधीः अस्ति। इह अस्मिन्नेकस्मिन्नपि श्लोके यस्तु कोपकारी असूयाकृदिति यावत् तस्मात्पुंसोऽपि अस्मै ग्रन्थकृते कवये अपकारी कस्स्यात्। असूयापेक्षया कोन्योऽपकार इति भावः ॥

दुष्प्रेक्षो यो भविता दुष्प्रेक्षस्तेन हि प्रबन्धोऽयम् । सुप्रेक्षस्तु भवेद्यस्सुप्रेक्षस्तेन नात्र संदेहः ॥

दुष्टा अविवेकासूयादिदोषदूषिता प्रेक्षा मतिः यस्य सः 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः । दुःखेन प्रेक्ष्यत इति दुष्प्रेक्षः प्रेक्षितुमशक्य इत्यर्थः । ईक्षतेः 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल् । एवमग्रे सुप्रेक्ष इत्यत्रापि ॥

अनधिगतकाव्यपरिमळलेशाः कतिचन गभीरभावाढ्ये । कविवचने मा जात्वपि गुणदोषविवेकचापलं यान्तु ॥ २३८९ ॥

सरसकविवचनपरिमळमभिजानन्ति हि बुधा न जात्वन्ये। प्रतिपर्वतशिखरस्थैर्न ह्युपलैर्गृह्यते सूची ॥ २३१० ॥

सरसकवितासर्वस्वज्ञैश्शिरस्पद्लालिता कृतिरतितरां तद्गन्धास्वादनेऽतिदवीयसः। धुरि न पदमाधत्तां मृद्वी नवा सुमनालिका शिरसि सुदृशां लाल्या हस्ते कपेरिव जात्वपि ॥ २३११ ॥

अन्तर्बहिरपि रसलवदवीयसीं रसविदग्रणीः को वा। सिकतामिव दुष्कवितां चर्वितुमीहेत सर्वतः कठिनाम् ॥ २३१२ ॥

आपाततोऽतिकठिनाऽप्यास्वाद्यत एव रसघनावयवा। कविता प्रौढकवीनां भविता ननु खण्डशर्करातुलिता ॥ २३१३ ॥

अविवेचितमपि मधुरं विवेचितं त्वन्तरातिरसघनत्वात्। कदलीफलमिव सत्कविकवनं रसिकस्य भाति मधुरतमम् ॥ २३१४ ॥

अविवेचितं—अविचारितं अपृथक्कृतोपारित्वक्क। विवेचितं विचारितं पृथक्कृतत्वक्क। रसघनत्वात् केवलरसमयत्वात्। अन्यत्सुगमम् ॥

सम्यग्विवेचनेन स्वच्छीभूतं व्यनक्ति गुणजातम्। तूलमिव काव्यजालं न यदि तथा जातु न गुणलेशमपि ॥ २३१५ ॥

विवेचनेन विचारणेन। पक्षे बीजतः पृथक्करणेन। स्वच्छीभूतं निर्मलीभूतं सम्यग्गृहीतार्थमिति च। तूलमिव—कार्पास तूलमिव काव्यजालं गुणजातं सौशब्द्यादिगुणनिवहं तन्तुसन्तानं च व्यनक्ति ॥

अनुगुणविवरणमसृणं ससितं नवनीतमिव रसज्ञानाम्। भव्यतमं काव्यमिदं नव्यमतिस्वाद्यतां प्रपद्येत ॥ २३१६ ॥

ससितं—सशर्करं 'शर्करा सिता' इत्यमरः। रसज्ञानां रसिकानां रसनानां च ॥

भूयोगुणे प्रबन्धे प्रायो दोषं न गणयति रसज्ञः। मधुरमधुरसनरसिकस्सरघोद्गीर्णमिति चिन्तयति किं तत् ॥ २३१७ ॥

गुणगणयिता कृताविह निरस्यति तरामनीषदपि दोषम्। दूरं त्वचं निरस्यति रसं रसयिता नरो रसालस्य ॥ २३१८ ॥

सरसकविवचननलिनं समदकुतार्किकलुलाय-

वदमृद्गन् । अपरुषविमर्शतः कविरामोदं मन्दपवन इव विन्देत् ॥ २३९९ ॥

अपरुषविमर्शतः—सरळतमविचारेण कोमलस्पर्शेन च । आमोदं—हर्षं परिमळं च ॥

न प्राचीनत्वं वा नव्यत्वं वाऽपि रम्यताहेतुः ।
गुण एवैको ग्रन्थं गुणिनो निर्मत्सरा इममुपाध्वम्॥

उपाध्वं उपासीढ्वमित्यर्थः । उपपूर्वकादासेर्लोट् मध्यमबहुवचनम् । 'धि च' इति सलोपः ॥

प्राचीनमेव कवनं मधुरं न नवीनमिति कृतिप्रवराः । भवतां हृदि मा भवतादभिनवमपि मधु कुतो न मधुरं स्यात् ॥ २४०१ ॥

प्रतनं वाऽस्तु नवं वा कवनं गुणवद्बुधैरुपादेयम् । द्वीपेऽन्यस्मिन्निह वाऽप्युदेतु रत्नं बुधा न नाददते ॥ २४०२ ॥

योऽलंकृतीरिमा मुहुरालम्ब्य धियं प्रसाधयेत निजाम् । सोऽलं कृतीतरकृतीः कूलंकषधीः कथं लुलोकिषते ॥ २४०३ ॥

यः कृती इमाः एतावता प्रबन्धेन निरूपिता अलंकृतीः अलंकारान् भूषणानीत्यपि । गम्यते आलम्ब्य प्राप्य निजां धियं स्वब-

ह्रभामित्यपि व्यज्यते। प्रसाधयति अलंकरोति। अलं कूलंकषधीः प्रबन्धगतचमत्कृतिसर्वस्ववेदी उचितानुचितविमर्शकारीत्यपि व्यज्यते। सः कृती कुशलः इतरकृतीः अन्यानसारान् प्रबन्धान् इतरवधूरित्यपि व्यज्यते। कथं लुलोकिषते द्रष्टुमपि नेच्छति किमुत पश्येदिति। अत एवात्र समासोक्त्यलंकारः॥

अभ्यस्तैकैकविद्याः क्वचन मम कृतिं वीक्ष्य हृष्यन्तु मा वा तत्तादृक्सर्वविद्यापरिचयनिपुणा हन्त हृष्यन्त्यवश्यम्। प्रायो मात्सर्यमेषां न खलु विधिवशाद्यद्यमीषामपि स्यात् किं कार्यं श्रीहयास्यो जयति गुणनिधिस्सर्वविद्यानिषद्या॥

विद्याविहृतिनिषद्या हृद्या तुरगानना धुतावद्या। हृद्याहिता प्रसद्यादाद्या सा देवता बुधासाद्या॥ २४०५॥

ब्रह्माणं प्रविधाय नाभिकमले वेदानपि प्राहिणोद्यत्तस्मै मधुकैटभोत्थविपदो यत्त्रायते स्माथ तान्। तद्धामावतु पाञ्चकालिकपथप्रस्थाननिष्ठैर्यतिश्रेष्ठश्रीनिगमान्तदेशिकमुखैर्दत्तार्हणं देशिकैः॥

या वाण्या यतिराजराजवशगा चक्रेऽर्चिता या चिरात् प्राचार्यैर्निगमान्तदेशिकमणिश्रीब्रह्म-

तन्त्रादिमैः । याऽध्यास्ते परकालसंयमिवरास्थानीमिदानीमपि श्रेयस्संविदधातु सैन्धवमुखी सैषा परा देवता ॥ २४०७ ॥

श्रीमद्भाष्यं निशम्याद्भुतमिति शिरसा शारदा श्लाघमाना स्वार्चां यां स्वीयपीठे सह यतिपतये भाष्यकाराख्ययाऽदात् । सेयं वागीशमूर्तिर्यतिपतिकुरुकेशागमान्तार्यमुख्यैः क्लृप्तार्चा ब्रह्मतन्त्रोत्तमकलिमथनास्थानपूज्याऽधुनाऽऽस्ते॥

ज्ञानानन्दामलात्मा कलिकलुषमहातूलवातूलनामा सीमातीतात्मभूमा मम हयवदना देवता धावितारिः । याता श्वेताब्जमध्यं प्रविमलकमलस्रग्धरा दुग्धराशिस्मेरा सा राजराजप्रभृतिनुतिपदं संपदं संप्रदत्ताम् ॥ २४०९ ॥

वन्दे तं देवमाद्यं नमदमरमहारत्नकोटीरकोटीवाटीनिर्यत्ननिर्यद्धृणिगणमसृणीभूतपादाम्बुजातम्। श्रीमद्रामानुजार्यश्रुतिशिखरगुरुब्रह्मतन्त्रस्वतन्त्रैः पूज्यं प्राज्यं सभाज्यं कलिरिपुगुरुभिश्शाश्वदश्वोत्तमाङ्गम् ॥ २४१० ॥

निरालोके लोके विमतकथकध्वान्तनिवहैः श्रियःपत्याऽऽज्ञप्तो धरणिमवतीर्यातिकृपया । व्यतानीद्यो भाष्यद्युमणिमखिलाज्ञानहृतये स जीयाच्छ्रीरामानुजमुनिवरात्मा फणिपतिः ॥ २४११ ॥

टीकाकारस्सूत्रकारोऽपि यस्य व्यासाचार्यो भारतख्यातकीर्तिः । तच्छ्रीभाष्यं श्रीयतीन्द्रप्रणीतं भूयान्नित्यं भूयसे श्रेयसे नः ॥ २४१२ ॥

शेषाद्रीश्वरपादपद्मयुगळीकैंकर्यहेतोः पुरा या घण्टा किल भक्तिनम्रमनसा पद्मासनेनार्पिता । तत्तत्तन्त्रपिशाचधूननकृते संकल्पतः श्रीपतेः जातायै निगमान्तदेशिकनिभात्कस्यैचिदस्यै नमः॥२४१३

जिह्वासिंहासनाग्रस्फुटनटनतुरङ्गास्यमञ्जीरशिञ्जास्पर्धानिर्धार्यवाचानिचयनिचुलितप्रत्यनीकप्रचारः । श्रीमान्रामानुजार्यप्रथिततममतश्रीललामाऽर्कधामा नित्यं श्रुत्यन्तविद्यागुरुरिह जगतां भद्रवत्तां विधत्ताम् ॥ २४१४ ॥

संसाराटोपतापक्षपणनिपुणवाग्धोरणीसारणीश्रीः वाणीसंपूज्यपादादिमतुरगमहामन्दुराऽऽनन्द-

राशिः। संख्यातीतप्रबन्धप्रशमितविमतव्रातशङ्का-
कलङ्को मोदन्वेदान्तसूरिर्दिशतु गुरुवरस्सर्वतन्त्र-
स्वतन्त्रः ॥ २४१५ ॥

आदिश्रीविष्णुशठारिर्यतिपतिरभवद्यत्पदाब्जो-
पजीव्यः सोऽयं श्रीवत्सवंश्यो वरदगुरुरपि च्छा-
त्रतां यत्र भेजे। द्वैतीयीकावतारो य इह यतिपते-
र्ब्रह्म यश्च द्वितीयं छात्रो वेदान्तसूरेस्स खलु विज-
यतां ब्रह्मतन्त्रस्वतन्त्रः ॥ २४१६ ॥

यच्चक्राङ्कप्रभावाद्यदुनृपतिमुखाः प्राज्यसाम्रा-
ज्यगोपा भूपास्सर्वेऽपि खर्वेतरनिजयशसश्श्रीम-
हीशूरपुर्याम्। तेऽमी शेषाद्रिवासाश्श्रुतिमकुटगुरू-
त्तंससिद्धान्तसिद्धास्सर्वेऽप्युर्व्यां प्रथन्तां यतिकुलप-
तयो ब्रह्मतन्त्रस्वतन्त्राः ॥ २४१७ ॥

डिल्लीशानार्चिताङ्घ्रिर्यतिकुलनृपतेर्यस्तृतीयोऽव-
तारो दिव्ये देशे समग्रेऽकृत निगमशिरोदेशिकार्चा-
प्रतिष्ठाम्। यश्श्रीमद्ब्रह्मतन्त्रोत्तमयतितिलकास्थान-
लक्ष्मीनिधानं कुर्वन्नार्तप्रपत्तिं स्फुटनिजमहिमां
न्यासविद्यामतानीत् ॥ २४१८ ॥

यश्श्रीकर्णाटसिंहासनविदितमहीशूरराजाधिराजान् कृष्णाद्यान्वैष्णवाग्र्यानकृत समहिळात्र् शङ्खचक्राङ्कनाद्यैः । व्याख्यां भाष्यस्य तद्वत्परमुपनिषदां द्रामिडीनां च चक्रे विख्यातोदात्तभूमा स जयतु परकालाभिधानो यतीन्द्रः ॥ २४१९ ॥

श्रीश्रीनिवासनिगमान्तरमानिवासरामानुजाख्यपरकालमहायतीन्द्राः । व्यूहा इवात्तवपुषो जगतां हिताय चत्वार ऊर्जितसमग्रगुणा जयन्तु ॥

घण्टावतारनिगमान्तरमानिवासश्रीदेशिकेन्द्रयतिपुङ्गवरङ्गनाथाः । श्रीब्रह्मतन्त्रपरकालपदावतंसा जीयासुरुज्ज्वलगुणा गुरुसार्वभौमाः ॥ २४२१ ॥

दुराधर्षश्रीमद्यातिपतिमतस्थापनपराः परात्यल्पप्रज्ञग्रथितकुहनापद्धतिहराः । हरौ लक्ष्मीनाथे निहितनिखिलस्वावनभरा धरायां जीयासुः प्रथितयशसोऽस्मद्गुरुवराः ॥ २४२२ ॥

श्रीवासब्रह्मतन्त्राग्रिमपदकलिजिद्देशिकेन्द्रानघाङ्घ्रिद्वन्द्वाब्जानुग्रहात्तप्रतिपदविविधग्रन्थनिर्मा-

णशक्तिः । व्याधत्तैतद्वृषाद्रीश्वरसुगुणमणीहार्यलं-
कारशास्त्रं श्रीकृष्णब्रह्मतन्त्रादिमपदपरकालाभि-
धानोयतीन्द्रः ॥ २४२३ ॥

पञ्चसहस्रेष्वेकाधिकेषु (५००१) यातेषु कलि-
युगेऽब्देषु । अब्दे विकारिनामनि पूर्णोऽलंकारम-
णिहारः ॥ २४२४ ॥

अधिकण्ठं सोत्कण्ठं विधृतो यैरेष विश्रुतौ-
ज्ज्वल्यः । प्रथयति लक्ष्मीमेषां प्रायोऽलंकारमणि-
हारः ॥ २४२५ ॥

रसवत्प्रेयस्सुन्दरमूर्जस्विसमाहितप्रियंकरणम् ।
जयतु सनातनमिथुनं सालंकरणं मदीयकवनं च ॥

रसवत् शृङ्गारादिरसशालि । प्रेयः अन्योन्यप्रियतमं सुन्द-
रं । पक्षे रसवत्प्रेयोभ्यां तन्नामालंकाराभ्यां सुन्दरम् । ऊर्जस्वि
बलवत् । समाहितानां समाहितमनस्कानां योगिनां प्रियंकरणम् ।
पक्षे ऊर्जस्विसमाहिताभ्यां तन्नामालंकाराभ्यां प्रियंकरणं । सना-
तनमिथुनं लक्ष्मीनारायणात्मकं द्वन्द्वं मदीयकवनं च जयतु ॥

भवतु गुणोऽन्यो मा वा भवदैकान्त्यं गुणो
महानस्याः । पत्या सतीव तादियं प्रीत्याऽऽदृत्या
त्वयाऽच्युत कृतिर्मे ॥ २४२७ ॥

जयतु जगति नित्यं लक्ष्मणार्यस्य पक्षो जयतु निगमचूडादेशिकेन्द्रस्य सूक्तिः । जयतु हयमुखीयास्थानसंपत्समृद्धिः जयतु च वृषशैले श्रीनिवासस्थिरश्रीः ॥ २४२८ ॥

इति श्रीमद्वेदमार्गप्रतिष्ठापनाचार्य परमहंसपरिव्राजकाचार्य सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्य श्रीमत्कविकथककण्ठीरवचरणनलिनयुगळ विन्यस्तसमस्तात्मभर श्रीमद्रामानुजसिद्धान्तनिर्धारणसार्वभौम श्रीमच्छ्रीनिवासब्रह्मतन्त्रपरकालसंयमिसार्वभौमकरुणाकटाक्षवीक्षिततत्कृपासमाधिगतब्रह्मविद्यावैशद्यस्य तत्तादृश श्री श्रीनिवासदेशिकेन्द्रब्रह्मतन्त्रपरकालयतीन्द्र महादेशिक कृपासमुपार्जितरहस्यसंप्रदायस्य तच्चरणनलिनसमर्पितात्मरक्षाभरस्य तादृशश्रीरङ्गनाथब्रह्मतन्त्रपरकालमुनिवरेण्यमहादेशिककृपासुधासारसंप्राप्त तुरीयाश्रम ब्रह्मतन्त्रपरकालगुरुवरास्थानाभिषेकस्य श्री कर्णाटदिव्यरत्नसिंहासनसाम्राज्याभिषिक्त श्रीमन्महीशूरनगराधीश्वर श्रीकृष्णराजसार्वभौम संततिसंतत देशिकस्य श्रीकृष्णब्रह्मतन्त्रपरकालयतीन्द्रस्य कृतिषु अलंकारमणिहाराख्यमलंकारशास्त्रं संपूर्णम्.

श्री श्रीब्रह्मतन्त्रपरकालगुरुपरम्परायै नमः

समाप्तोयं प्रबन्धः



श्रीः

# अलङ्कारमणिहार लक्षणश्लोकाः.



जयतु श्रीवृषाद्रिस्थं जगत्त्रितयरक्षणम् ।
वदान्यं परमं ब्रह्म वक्षोऽलङ्कारलक्षणम् ॥

## (१) उपमा.

उद्भूता भाति साम्यश्रीरुभयोर्यत्र सोपमा ।
वाक्यार्थोपस्कारकं यत्सादृश्यं चारु सोपमा ॥
पूर्णा लुप्तेत्यलङ्कारतत्त्वज्ञैस्सा द्विधोदिता ।
उपमानं चोपमेयं धर्मो वाचकमित्यदः ॥
चतुष्टयमुपात्तं चेत्सा हि पूर्णोपमा मता ।
वर्ण्योपमानयोर्द्धर्मोपमावाचकयोरपि ॥
एकद्विव्यनुपादाने भवेल्लुप्तोपमाऽष्टधा ।
वाचकस्यात्र धर्मस्य धर्मवाचकयोस्तथा ॥
वर्ण्यवाचकयोर्लोपे तत्तल्लुप्ताः खलूपमाः ।
उपमानस्य लोपे तु तल्लुप्ता पञ्चमी स्मृता ॥
प्रोक्ता षष्ठी वाचकोपमानलुप्तेति कोविदैः ।
धर्मोपमानलुप्ताऽन्या लोपे धर्मोपमानयोः ॥
अष्टमी धर्मोपमानवाचकानां विलोपने ।
एवं कुवलयानन्दप्रकारेणोपमोदिता ॥

प्राचां मते विभागोऽस्या उपमायाः प्रपञ्चयते ।
पूर्णा लुप्तेति भेदेन द्विविधा सा तयोः पुनः ॥
श्रौत्यार्थीति द्विधा पूर्णा वाक्यगा च समासगा ।
तद्धितस्थेति च त्रेधा ते द्वे स्यातां पृथक्पृथक् ॥
यथेववादिशब्दानां साक्षात्सादृश्यवाचिनाम् ।
उपादाने भवेच्छ्रौतीत्याहुश्शास्त्रविचक्षणाः ॥
ये धर्मिव्यवधानेन सादृश्यप्रतिपादकाः ।
सदृक्षनिभादिशब्दानां तेषामार्थी प्रयोगतः ॥
त्रिविधा स्यादेकलुप्ता द्विलुप्ता तु चतुर्विधा ।
एकरूपा त्रिलुप्तेति लुप्ता सामान्यतोऽष्टधा ॥
धर्मस्याथोपमानस्य वाचकस्य विलोपने ।
त्रिविधा स्यादेकलुप्ता द्विलुप्ता तु चतुर्विधा ॥
धर्मवाचकयोर्लोपे तथा धर्मोपमानयोः ।
वर्ण्यवाचकयोस्तद्वद्वाचकावर्ण्ययोरपि ॥
त्रिलुप्ता त्वेकधा धर्मवाचकावर्ण्यलोपतः ।
क्रमेण धर्मलुप्तादेर्विभागोऽथ प्रदर्श्यते ॥
पूर्णावद्धर्मलुप्ताऽपि श्रौत्यार्थीति द्विधा भवेत् ।
तत्र श्रौती तद्धिते तु न स्यादन्वयहानतः ॥
लुप्तोपमाना द्विविधा वाक्यगा च समासगा ।
वादिलुप्ता समासे स्यात्कर्माधारक्यचोः क्यङि ॥
कर्मकर्त्रोर्णमुलि च णिनौ क्विपि च तद्धिते ।
एवं नवप्रकारैषा ज्ञेया वाचकलोपिनी ॥
धर्मवाचकलुप्ता तु वर्णिता क्विप्समासयोः ॥
धर्मोपमानलुप्ता तु वाक्ये वृत्तौ च तद्धिते ॥

क्वचिल्लुप्ता वाचकोपमेयाभ्यामपि संमता ।
क्वचित्समास एव स्याद्वाचकावर्ण्यलोपिनी ॥
या धर्मवाचकावर्ण्यलुप्ता सा स्यात्समासगा ।
एवमष्टविधा लुप्ताः प्राचां रीत्या निरूपिताः ॥
एकस्यैवोपमेयस्य यद्यनेकोपमानता ।
तदा मालोपमामेतामाहुः केचिद्विचक्षणाः ॥
पूर्वपूर्वोपमेयस्य भवेद्यद्युत्तरोत्तरम् ।
उपमानत्वमेषोक्ता कविभी रशनोपमा ॥

(२) उपमेयोपमा·

उपमेयोपमा सा स्यादुपमानोपमेययोः ।
पूर्वयोर्वैपरीत्यं चेत्परतः पुनरुच्यते ॥

(३) अनन्वयः.

अनन्वयो यदेकस्यैवोपमानोपमेयता ॥

(४) असमः·

उपमायास्सर्वथैव निषेधोऽसम उच्यते ।
प्राञ्चो नेदमलङ्कारान्तरमित्येव मन्वते ॥

(५) उदाहरणम्.

सामान्योक्तसुबोधाय तदेकांशनिरूपणात् ।
उक्ते तयोरवयवावयवित्व उदाहृतिः ॥

(६) प्रतीपम्.

प्रतीपमुपमानस्य वर्ण्यां चेदुपमेयता ।
अवर्ण्यस्योपमेयस्य लाभाद्वर्ण्यतिरस्कृतिः ॥

लाभाद्वर्ण्योपमेयस्य स्यादन्यानादरश्च तत् ।
उपमाया अनिष्पत्तिर्वर्ण्येनान्यस्य चापि तत् ॥
उपमानस्य कैमर्थ्यं प्रतीपं पञ्चमं विदुः ।

(७) रूपकं.

यत्स्याद्विषयिरूपेण विषयस्योपरञ्जनम् ।
रूपकं तद्द्विधाऽभेदताद्रूप्यावसितं विदुः ॥
आरोपे सत्यभेदस्याभेदरूपकमुच्यते ।
ताद्रूप्यरूपकं तत्स्यात्ताद्रूप्यस्य स चेद्भवेत् ॥
तद्द्वयं च त्रिधाऽऽधिक्यन्यूनत्वानुभयोक्तिभिः ।
पूर्वावस्थात आरोप्यमाणस्याधिक्यवर्णनम् ॥
वर्ण्यायां चेदवस्थायामधिकाभेदरूपकम् ।
न्यूनता प्रागवस्थातश्चेन्न्यूनाभेदरूपकम् ॥
आधिक्यन्यूनताभावेऽनुभयाभेदरूपकम् ।
ताद्रूप्यरूपकेऽप्येवं त्रैविध्यं सद्भिरूह्यताम् ॥
प्राचां मते विभागोऽपि रूपकस्य निरूप्यते ।
त्रिधा साङ्गं निरङ्गं च परम्परितमित्यदः ॥
समस्तवस्तुविषयमेकदेशविवर्ति च ।
इति सावयवं चापि द्विविधं तत्र रूपकम् ॥
यत्परस्परसापेक्षनिष्पत्तीनां निबध्यते ।
रूपकाणां तु संघातो भवेत्सावयवं हि तत् ॥
निरूपणेऽवयविनोऽवयवानां च शब्दतः ।
समस्तवस्तुविषयं भवेत्सावयवं हि तत् ॥
आरोप्यमाणं शाब्दं चेत्क्वचिदार्थं च कुत्रचित् ।
एकदेशविवर्त्याख्यमिदं सावयवं विदुः ॥

निरङ्गं तद्विदुर्यत्स्यादङ्गिमात्रस्य रूपणम् ।
तद्द्विधा केवलं मालारूपं चेति सतां मतम् ॥
एकं विषयि यत्रान्यविषय्यन्वितमुच्यते ।
कार्यकारणभावेन स्यात्परम्परितं तदा ॥
श्लिष्टाश्लिष्टविभेदेन तत्परम्परितं द्विधा ।
केवलं मालिका चेति तद्द्वयं द्विविधं भवेत् ॥
एवमष्टविधं प्राचां मते रूपकमिष्यते ।

(८) परिणामः.

विषयी स्वात्मना यत्र प्रकृतानुपयोगतः ।
विषयात्मत्वमभ्येति परिणामस्स ईरितः ॥

(९) उल्लेखः.

ग्रहीतृभिरनैकैर्यदेकस्यानेकधा ग्रहः ।
रुच्यादिकारणवशात् तमुल्लेखं प्रचक्षते ॥
एकस्य विषयादीनामनेकत्वनिबन्धम् ।
नैकधात्वं ग्रहीत्रैक्येऽप्युल्लेखस्सोऽपि संमतः ॥

(१०) स्मृतिः

या सादृश्यपरिज्ञानोद्बुद्धसंस्कारतस्स्मृतिः ।
प्रयोज्या सा स्मृतिर्नामालङ्कृतिः कथ्यते बुधैः ॥

(११) भ्रान्तिः.

चमत्कृतिमती भ्रान्तिर्यस्मिन् सादृश्यहेतुका ।
अनूदिता स्यात्सन्दर्भे तमाहुर्भ्रान्तिमानिति ॥

(१२) सन्देहः.

सम्भावनानिश्चयान्यतराभिन्ना मनोरमा ।
सादृश्यहेतुका बुद्धिःसन्देहालङ्कृतिर्मता ॥

(१३) अपह्नुतिः.

आहार्याभेदबुद्धेश्चेन्निषेधोऽङ्ग्यङ्गमेव वा ॥
एतां सामान्यतः प्राहुरपह्नुतिमलङ्कृतिम् ॥
अन्यारोपफलो यस्स्यात्प्रकृते धर्मनिह्नवः ।
अलङ्कृतिरियं शुद्धापह्नुतिर्नाम गद्यते ॥
स एवापह्नवो युक्तिपूर्वश्चेद्धेत्वपह्नुतिः ।
पर्यस्तापह्नुतिर्यत्र क्वचित्तद्धर्मनिह्नवः ॥
वर्णनीये तदारोपफलको वर्ण्यते यदि ।
भ्रान्तेर्निवारणेऽन्यस्य शङ्कायां भ्रान्त्यपह्नुतिः ॥
अन्यस्य शङ्कया छेकापह्नुतिस्तथ्यनिह्नुतौ ।
छलच्छद्मनिभाद्यैश्च वपुरात्मादिकैः पदैः ।
निह्नुतिश्चेदभिव्यङ्ग्या कैतवापह्नुतिर्हि सा ॥

(१४) उत्प्रेक्षा.

यदन्यधर्मसंबन्धादन्यस्यान्यत्वतर्कणम् ।
सोत्प्रेक्षोक्ता त्रिधैषा स्याद्वस्तुहेतुफलात्मना ॥
उक्तानुक्तास्पदत्वेन वस्तूत्प्रेक्षा द्विधा मता ।
हेतूत्प्रेक्षाफलोत्प्रेक्षे सिद्धासिद्धास्पदत्वतः ॥

(१५) अतिशयोक्तिः.

निगीर्य विषयं यत्र विषय्येवाध्यवस्यते ।
रूपकातिशयोक्तिं तामलङ्कारविदो विदुः ॥
उक्ता सापह्नवा सैव यद्यपह्नुतिगर्भिता ।
भेदकातिशयोक्तिर्यत्प्रस्तुतस्यान्यतोच्यते ॥
असंबन्धेऽपि संबन्धो वर्ण्योत्कृष्ट्यै यदीर्यते ।
संबन्धातिशयोक्तिं तामलङ्कारविदो जगुः ॥

योगेऽप्ययोगोऽसंबन्धातिशयोक्तिरुदीर्यते ।
हेतुकार्यसहत्वे स्यात्सेयमक्रमपूर्विका ॥
हेतुप्रसक्तिमात्रेण कार्यं चेद्विनिबध्यते ।
चपलातिशयोक्तिस्सा निपुणैर्विनिगद्यते ॥
हेतोः कार्यस्य च स्याच्चेत्पौर्वापर्यविपर्ययः ।
अत्यन्तातिशयोक्तिं तामाहुः काव्यविचक्षणाः ॥

(१६) तुल्ययोगिता

वर्ण्यानामेव वाऽन्येषामेव वा धर्म एककः ।
अन्वितो वर्ण्यते यत्र तत्र स्यात्तुल्ययोगिता ॥
हितेऽहिते च यद्वृत्तेस्तौल्यं सा त्वपरा मता ।
यदुत्कृष्टगुणैस्साम्यवचनं साऽपरा मता ॥

(१७) दीपकम्

तद्दीपकं स्याद्यद्वर्ण्यावर्ण्ययोरेकधर्मता ॥

(१८) आवृत्तिदीपकम्

समस्तयोर्व्यस्तयोर्वाऽऽवृत्तौ पदतदर्थयोः ।
आवृत्तिदीपकं प्राहुस्त्रिविधं बुधसत्तमाः ॥

(१९) प्रतिवस्तूपमा

सादृश्यावसिते वाक्यद्वये चेद्धर्म एककः ।
द्विरुपात्तो भवेत्सा तु प्रतिवस्तूपमोच्यते ॥

(२०) दृष्टान्तः

बिम्बत्वप्रतिबिम्बत्वापन्नधर्मादिकं द्वयोः ।
वाक्यार्थयोश्चेदौपम्यमार्थं दृष्टान्त ईर्यते ॥

## (२१) निदर्शना

उपात्तयोरर्थयोश्चेदार्थाभेदः प्रकीर्त्यते ।
औपम्यपर्यवसितो भवेत्सेयं निदर्शना ॥
पदार्थपूर्वा साऽन्या स्यादुपमानोपमेययोः ।
यत्रान्यतरधर्मस्यान्यत्रारोपणमुच्यते ॥
सदसद्बोधनं स्याच्चेत्क्रिययाऽन्या निदर्शना ॥

## (२२) व्यतिरेकः

उक्तः कश्चिद्विशेषश्चेदुपमानोपमेययोः ।
तमाहुर्व्यतिरेकाख्यमलंकारं विचक्षणाः ॥
उपमेयस्योपमानाद्यदा गुणविशेषतः ।
उत्कर्षो वर्ण्यते प्राहुर्व्यतिरेकं तदा बुधाः ॥

## (२३) सहोक्तिः

गुणप्रधानताभाजोरर्थयोरुभयोर्यदा ।
वर्ण्यस्सहार्थसंबन्धस्सहोक्तिं तां तदा विदुः ॥

## (२४) विनोक्तिः

किंचिद्विना प्रस्तुतस्य रम्यताऽरम्यताऽपि वा ।
निबध्यते यदि तदा सा विनोक्तिरलंकृतिः ॥

## (२५) समासोक्तिः

साम्याद्भेदकमात्रस्य गम्यमप्रस्तुतं यदि ।
समासोक्तिमिमां प्राहुः प्राञ्चोऽलंकारवेदिनः ॥

## (२६) परिकरः

साभिप्राये परिकरोऽलंकारस्स्याद्विशेषणे ।

(२७) परिकराङ्कुरः

विशेष्यं यदि साकूतं भवेत्परिकराङ्कुरः ॥

(२८) श्लेषः

वर्ण्यावर्ण्योभयालम्बी श्लेषोऽनेकार्थसंश्रयः ।
आद्योऽष्टधा वर्णपदलिङ्गभाषाविभक्तिभिः ॥
प्रकृतिप्रत्ययाभ्यां च वचनैश्श्लेष ईरितः ।
विभक्त्यादिवशाद्यत्र नानावर्णैकरूपता ॥
श्रूयते स हि विद्वद्भिर्वर्णश्लेष इतीर्यते ।
पदश्लेषस्स यश्श्लेषः पदभेदनिबन्धनः ॥
लिङ्गश्लेषस्स विज्ञेयो ह्रस्वदीर्घसमासतः ।
स्त्रीपुंनपुंसकानां चेच्छब्दानां तुल्यरूपता ॥
भाषाश्लेषस्तु भिन्नार्थनानाभाषैक्यतो भवेत् ।
सुपां तिङां च श्लेषश्चेद्विभक्तिश्लेष ईरितः ॥
अश्लिष्टप्रत्ययकृता प्रकृत्योश्चेत्सरूपता ।
स एष प्रकृतिश्लेषो द्विधा सुप्तिङपेक्षया ॥
प्रकृतिप्रत्ययौघस्यानेकस्य प्रत्ययैर्यदि ।
श्लिष्टैस्सरूपता सोऽयं प्रत्ययश्लेष उच्यते ॥
स भवेद्वचनश्लेषश्श्लिष्यन्ति वचनानि चेत् ॥

(२९) अप्रस्तुतप्रशंसा

स्यात्प्रस्तुतस्य गमकं यत्राप्रस्तुतवर्णनम् ।
अप्रस्तुतप्रशंसाख्या सैषाऽलंकृतिरुच्यते ॥
कार्ये हेतौ तथा व्याप्ये व्यापके प्रस्तुतेऽन्यगीः ।
समे समस्य चेत्येवं सैषा भवति पञ्चधा ॥

(३०) प्रस्तुताङ्कुरः

प्रस्तुतस्य प्रस्तुतेन व्यञ्जने प्रस्तुताङ्कुरः ॥

(३१) पर्यायोक्तम्

पर्यायोक्तं त्वन्यभङ्ग्या कथितं चेद्विवक्षितम् ।
व्याजेन रमणीयेन यदि स्वस्य परस्य वा ॥
साध्यतेऽभीप्सितं तच्च पर्यायोक्तं विदुर्बुधाः ॥

(३२) व्याजस्तुतिः

स्तुत्याऽभिव्यज्यते निन्दा निन्दया वा स्तुतिर्यदि ।
तत्र व्याजस्तुतिं नाम प्राज्ञाः प्राहुरलंकृतिम् ॥
स्तुत्या निन्दा निन्दया वा स्तुतिर्भिन्नैकगोचरा ।
व्यङ्ग्या विभिन्नविषया स्तुत्या व्याजस्तुतिस्स्तुतिः ॥

(३३) व्याजनिन्दा

व्याजनिन्दा तु निन्दाया निन्दया व्यङ्ग्यता यदि ॥

(३४) आक्षेपः

स आक्षेपो भवेत्स्वोक्तिनिषेधो यो विमर्शतः ।
निषेधो यो बाधितस्सन् विशेषं कंचिदाक्षिपेत् ॥
वक्ष्यमाणोक्तविषयं तमाक्षेपं परे जगुः ।
निषेधाभासवद्विध्याभासोऽप्याक्षेप इष्यते ॥

(३५) विरोधः

स विरोधोऽविरोधेऽपि विरोधाभासता यदि ।
जात्यादीनां स्वस्वपरसंबन्धाद्दशधा भवेत् ॥

(३६) विभावना

कारणव्यतिरेकेऽपि कार्योत्पत्तिर्विभावना ।
कारणानामसामग्र्ये कार्यजन्म च सा मता ॥
तृतीया प्रतिबन्धेऽपि कार्योत्पत्तिर्विभावना ।
विभावना चतुर्थी स्यात्कार्योत्पत्तिरकारणात् ॥
कार्योत्पत्तिर्विरुद्धाच्चेत्पञ्चमी सा विभावना ।
कारणस्योद्भवः कार्याद्यदि षष्ठी विभावना ॥

(३७) विशेषोक्तिः

विशेषोक्तिः पुष्कलेऽपि हेतौ कार्यं न चेद्भवेत् ॥

(३८) असंभवः

असंभाव्यत्वकथनमर्थासिद्धेरसंभवः ॥

(३९) असंगतिः

भिन्नाधिकरणत्वं यद्विरुद्धं हेतुकार्ययोः ।
वर्ण्यते तमलंकारं प्राज्ञाः प्राहुरसंगतिम् ॥
कार्यमन्यत्र यत्तस्य ततोऽन्यत्र क्रियापि सा ॥
कर्तुमन्यत्प्रवृत्तस्य तद्विरुद्धक्रिया च सा ॥

(४०) विषमम्

अनानुरूप्यभाजोर्यद्घटनं विषमं हि तत् ।
विलक्षणस्य कार्यस्योत्पत्तिं च विषमं विदुः ।
इष्टार्थोद्योगतोऽनिष्टावाप्तिश्च विषमं मतम् ॥

(४१) समम्

यत्रानुरूपघटनं वर्ण्यते तत्समं विदुः ।
समं तदपि कार्यस्य सारूप्यं कारणेन यत् ॥

यत्किञ्चिदिष्टसिद्ध्यर्थं य उद्योगो वितन्यते ।
अनिष्टेन विना तस्य सिद्धिश्च समगुच्यते ॥

(४२) विचित्रम्

इष्टैषिणेष्टसिद्ध्यै तद्विपरीतं क्रियेत चेत् ।
प्रयत्नस्तामिमां प्राहुर्विचित्रालंकृतिं बुधाः ॥

(४३) अधिकम्

आधेयाधिक्यकथनमाधारान्महतोऽधिकम् ।
आधाराधिक्यकथनमाधेयाद्विपुलाच्च तत् ॥

(४४) अल्पम्

आधारसौक्ष्म्यमाधेयात्सूक्ष्मादल्पं तदुच्यते ।
सूक्ष्मादाधारतस्सौक्ष्म्यमाधेयस्य च तद्भवेत् ॥

(४५) अन्योन्यम्

विशेषाधानमन्योन्यमन्योन्यालंकृतिं विदुः ।

(४६) विशेषः

विशेषस्स्याद्विनाऽऽधारादाधेयं वर्ण्यते यदि ॥
यत्रैकमेव युगपदनेकाधारसंश्रयम् ।
आधेयं वर्ण्यते सोपि विशेषः परिकीर्तितः ॥
किंचित्कार्यारम्भमात्रादन्यत्कार्यं सुदुष्करम् ।
कृतं निबध्यते यत्र विशेषस्सोपि संमतः ॥

(४७) व्याघातः

तत्कार्यसाधनं वस्तु तद्विरुद्धस्य साधनम् ।
क्रियते चेत्तदा ख्यातो व्याघातोऽसावलंकृतिः ॥
पराभिमतकार्यस्य विरुद्धा केनचित् क्रिया ।

सौकर्यतो निबद्धा चेद्व्याघातस्सोपि कथ्यते ॥
यद्युत्तरोत्तरस्य स्यात्पूर्वपूर्वानुबन्धिता ।
अर्थेषु पङ्क्तिबद्धेषु व्यत्ययो वाऽपि शृङ्खला ॥

(४८) कारणमाला

पूर्वपूर्वैर्वस्तुभिस्स्यादुत्तरोत्तरकारणैः ।
गुम्भः कारणमालैषा वैपरीत्येऽपि चेष्यते ॥

(४९) एकावळी

उत्तरस्योत्तरस्य स्यात्पूर्वं पूर्वं विशेषणम् ।
विशेष्यं वा यदा प्राहुरिमामेकावळीं तदा ॥

(५०) मालादीपकम्

मालादीपकमेतत्स्याद्दीपकैकावळीयुतः ।

(५१) सारः

सैवोत्तरोत्तरोत्कर्षे सार इत्युच्यते बुधैः ।

(५२) यथासंख्यम्.

उद्देशक्रमतोऽर्थानां संबन्धो यत्र कथ्यते ।
प्राञ्चस्तत्र यथासंख्यमपरे क्रममूचिरे ॥

(५३) पर्यायः

आधेयस्य क्रमादेकस्यानेकाधारसंश्रयः ।
वर्ण्यते यत्र तत्रोक्ता पर्यायोऽयमलंकृतिः ॥
क्रमादाधार एकस्मिन्नाधेयानेकताऽपि सः ॥

(५४) परिवृत्तिः

नियमः परिवृत्तिस्स्यादर्थानां स्यात्समासमैः ।

(५५) परिसंख्या

एकस्यानेकसंप्राप्तौ यदेकत्र नियन्त्रणम् ।
परिसंख्येति तत् प्राहुरलंकाराध्वयायिनः ॥

(५६) विकल्पः

विकल्पः पाक्षिकप्राप्तिर्वर्ण्यते चेद्विरुद्धयोः ।

(५७) समुच्चयः

यौगपद्यात्पदार्थानामन्वयस्स्यात्समुच्चयः ।

(५८) कारकदीपकम्

क्रमिकाणां क्रियाणां चेदेककारकगामिनाम् ।
गुम्भनं क्रियते तत्तु भवेत्कारकदीपकम् ॥

(५९) समाधिः

कारणान्तरसान्निध्यवशात्कार्यस्य कस्यचित् ।
सौकर्यं वर्ण्यते यत्र समाधिस्तत्र गीयते ॥

(६०) प्रत्यनीकम्

बलिनि प्रतिपक्षे वा तत्पक्षे वा तिरस्कृतिः ।
तत्प्रतिद्वन्द्विसाह्यं वा प्रत्यनीकमितीर्यते ॥

(६१) काव्यार्थापत्तिः

दण्डापूपिकया यत्रार्थान्तरापतनं भवेत् ।
काव्यार्थापत्तिरेषा स्यादलंकारविदां मता ॥
अर्थेन केनचित्तुल्यन्यायादर्थान्तरस्य चेत् ।
आपत्तिः कथ्यते सैषा काव्यार्थापत्तिरुच्यते ॥

(६२) काव्यलिङ्गम्

यत्सामान्यविशेषत्वानालीढं स्यात्समर्थनम् ।
समर्थनीयस्यार्थस्य काव्यलिङ्गं तदुच्यते ॥

(६३) अर्थान्तरन्यासः

समर्थनं विशेषस्य सामान्येनास्य तेन वा ।
आहुरर्थान्तरन्यासं साधर्म्येणेतरेण वा ॥

(६४) विकस्वरः

सामान्येन विशेषस्य क्रियते यत्समर्थनम् ।
पुनस्तस्य विशेषेण स विकस्वर ईर्यते ॥

(६५) प्रौढोक्तिः

यदुत्कर्षानिमित्तस्य तन्निमित्तत्वकल्पनम् ।
प्रौढोक्तिरेषा कथिता जयदेवमुखैर्बुधैः ॥

(६६) सम्भावना

सम्भावनं स्याद्यद्येवं स्यादित्यूहोऽन्यसिद्धये ॥

(६७) मिथ्याध्यवसितिः

मिथ्यार्थोऽन्यः कल्प्यते चेत्किञ्चिन्मिथ्यात्वसिद्धये ।
मिथ्याध्यवसितिर्नाम सालंकृतिरुदाहृता ॥

(६८) ललितम्

धर्मिणि प्रस्तुते वर्ण्यवृत्तान्तोल्लेखनं विना ।
तत्र तत्प्रतिबिम्बस्य वर्णनं ललितं मतम् ॥

(६९) प्रहर्षणम्

विना यत्नादभीष्टार्थसिद्धिस्स्याच्चेत्प्रहर्षणम् ।
अभीप्सितार्थादधिकलाभश्चापि प्रहर्षणम् ॥

उपायसिद्धये यत्ने क्रियमाणे यदृच्छया ।
साक्षात्फलस्य लाभोऽपि प्रहर्षणमितीरितम् ॥

(७०) विषादनम्

यदभीष्टविरुद्धार्थलाभस्तत्स्याद्विषादनम् ।

(७१) उल्लासः

यदन्यगुणदोषाभ्यामन्यस्य गुणदोषयोः ।
आधानं वर्ण्यते प्राहुरुल्लासालंकृतिं तु ताम् ॥

(७२) अवज्ञा

न स्यातां यदि ते ताभ्यां साऽवज्ञालंकृतिर्भवेत् ।

(७३) अनुज्ञा

अनुज्ञा सा गुणौत्सुक्याद्दोषस्याभ्यर्थना यदि ।

(७४) तिरस्कृतिः

गुणस्य दोषसंबन्धाद्दोषश्चेत्सा तिरस्कृतिः ।

(७५) लेशः

गुणो दोषतया दोषो गुणत्वेनाथवा यदि ।
वर्ण्यते तमलंकारं लेशमाहुर्मनीषिणः ॥

(७६) मुद्रा

प्रकृतार्थपरैश्शब्दैर्मुद्रा सूच्यार्थसूचनम् ।

(७७) रत्नावळी

प्रसिद्धसहपाठानामर्थानां न्यसनं यदि ।
रत्नावळी सा विख्याता सक्रमाक्रमताभिदा ॥

(७८) तद्गुणः

स्वगुणस्य परित्यागात्तद्गुणोऽन्यगुणग्रहः ।

(७९) पूर्वरूपम्

स्वगुणस्य पुनः प्राप्तिः पूर्वरूपमितीर्यते ॥
यत्तु स्याद्विकृतेऽप्यर्थे पूर्वावस्थानुवर्तनम् ।
पूर्वरूपं तमप्याहुरलंकृतिविशारदाः ॥

(८०) अतद्गुणः

अतद्गुणं सङ्गतान्यगुणानङ्गीकृतिं विदुः ।

(८१) अनुगुणः

स्वसजातीयगुणवदन्यसांनिध्यतो यदि ।
उत्कर्षः पूर्वसिद्धस्य गुणस्यानुगुणं हि तत् ॥

(८२) मीलितम्

न दृश्यते भेद एव सादृश्याद्यदि मीलितम् ।
वस्तुतुल्येन लिङ्गेन निजेनागन्तुकेन वा ॥
पिधीयते वस्तुना चेन्मीलितं तदुदाहृतम् ॥

(८३) सामान्यम्

न गृह्यते विशेषश्चेत्साम्यात्सामान्यमीरितम् ।
गुणतौल्यविवक्षातः परस्य प्रस्तुतेन यत् ॥
ऐकात्म्यमुच्यते योगात्सामान्यं तदुदीरितम् ॥

(८४) उन्मीलितम्

स्फूर्तौ समानगुणयोर्भेदस्योन्मीलितं विदुः ।

(८५) विशेषकम्

द्वयोर्वैधर्म्यसंस्फूर्तौ तुल्ययोस्स्याद्विशेषकः ।

(८६) उत्तरम्

उन्नीतप्रश्नमथवा निबद्धप्रश्नमुत्तरत् ।
साकूतमुच्यते यत्र तत्रोत्तरमुदीरितम् ॥
चित्रोत्तरमलंकारः प्रश्नाभिन्नोत्तरं भवेत् ।
यत्रोत्तरान्तराभिन्नमुत्तरं तदपीष्यते ॥

(८७) चित्रप्रश्नः

प्रश्नः प्रश्नान्तराभिन्नो यदि वान्यार्थगर्भितः ।
निबध्यते तं कतिचिच्चित्रप्रश्नाख्यमूचिरे ॥

(८८) सूक्ष्मम्

अन्याशयज्ञसाकूतचेष्टितं सूक्ष्ममीर्यते ।

(८९) पहितम्

परवृत्तज्ञसाकूतचेष्टितं पिहितं मतम् ॥

(९०) व्याजोक्तिः

हेत्वन्तरोक्त्या व्याजोक्तिर्यदाकारस्य गूहनम् ।

(९१) गूढोक्तिः

गूढोक्तिरितरोद्देश्यमन्यं प्रत्युच्यते यदि ॥

(९२) विवृतोक्तिः

विवृतोक्तिश्श्लेषगूढं विवृतं कविना यदि ।

(९३) युक्तिः

युक्तिस्स्यान्मर्मणो गुप्त्यै क्रियया परवञ्चनम् ॥

(९४) लोकोक्तिः

लोकोक्तिस्स्यादसौ लोकप्रवादानुकृतिर्यदि ।

(९५) छेकोक्तिः

स्याच्चेल्लोकोक्तिरन्यार्थगर्भा छेकोक्तिरिष्यते ॥

(९६) वक्रोक्तिः

अन्याभिप्रायकान्योक्तमन्यथाऽन्येन योज्यते ।
श्लेषेण यदि काक्वा वा सा वक्रोक्तिरितीर्यते ॥

(९७) स्वभावोक्तिः

जात्यादिस्थस्वभावोक्तिस्स्वभावोक्तिरितीर्यते ।

(९८) भाविकम्

वर्णनादद्भुतार्थस्य वस्तुनी भूतभाविनी ॥
प्रत्यक्षे इव दृश्येते यत्र तद्भाविकं मतम् ।

(९९) उदात्तम्

तदुदात्तं वस्तु यत्र वर्ण्यते सुसमृद्धिमत् ।
अन्योपलक्षकं श्लाघ्यचरित्रं वा निबध्यते ॥

(१००) अत्युक्तिः

अद्भुतातथ्यशौर्यादिवर्णनाऽत्युक्तिरिष्यते ।

(१०१) निरुक्तिः

सा निरुक्तिर्योगतो यन्नाम्नोऽर्थान्तरकल्पनम् ॥

(१०२) प्रतिषेधः

प्रतिषेधः प्रतीतस्य प्रतिषेधस्य वर्णनम् ॥

(१०३) विधिः

सा विध्यलङ्कृतिर्यत्र सिद्धमेव विधीयते ॥

(१०४) हेतुः

साकं हेतुमता हेतुरुक्तश्चेद्धेतुरीरितः ।
केचिद्धेतुमतो हेतोश्चैक्यं हेतुं बुधा जगुः ॥
इत्थं यथामति प्राचामर्वाचां च मतान्यलम् ।
प्रविचार्य शतं साग्रमलङ्कारा निरूपिताः ॥
रसभावतदाभासभावशान्तिनिबन्धनाः ।
रसवत्प्रेयऊर्जस्विसमाहितमिति श्रुताः ॥
अपराङ्गव्यङ्ग्यभेदा ये प्रोक्ताः प्राक्तनैर्बुधैः ।
अलंकारत्वमापन्नाश्चत्वारस्तेऽतिसुन्दराः ॥
भावस्य चोदयस्सन्धिश्शबलत्वमिति त्रयः ।
एवं सप्ताप्यलंकारा निरूप्यन्तेऽपरेऽधुना ॥

(१०५) रसवान्

रसे रसाङ्गे भावाङ्गेऽप्येष्वाहू रसवद्बुधाः ।

(१०६) प्रेयः

यदि भावरसाङ्गत्वं भावस्य प्रेय इष्यते ॥

(१०७) ऊर्जस्वी

भावाङ्गतां रसाभासो भावाभासोऽथवाऽश्नुते ।
यदा तदेयमूर्जास्विनामाऽलंकृतिरुच्यते ॥

(१०८) समाहितम्

समाहितं भावशान्तेर्भावाङ्गत्वे त्वलंकृतिः ।

(१०९) भावोदयः

भावोदयस्य भावाङ्गभावे भावोदयो मतः ॥

(११०) भावसन्धिः

भावाङ्गत्वे भावसन्धेर्भावसन्धिरलंकृतिः ।

(१११) भावशबलता

भावाङ्गे भावशाबल्ये भावशाबल्यमुच्यते ॥
प्रत्यक्षादिप्रमाणानां स्याच्चमत्कारिता यदि ।
तदा प्रमाणालङ्कारानष्टौ प्राहुः परे बुधाः ॥

(११२) प्रत्यक्षम्

अर्थानामिन्द्रियाणां च सन्निकर्षेण यद्भवेत् ।
ज्ञानं तदाहुः प्रत्यक्षं चारु चेत्तदलंकृतिः ॥

(११३) अनुमानम

अनुमानं लिङ्गजन्यलिङ्गिज्ञानमुदाहृतम् ।

(११४) उपमानम्

संज्ञायास्संज्ञिनश्चापि संबन्धप्रत्ययो हि यः ।
सादृश्यज्ञानकरण उपमानं तदुच्यते ॥

(११५) शब्दप्रमाणम्

स शब्दो यत्तु शब्दस्य प्रमाणत्वेन कीर्तनम् ।
श्रुतिस्मृतीतिहासादिरूपः शब्द इतीर्यते ॥

(११६) अर्थापत्तिः

अन्यथाऽनुपपत्त्या यत्किञ्चिदर्थस्य कल्प्यते ।
अर्थान्तरं तां कथयन्त्यर्थापत्तिं विचक्षणाः ॥

(११७) अनुपलब्धिः

यद्योग्यानुपलब्धेस्स्यादभावस्यावधारणम् ।
कृतिनोऽनुपलब्धिं तां रम्यां विदुरलंकृतिम् ॥

(११८) संभवः

सम्भवोऽधिकसद्भावाभ्यूनस्थिरवधारणम् ।

(११९) ऐतिह्यम्

यत्रेतिहोचुरित्याद्यमनिर्दिष्टप्रवक्तृकम् ।
पारम्पर्यं प्रवादस्य तत्रैतिह्यमलंकृतिः ॥

(१२०) संसृष्टिः

अलंकृतीनां सर्वासां यथासंभवमेळने ।
लौकिकानामिवैतासां चारुताशियेक्षणात् ॥
नरसिंहप्रक्रियया भात्यलंकारता पृथक् ।
अतस्तन्निर्णयं प्राचां मतेनात्राभिदध्महे ॥
तिलतण्डुलससंसर्गरीत्या यत्रेतरेतरम् ।
संसृज्येरन्नलंकारास्सा संसृष्टिरितीर्यते ॥
शब्दालंकारयोरर्थालंकृत्योश्च परस्परम् ।
उभयोरपि संसृष्टिरिति सा त्रिविधा मता ॥

(१२१) सङ्करः

यत्रान्योन्यमलंकाराः क्षीरनीरनयादमी ।
संकीर्येरन् संकरोऽयमिति काव्यविदो विदुः ॥
सोऽयमङ्गाङ्गिभावेन समप्राधान्यतस्तथा ।
संदेहेन तथा चैकवाचकानुप्रवेशतः ॥
चतुर्धा सङ्करः प्रोक्तश्श्रीमदप्पयदीक्षितैः ।
एवं नृसिंहाकृतयः पञ्चालंकृतयो मताः ॥

### अङ्गाङ्गिभावसङ्करः

अप्रधानालंक्रियया प्रधानालंक्रिया यदि ।
उज्जीव्येत तदाऽङ्गाङ्गिभावसंङ्कर इष्यते ॥

### समप्राधान्यसंकरः

अन्यालंकारगर्भैर्वोन्नयते काऽप्यलंकृतिः ।
अन्यया तुल्यकालं चेत्समप्राधान्यसङ्करः ॥
ऐककालिकताभावेऽप्यलंकारद्वयं यदि ।
एकेनोन्नयते सोपि समप्राधान्यसंकरः ॥

### संदेहसंकरः

साधकं बाधकं वाऽपि यत्रान्यतरसङ्ग्रहे ।
प्रमाणं नैव दृश्येत स्यात्स संदेहसंकरः ॥

### एकवाचकानुप्रवेशसङ्करः

अभिन्नपदबोध्यास्स्युर्नानालंकृतयो यदि ।
तदैकवाचकानुप्रवेशसंकर इष्यते ॥
अर्थयोश्शब्दयोश्शब्दार्थयोर्वाऽप्येकवाचके ।
अनुप्रवेशतस्सोऽयं त्रिविधः परिकीर्तितः ॥

### (१९२) शब्दालङ्कारः

इत्थमर्थालंकृतयो यथामति निरूपिताः ।
निरूप्यन्तेऽथ दिङ्मात्रं शब्दालंकृतयः क्रमात् ॥
साम्यं व्यञ्जनमात्रस्य वर्णानुप्रास ईरितः ।
द्विधा भवेदयं छेकवृत्त्यनुप्रासभेदतः ॥

### छेकानुप्रासः

छेकानुप्रासमाहुर्यत्साम्यं व्यञ्जनयोस्सकृत् ।
द्वयोर्द्वयोर्व्यञ्जनयोर्युग्मयोर्या निरन्तरा ।
आवृत्तिः क्रियते सोयं छेकानुप्रास ईर्यते ॥

### वृत्त्यनुप्रासः

उल्लङ्घ्य सङ्ख्यानियमं पौनरुक्त्यं भवेद्यदि ।
एकद्वित्र्यादिवर्णानां वृत्त्यनुप्रासमूचिरे ॥

### लाटानुप्रासः

तात्पर्यमात्रभिन्ना या शब्दार्थपुनरुक्तता ।
सोऽयं शाब्दः काव्यविद्भिर्लाटानुप्रास ईर्यते ॥
वाक्यावृत्तौ पदावृत्तौ नामावृत्तौ च तद्विधा ।
समासैक्ये तद्धितायां स्यात्समासासमासयोः ॥
नामावृत्तौ पुनस्त्रेधा लाटानुप्रास ईरितः ।
पञ्चप्रकार एवं च लाटानुप्रास ईरितः ॥

### यमकम्

अनर्थका वा भिन्नार्थास्सार्थकानर्थकाश्च वा ।
क्रमादावर्तिता वर्णा यदि तद्यमकं भवेत् ॥
श्लोकार्धपादतद्भागावृत्त्या स्यात्तच्चतुर्विधम् ।
आवृत्तावाद्यपादादेर्द्वितीयादौ भिदा नव ॥
द्विधा विभागे पादानां प्रथमाद्यादिमा यदि ।
द्वितीयाद्यादिभागेषु यम्यन्ते स्युर्भिदा दश ॥
प्रथमाद्यन्तिमा भागा द्वितीयाद्यन्तिमांशगाः ।

भवेयुश्चेत्तदाऽपि स्युरेवमेव भिदा दश ॥
एवं द्विधा विभागे तु भेदानां विंशतिर्भवेत् ।
त्रिधा पादविभागे तु त्रिंशदित्यूह्यतां क्रमात् ॥
एवमन्त्यादिकाद्यान्तमध्यादीन्यादिमध्यगम् ।
अन्त्यमध्यं च मध्यान्त्यमेतेषां च समुच्चयाः ॥
एकैकपादे नियता नियतक्रमशालिनः ।
यम्यन्ते चेदादिमध्यान्तभागास्तद्भिदाश्शतम् ॥

पुनरुक्तवदाभासः

पुनरुक्तवदाभाति यत्रार्थो न तु वस्तुतः ।
पुनरुक्तवदाभासस्स नामाख्यातगोचरः ॥
शब्दैकनिष्ठश्शब्दार्थद्वयस्थश्चेत्यसौ द्विधा ।
सभङ्गाभङ्गभेदेन द्विधा शब्दैकसंश्रयः ॥

अपशब्दवदाभासः

निवर्तते साधुभावज्ञानाद्यत्रापशब्दधीः ।
अपशब्दवदाभासस्सोलंकारो निगद्यते ॥

अव्ययाभासः

पदानां सुप्तिङन्तानामन्यार्थानां निगुम्भने ।
यथाऽव्ययवदाभासश्चित्रं तन्नाम तद्विदुः ॥

तिङन्तवदाभासः

यत्राभासस्तिङन्तानां स्यादर्थान्तरगैः पदैः ।
तत्तिङन्तवदाभासचित्रं चित्रज्ञसंमतम् ॥

गूढपादचित्रम्

अन्यपादगता वर्णा गूढाः पादान्तरेषु चेत् ।
चित्रं तत् गूढपादाख्यं चतुर्थाद्यादिगूहनात् ॥

क्रियावञ्चनाचित्रम्

क्रियादिकं विद्यमानमपि सन्दर्भकौशलात् ।
स्पष्टं न दृश्यते चेत्तत्क्रियादेर्वञ्चनं विदुः ॥

सप्तविभक्तिवञ्चनचित्रम्

यत्रैकस्यैव शब्दस्य गुप्तास्सप्त विभक्तयः ।
तत्र सप्तविभक्तीनां वञ्चनं चित्रमुच्यते ॥

स्वरस्थानव्यञ्जनादिनियमचित्रम्.

स्वरस्थानव्यञ्जनानां नियमो दुष्करो हि यः ।
प्रोक्तश्चतुःप्रभृत्येष दर्श्यते सुकरः परः ॥

अपुनरुक्तव्यञ्जनचित्रम्

व्यञ्जनानां कखादीनां यत्रावृत्तिर्न दृश्यते ।
चित्रमेतद्विजानीयात्तदनावृत्तवर्णकम् ॥

पद्मादिचित्राणि

पद्माद्याकारमापन्ना वर्णाश्चित्रमुदाहृतम् ॥

षोडशदलपद्मम्

एकं यदि भवेत्सर्वमेकान्तरितमक्षरम् ।
तत्पद्मं षोडशदलं कर्णिकाश्लिष्टवर्णकम् ॥

द्विचतुष्कम्

बहिरन्तर्मण्डलस्थं तावत्कोष्ठविहारि यत् ।
कोणाष्टकयुतं तच्च द्विचतुष्कं विदुर्बुधाः ॥

गोमूत्रिका

तत्रायुग्माक्षरैश्श्लिष्टा यदि युग्माक्षरैस्तु वा ।
गोमूत्रिकेति विख्यातिमिदमेव भजेत्तदा ॥
एकान्तरं तु वर्णानामेकरूपत्वमर्धयोः ।
गोमूत्रिकाख्यं चित्रं तदाहुश्चित्रविदो बुधाः ॥

गवाक्षबन्धः

उपर्युपरि कोष्ठानि भवेयुर्नव मध्यतः ।
तिर्यक्कोष्ठान्यपि तथा भवेयुर्मध्यतो नव ॥
उभयोरनयोः पार्श्वद्वये कोष्ठान्यनक्रमात् ।
सप्त पञ्च तथा त्रीणि निष्पद्येरन्यथा तथा ॥
तुल्यप्रमाणा विलिखेत्तिर्यगूर्ध्वं च रेखिकाः ।
मध्यवीथीशिरःकोष्ठादारभ्य विलिखेद्बुधः ॥
एकं त्रीन्पञ्च सप्ताथ नव सप्त च पञ्च च ।
त्रीनेकं चेति पद्यस्य वर्णांस्तिर्यगनुक्रमात् ॥
ऊर्ध्वमध्यमवीथीस्थवर्णैः प्रमिलितैः क्रमात् ।
स्वोद्देश्यकविकाव्यादिनाम्नामुद्धृतिरिष्यते ॥
गवाक्षो नाम बन्धोऽयं सरलः कविसम्मतः ॥

समाप्ता अलंकारमणिहारलक्षणश्लोकाः.

